गङ्गानाथझा-ग्रन्थमाला
( ३ )

# भक्तिरत्नावली

श्रीविष्णुपुरीकृतकान्तिमालाव्याख्यासहिता

सम्पादकोऽनुवादकश्च
डॉ० श्रीकृष्णमणित्रिपाठी
व्याख्याता
पुराणेतिहासविभागः
वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी

वाराणस्याम्
१८९० तमे शकाब्दे

# प्रास्ताविकम्

अथेदानीं भक्तिरत्नावलीनामा श्रीमद्भागवतस्थभक्तिप्रतिपादकपद्यानां संग्रहात्मकोऽपूर्वो ग्रन्थो भगवतत्त्वजिज्ञासूनां विपश्चितामन्येषां च कृते प्राकाश्यं नीयते। भक्तमण्डलीषु विश्रुतो नानाप्रान्तेषु देशीभाषानुवादमण्डितः प्रकाशितचरोऽपि ग्रन्थोऽयं परीक्षासु विविधासु पाठ्यग्रन्थरूपतामपि भजन् दौर्लभ्येन छात्राणामुपकृतये नाभूदिति हेतोरत्र वैशद्येन हिन्दीभाषानुवादसत्कृतः प्रकाश्यते।

अस्य संग्रहग्रन्थस्य प्रणेताऽऽसीद् विष्णुपुरीति नाम्ना ख्यातः कोऽपि श्रीमद्भागवतरसरसिकः परमहंसवर्यः। तस्य देशकालमनुरुध्य किञ्चिद् विचारयामः। ग्रन्थेऽस्मिन् कुत्रापि स्वीयदेशकालसम्बद्धः कोऽपि समुल्लेखो नैव व्यधायि ग्रन्थकारेणेति नितान्तं विषादस्यावसरः। केवलं ग्रन्थस्य पुष्पिकायां विरचनेति ख्याते प्रतिपरिच्छेदे स आत्मानं 'श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोल्लसद्विवेकतैरभुक्तपरमहंस' इति शब्देन व्यपदिशति। तेनेदं तथ्यद्वयं स्फुटीभवति—( क ) तस्य गुरोर्नाम पुरुषोत्तम आसीत्, तथा ( ख ) तस्य मूलस्थानं तिरभुक्तीति नाम्ना ख्यातो मिथिलाप्रदेश आसीदिति। अन्यच्च तस्य चरितविषये हिन्दीभाषायां निबद्धे भगवद्भक्तिपरायणभक्तप्रवराणां जीवनचरितात्मके नाभादासेति विश्रुतनामधेयेन केनापि महात्मना विरचिते भक्तमालेति ख्याते काव्यग्रन्थे हिन्दीमयी षट्पदीयं ( छप्पय ) श्लाघनीया विराजते। सा चेत्थं विलसति—

> भगवद्धर्म प्रधान आन कछु धर्म न देखा।
> पीतर पटतर विगत निकश ज्यों कुन्दन रेखा।
> कृष्णकृपा की बेलि फलित सत्संग दिखायो।
> कोटि ग्रन्थ को सार त्रयोदश विरचन गायो।
> महासिन्धुभागौत तें भक्तिरत्नराजी रची।
> कलिजीव जँजाली कारणै, विष्णुपुरी बड़निधि सँची[१]॥

अनया तु स्पष्टं प्रतीयते यत् त्रयोदशविरचनात्मको भक्तिरत्नराजी ( अर्थात् भक्तिरत्नावलिः ) ति ग्रन्थो विष्णुपुरीमहाभागेन महासिन्धुरूपात् श्रीमद्भागवताद् निर्मथ्य निष्कासित इति।

---

१. काशीतः प्रकाशिते भक्तमालेति ग्रन्थे ४७ संख्यकषट्पदीयम्, १९६५ ई० ॥

अस्या षट्पद्याष्टीकेयं व्यरचि श्रीप्रियादासनाम्ना सन्तप्रवरेण—

जगन्नाथपुरी माँहि बैठे महाप्रभुजी वे,
चहुँ ओर भक्तभूप भीर अति छाई है।
बोले कोऊ विष्णुपुरी काशी मध्य रहे जाते,
जानियत मोक्ष चाह नीके मन आई है।
लिखी प्रभु चीठी आप मणिगण माला एक
दीजियै पठाय मोहि लागै सो सुहाई है।
जान लई बात निधि भागवत रत्न दाम
दई है पठाय मुक्ति खोद के बहाई है॥

प्रियादासश्चैतन्यमतानुयायी महात्माऽऽसीदिति तु निश्चितम्। तेन स स्वसाम्प्रदायिकीर्वार्ताः स्पष्टं व्यजानादिति नूनमुन्नेतुं पार्यते। तस्य टीकया प्रतीयते यद् महाप्रभुचैतन्यदेवस्य निदेशेनैव विष्णुपुरी ग्रन्थरत्नमिदं श्रीमद्भागवतस्य साररूपेण सङ्कलयामास। अतो विष्णुपुरीस्वामिनश्चैतन्य-देवस्य च समसामयिकत्वं स्फुटं परिज्ञायते। चैतन्यदेवो नवद्वीपे १५४२ वैक्रमसंवत्सरे (१४८६ ई०) जनिमलभत। नीलाचले जगन्नाथपुर्यां भगवत्सन्निधौ च १५९० वैक्रमाब्दे (१५३३ ई०) सायुज्यं प्रापेति नूनं वदन्ति इतिहासज्ञाः। विक्रमस्य षोडशशताब्द्या उत्तरार्ध-मेव चैतन्यमहाप्रभूणां कालः। स एव कालो विष्णुपुरीस्वामिनामपीति निश्चेतुं पार्यतेऽस्माभिः। इत्येकः कल्पः केषाञ्चन वङ्गीयानां विदुषाम्।

अपरः कल्पोऽपि प्रस्तूयते। अस्य ग्रन्थस्य समाप्तौ पद्यत्रयं समुपलभ्यते[1]। एकस्मिन् पद्ये कान्तिमालाख्यायाष्टीकायाः समुपरचनं श्रीधरस्वामिवचनानुसारेणेति निगद्यते। द्वितीयपद्ये वाराणस्यां महेशस्य सान्निध्ये हरिमन्दिरे कस्मिन्नपि कान्तिमालया सह भक्तिरत्नावली सिद्धेति द्योत्यते। अन्तिमे पद्ये विरचनकालः १५५५ शकसंवत्सरः समुल्लिख्यते (१६३३ ई०)। केषाञ्चन वङ्गीयपण्डितानामयमाग्रहो यत् पद्यत्रयमेतन्न मौलिकम्, अपि तु केनापि लेखकान्तरेण समुप-लब्धम्। परन्तु तथ्यस्यास्य बाधकमपि प्रमाणं वर्तत एव। त्रयोदशविरचनस्य (त्रयोदशपरि-च्छेदस्य) अन्तिमपद्यस्य टीका तथ्यमिदमाविष्कुरुते यदयं ग्रन्थकारो ग्रन्थनिर्माणस्थाने एक एकाकी शिष्यगुर्वादिगोष्ठीप्रतिष्ठारहितः परदेशवासी चासीदिति। तथा च—'एष स्यामहमल्पबुद्धिविभवोऽप्येकोऽपि कोऽपि ध्रुवम्' इति (१३।१३) पद्यस्य टीकायां ग्रन्थकारो

१. एतदर्थं ग्रन्थस्यैतस्य (१९७) पृष्ठमवलोकनीयं यत्रैतानि (१४-१६) त्रीण्यपि पद्यानि विराजन्तेतराम्।

वक्ति—"एकोऽपि शिष्यगुर्वादिगोष्ठीप्रतिष्ठात्याज्यत्वमपि परदेशाप्रसिद्धकुलशीलादिरपि स्यामेव।" एतेन तस्य परदेशे भक्तिरत्नावल्या निर्माणं ध्रुवं द्योत्यते। अन्यच्च द्वितीयपद्यस्योत्तरार्धे "भक्तिरत्नावली सिद्धा सहिता कान्तिमालया' इत्यत्र सिद्धेति पदं समाप्तिमेवाभिव्यनक्ति, न तु लेखनमात्रम्। अतः पद्यत्रयमेतद् विष्णुपुरीरचितमेवेति प्रतीयते। फलतः काश्यामेव विश्वेश्वरसन्निधौ हरिमन्दिरे ग्रन्थरत्नमेतत् १५५५ शाके ( =१६३३ ई० ) समाप्तिमफाणीदिति। अतः श्रीचैतन्यदेवेन सह ग्रन्थकर्तुः समसामयिकत्वं नैवोपपद्यते, शतवर्षेभ्यः पूर्वं तस्य श्रीजगन्नाथसन्निधौ सायुज्यमुक्तिलाभात्। अयमेव कल्पो गरीयानीति प्रतीमः।

भक्तिरत्नावलीयं श्रीमद्भागवतस्थभक्तिपरकपद्यानां संग्रहरूपोऽयं ग्रन्थ इति प्रागेव निवेदितम्। इतः पूर्वं द्वादशशताब्द्यां श्रीवोपदेवोऽपि श्रीमद्भागवतस्थपद्यानां संग्रहात्मकं ग्रन्थं मुक्ताफलेति नाम्ना प्रकटीचकार। संकलनरूपतायामप्युभयोः पार्थक्यं दरीदृश्यते। मुक्ताफले रसवैशिष्ट्यमवलम्ब्य वर्तते भागवतपद्यानां संग्रहः। भक्तिरत्नावल्यां तु भक्तिवैशिष्ट्यमनुरुध्य विद्यते भागवतपद्यानां संकलनमिति संकलनपरिपाटीवैभिन्न्यमुल्लसति। अस्मिन् ग्रन्थरत्ने वर्तन्ते त्रयोदश विरचनानि ( अध्यायाः )। तत्र प्रथमे विरचने भक्तिसामान्यनिरूपणम्। द्वितीये भक्तिहेतुनिरूपणम्। तृतीये भक्तिभेदनिरूपणम्। चतुर्थविरचनादारभ्य द्वादशविरचनं यावद् नवधाभिन्नाया भक्तेः क्रमशः [१]श्रवण-[२]कीर्तन-[३]स्मरण-[४]पाद सेवना[५]र्चन-[६]वन्दन-[७]दास्य-[८]सख्या-[९]त्मनिवेदनभेदान् साधु निरूप्य अन्तिमे त्रयोदशे विरचने शरणागतिं प्रतिपादयति ग्रन्थकारः, भक्तेस्तत्रैव चरमावसानात्। विष्णुपुरी पद्यरत्नमिदं श्रीभागवतस्य सारमाकलयति—

चिरमिह वृजिनार्तस्तप्यमानोऽनुतापै-
रवितृषषडमित्रो लब्धशान्तिः कथञ्चित्।
शरणद समुपेतस्त्वत्पदाब्जं परात्मन्
अभयमृतमशोकं पाहि मापन्नमीश॥

( भाग० १०।५१।४७ )

विषयेऽस्मिन् श्रीमद्भागवतं शरणागतिपरायणं गीताशास्त्रं सर्वात्मनानुसरति। शरणागतिरेव भक्तिशास्त्रस्य चरमं तत्त्वमित्यत्र नास्ति संशीतिलवोऽपि। श्रीनारायण एव जीवानां शरणम्। यदा जीवानां भगवतो वियोगः समपद्यत, तदैव संसृतिः प्रादुर्भूता। यदा जीवाः स्वमूलस्थानं भगवच्चरणं शरणं समुपयान्ति, तदैव मुक्तिः प्रादुर्भविष्यति, अत एव जीवानां भगवच्चरणाद् गमनं संसारः। पुनश्च तत्रैव आगमनं मोक्षः। शरणागतिशब्दस्येदं रहस्यं विद्वद्भिर्ध्रुवमुन्नेयमिति दिक्।

भक्तिरत्नावलीमिमां हिन्दीभाषानुवादेनालंकृत्य भक्तिशास्त्रस्य तत्त्वविवेचिकां भूयसीं प्रस्तावनां च विलिख्य वाराणसेयसंस्कृतविश्वविद्यालयस्य पुराणेतिहासविभागे प्राध्यापकपदभाजः श्रीकृष्णमणित्रिपाठिमहाभागा भक्तितत्त्वजिज्ञासूनां भृशमुपकारमकार्षुरित्यत्र न किमपि बहु-वक्तव्यं नाम। स्थानाभावात् संक्षिप्तैव भूमिकाऽत्र प्रकाश्यते। सा तु नितान्तं प्रामाणिकी पाण्डित्यपूर्णा भक्तितत्त्वसमुद्दीपनी च विराजतेतराम्। तदर्थं त्रिपाठिमहोदयानाशीर्वचनै-रनल्पैः संभूष्य समभ्यर्थये यत् ते एवंभूतान्यान्यपि ग्रन्थरत्नानि समुद्धरिष्यन्तीति।

ग्रन्थोऽयं विद्वज्जनानामपि हृदये श्रीभगवद्विग्रहरूपिणि श्रीमद्भागवते परमां प्रीतिमुल्ला-सयेदिति लक्ष्मीजानिं नारायणं भूयो भूयः समभ्यर्थ्य वक्तव्यमिदं समाप्तिं नयामि।

कुतोऽशिवं त्वच्चरणाम्बुजासवं
महन्मनस्तो मुखनिःसृतं क्वचित्।
पिबन्ति ये कर्णपुटैरलं प्रभो
देहंभृतां देहकृदस्मृतिच्छिदम्॥
(भाग० १०।८३।३)

वाराणसेयसंस्कृतविश्वविद्यालयः,
वाराणसी
रथयात्रा, सं० २०२५
दि० २७-६-६८

**बलदेव उपाध्यायः**
अनुसन्धानसंस्थानसञ्चालकः

# भूमिका

सृष्ट्वाऽखिलं जगदिदं सदसत्स्वरूपं
शक्त्या स्वया त्रिगुणया परिपाति विश्वम् ।
संहृत्य कल्पसमये रमतेऽद्वितीयः
तं सर्वसंश्रयममुं मनसा स्मरामि ॥

आनन्दघनसच्चिदानन्दस्य नन्दनन्दनस्य व्रजेन्द्रस्य भगवतः श्रीकृष्णचन्द्रस्यानुकम्पया भागवतानां तद्भक्तानां हिताय भक्तितत्त्वजिज्ञासूनां सुधियां सौविध्याय च मया भक्तिरत्नावल्याः सम्पादनस्य शुभावसरो लब्ध इत्यस्ति मे महत्सौभाग्यम् ।

## भक्तिरत्नावलीनिर्माणकारणम्

भक्तिरत्नावली हि भगवद्भक्तानामतिप्रियं वस्तु विद्यते । यतोऽस्याः सङ्कलनस्य सुयोगः श्रीकृष्णचैतन्यमहाप्रभूणामभिलाषेण संबद्धोऽस्ति । भक्तजनेषु भक्तिरत्नावलीनिर्माणस्य कारणद्वयं प्रचलितमस्ति । तत्रैकं कारणमेवमस्ति–श्रूयते १४०७ शके नवद्वीपे आविर्भूतैः श्रीगौराङ्गचैतन्य-महाप्रभुभिः सह गोस्वामिनः परमहंसश्रीविष्णुपुरीजीमहाराजस्य साक्षात्कारो ज्ञानप्रकाशिकाया-मस्यां काशिकायामेव जात आसीद् यदा ते तीर्थयात्राप्रसंगेनात्रागता आसन् । कालान्तरे जगन्नाथपुरीपरिसरे विराजमानेषु महाप्रभुषु गोस्वामिनो विष्णुपुरीजीमहाराजस्य काश्चिकः कश्चन शिष्यस्तीर्थाटनं कुर्वाणो महाप्रभोर्भक्तशिरोमणेर्दर्शनार्थं जगन्नाथपुरीमुपस्थाय कृत-साक्षात्कारः कुशलानन्तरं प्रभुचरणेषु प्रार्थितवान्—पूज्यपादाः! पुरीमहोदयेन श्रीमन्तः सादरं निवेद्यन्ते यच्छ्रीमन्तो येत्किमपि वाञ्छेयुस्तद्भवद्योग्यं काशीतोऽहमुपहारीकुर्यामिति, तदुपधार्य तैरुक्तं यदेका रत्नावली मदर्थं प्रेषणीया । तदानीं तत्रोपविष्टा वैष्णवा विस्मिताः सन्तः संसार-त्यागिनां महाविरक्तानां महाप्रभूणां रत्नावलीयाचनेऽकिञ्चनस्य संन्यासिनो विष्णुपुरीजी-महाराजस्य स्थितावौचित्यानौचित्यं च तर्कयन्तोऽपि न किमप्यवोचन् । वाराणसेयो दर्शनार्थी यात्री तु ततः प्रस्थाय काशीमुपेत्य गोस्वामिनं परमहंसश्रीविष्णुपुरीजीमहाराजं तदभ्यधात् । तदभि-प्रायमवबुध्य तदनुसारं भक्तिरसप्रधानस्य वैष्णवानां परमप्रियस्य पुराणतिलकस्य श्रीमद्भागवतस्य सम्यगालोडनं विधाय भक्तिरत्नावलीमिमां निर्माय विष्णुपुरीजीमहाराजेन महाप्रभूणां सविधे तद्द्वारैव सबहुमानं सा प्रहिता । प्राप्येप्सितां तां रत्नावलीं महता प्रेम्णा ससम्मानं कण्ठे कृत्वा

शिरसि निधाय च महाप्रभुमहाराजा आनन्दमहोदधौ मग्ना जाताः, उक्तवन्तश्च सगद्गदया वाचा—यादृशी रत्नावली मयाऽभिलषिता तादृश्येव प्राप्ता। ततः

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम्॥९।२७॥

इति श्रीमद्भगवद्गीतायां भगवद्वचनानुसारेण महाप्रभुभिः सा श्रीजगन्नाथचरणयोः सादरं समर्पिता, यतस्तैस्तदर्थमेव सा ( रत्नावली ) याचिताऽऽसीत्।

द्वितीयं कारणं त्वेवमाकर्ण्यते यत्स्वयं भगवता जगन्नाथेन परमहंसश्रीविष्णुपुरीजी-महाराजाय भक्तिरत्नावलीनिर्माणस्यादेशः प्रदत्तः। तदनुसारं संकलय्येयं भक्तिरत्नावली भगवतो जगन्नाथस्याङ्घ्रिकमलयोः सबहुमानमुपहारीकृता पुरीजीमहाराजेन।

## भक्तिरत्नावलीस्वरूपम्

श्रीमद्भागवतं हि भगवद्भक्तेरस्ति महासागरः, यं मथित्वा गोस्वामिना परमहंस-श्रीविष्णुपुरीजीमहाराजेन तत एकैकं भक्तिपरकं पद्यरत्नं संगृह्य भक्तिरत्नावलीयं संग्रथिता। सेयमस्ति भक्तिरत्नावली श्रीमद्भागवतीय-तत्तत्स्कन्धाध्यायेषु प्रसिद्धानां भक्तिविषयकश्लोकानां संग्रहरूपा। भक्तिरत्नावल्याः संकलनमेवंविधया भावग्राहिण्या मनोरमया शैल्या संजातमस्ति यदियं भक्तिशास्त्रस्यैकः स्वतन्त्रो ग्रन्थ एव सम्पन्नः। यस्याध्ययनेन भक्तेः साङ्गोपाङ्गं स्वरूपं सहसा सम्मुखे समुपतिष्ठते। सेयं भक्तिरत्नावली त्रयोदशसु विरचनेषु विभक्ता वर्तते। तत्र प्रथमे ११६, द्वितीये ६४, तृतीये ३२, चतुर्थे ४५, पञ्चमे ५७, षष्ठे २६, सप्तमे ३२, अष्टमे ९, नवमे ४, दशमे ४, एकादशे २, द्वादशे २ त्रयोदशे च विरचने १६। सङ्कलनया सन्ति नवोत्तरचतुः-शतश्लोकाः। तत्र भक्तिरत्नावल्यां विष्णुपुरीविरचिताः केवलं दशैव श्लोकाः सन्ति, येषु प्रथम-विरचनस्य मङ्गलाचरणानन्तरं सन्ति चत्वारः ( ६-९ ) षट् च ( ११-१६ ) सन्ति त्रयोदश-विरचनस्यान्तिमे भागे, द्वौ श्लोकौ हरिभक्तिसुधोदयस्य, अवशिष्टा सप्तनवत्युत्तरत्रिशतानि ( ३९७ ) सन्ति श्रीमद्भागवतस्य। ( समष्टौ १०+२+३९७=४०९ श्लोकाः )।

### १—प्रथमे विरचने

श्रीमद्भागवतीयपद्येन मङ्गलाचरणानन्तरं निजनिर्मितैः पद्यैर्ग्रन्थनिर्माणप्रयोजनं निर्दिश्य भगवति वासुदेवेऽनन्यया भक्त्या मनसः प्रसादाद् विषयेषु वैराग्योदयेनात्मज्ञानसम्भवात् श्रेयोऽर्थिभिर्भगवतो वासुदेवस्य भजनमेव परमार्थतः श्रेयस्करमित्यभिप्रेत्य तत्र प्रवृत्त्यर्थं साध-कानां समुद्बोधनाय तावद्भक्तिसामान्यं निरूपयितुं विविधश्रीमद्भागवतश्लोकानामस्ति सङ्कलनम्।

### २—द्वितीये विरचने

करुणाकल्पवल्ली-श्रीनारायणोपलब्धौ सत्सङ्ग एवास्ति मुख्यो हेतुः। सतां सङ्गत्या एव भवति भगवद्भक्तिरसास्वादनोन्मुखी प्रवृत्तिः। अतः सत्सङ्गस्य सर्वतः श्रेयस्करत्वमित्यभिसन्धाय सत्सङ्गस्य महिमानं दर्शयितुं सत्सङ्गविषयकश्लोकानां वर्तते संग्रहः।

### ३—तृतीये विरचने

आनन्दकन्दसच्चिदानन्दस्य परमकृपालोः परमात्मनः प्राप्तौ नवविधानां भक्तीनां प्राधान्यमित्यभिप्रेत्य ता दर्शयितुं नवविधभक्तिप्रतिपादकानां श्रीमद्भागवतपद्यानां संग्रहः।

### ४—चतुर्थे विरचने

विश्वस्मिन् जगति सर्वोऽप्यनर्थो दुर्वासनामूलक एव भवति। स च भगवल्लीलागुणगानश्रवणेनैव निवर्तत इत्यभिप्रेत्य वैधीभक्तेर्नवानामप्यङ्गानां श्रवणकीर्तनादीनामुपदेशानुसारं प्रथमं तावत् श्रवणभक्तिपरकश्लोकानां संग्रहः।

### ५—पञ्चमे विरचने

सर्वधर्मेषु हरिकीर्तनं श्रेष्ठतममित्यभिप्रेत्य भगवद्गुणकीर्तनस्य स्पृहणीयतया बहूनां कीर्तनभक्तिविषयकाणां श्लोकानां संग्रहः।

### ६—षष्ठे विरचने

भगवत्स्मरणशीला एव जायन्ते कृतार्था इति प्रदर्शयितुं स्मरणभक्तिविषयकश्लोकानां सङ्कलनम्।

### ७—सप्तमे विरचने

भगवत्पादारविन्दसेवनं सर्वोपकारकं सर्वफलदायकं चेत्यभिसन्धाय पादसेवनभक्तिपरकाणां श्लोकानां संग्रहः।

### ८—अष्टमे विरचने

यथा वृक्षस्य मूले सेचनेन तदीयस्कन्दनालभुजशाखोपशाखापत्रपुष्पादयः सर्वेऽपि सिक्ता भवन्ति, तथैव भगवत्पूजया सर्वेषां देवानां पूजा कृता भवतीति बोधयितुमर्चनभक्तिविषयकाणां श्लोकानां सङ्कलनम्।

### ९—नवमे विरचने

भगवच्चरणारविन्दवन्दनप्रवृत्तिः सर्वतो मङ्गलकरीति निरूपयितुं विभिन्नानां वन्दनभक्तिपरकश्लोकानां सङ्कलनम्।

१०—दशमे विरचने

भगवतो दासा एव सन्ति सर्वथा कृतार्था इति दर्शयितुं दास्यभक्तिविषयकश्लोकानां संग्रहो विहितः।

११—एकादशे विरचने

भगवत्सखा महाभाग्यवन्तो भवन्ति। तेषां महिमानं सौभाग्यं वा वक्तुं ज्ञातुं च न कोऽपि पारयतीति प्रदर्शयितुं सख्यभक्तिपरकपद्यानां संग्रहः।

१२—द्वादशे विरचने

परमप्रेमास्पदे भगवति वासुदेवे निवेदितात्मनो भक्तशिरोमणेर्भगवत्कृपया सर्वोऽपि पुरुषार्थः सम्भवतीति सिद्धान्तयितुमात्मनिवेदनभक्तिपरकश्लोकानां संग्रहः।

१३—त्रयोदशे विरचने

आत्मज्ञानविहीनानां सर्वसाधनहीनानां साधकानां परमकृपालुभगवच्चरणशरणमेव श्रेयस्करमिति निर्देष्टुं शरणागतिभक्तिपोषकाणां पद्यानां संग्रहानन्तरं भक्तिरत्नावलीसङ्कलयितुः परमहंसविष्णुपुरीमहाराजस्यात्मनिवेदनमङ्कितम्।

पुराणानुसारं मोक्षसाधनोपायत्वेन प्रसिद्धानामपि योग-ज्ञान-कर्म-भक्तीनां भक्तेरेव प्राशस्त्यं सयुक्तिकं प्रतिपादितमस्ति, यतो हि करालेऽस्मिन् कलिकाले सकलं कर्मादिकं कर्तुमसमर्थानां मन्दमतीनामल्पशक्तीनामल्पायुषां च मनुष्याणां मनसः प्रसादाय चित्तप्रशान्तये परमानन्दप्राप्तये च भक्त्यतिरिक्तः कश्चन अन्यः सुगमो मार्गो न विद्यते। तदेवं श्रीमधुसूदनसरस्वतीनिर्मित-भक्तिरसायनवद् विशुद्धभक्तिसिद्धान्तप्रतिपादयित्री श्रीशङ्कराचार्य-वल्लभाचार्य-रामानुजाचार्य-मध्वाचार्य - निम्बार्काचार्य - चैतन्यमहाप्रभु - गौडीयादिसम्प्रदायसम्मतमतमभिव्यञ्जयन्ती भक्तेः सरसरसप्रवाहं प्रसारयन्ती नवविधां श्रवणादिभक्तिं बोधयन्ती एषा भगवद्भक्तिरत्नावली सततं साधयति भक्तिरहस्यजिज्ञासूनां पुंसामन्तःकरणानि भगवदुन्मुखानीति केषां सचेतसां न परमप्रमोदाय प्रकल्पेत। अतो भक्तिरत्नावल्यां श्रीमद्भागवतस्य भक्तिविषयिणीनामुक्तीनां संकलनं विधाय वैष्णवभक्तसमाजस्य भक्तिसम्प्रदायस्य च महानुपकारः कृतः श्रीविष्णुपुरीमहाराजेन।

## सङ्कलयितुः परिचयः

श्रीमान् गोस्वामी परमहंसश्रीविष्णुपुरीजीमहाराजो विहारप्रान्ते मिथिलायां (तिरहुत) तरुवनी (तरौनी) ग्रामे लब्धद्विजाग्रजन्मा आसीत्। पश्चात् काश्यां सन्यासं गृहीत्वाऽतिष्ठत्।

तत्रैव भगवतो विश्वेश्वरस्य सन्निधावेकस्मिन् हरिमन्दिरे स्थितोऽयं भक्तिरत्नावलीमिमां संकलय्य तत्र कान्तिमालानाम्नीं महत्त्वशालिनीं टीकां चालिखत्। तथा चोक्तं तेनैव स्वय भक्तिरत्नावल्या अन्ते—

वाराणस्यां महेशस्य सान्निध्ये हरिमन्दिरे।
भक्तिरत्नावली सिद्धा सहिता कान्तिमालया ॥१३–१५॥
महायज्ञ–शर–प्राण–शशाङ्कगणिते शके।
फाल्गुने शुक्लपक्षस्य द्वितीयायां सुमङ्गले ॥१३–१६॥

केषुचित् पुस्तकेष्वन्तिमास्त्रयः १४-१६ श्लोका नोपलभ्यन्ते, यत्र ग्रन्थरचनायाः समयः १५५५ दत्तो वर्तते। कैश्चिद् वङ्गीयैर्वैष्णवैरिमे त्रयः श्लोकाः कस्यचिदन्यस्य विदुषो रचना स्वीक्रियते, न तु परमहंसविष्णुपुरीमहाराजस्य। तन्मते यदीमे त्रयोऽपि श्लोका विष्णुपुरीमहाराजस्य स्वीक्रियेरन् तर्हि चैतन्यमहाप्रभुभिः सह तस्य साक्षात्कारस्य घटना असम्भवा भवेत्। यतो हि १५५५ शकाब्दात् पूर्वमेव महाप्रभूणां तिरोभावो जात आसीत्।

श्रीमद्भागवतस्य प्रसिद्धटीकाकर्तुः श्रीधरस्वामिनोऽनन्तरमेव विष्णुपुरीमहाराजेन भक्तिरत्नावलीयं विरचिता, यतो भक्तिरत्नावल्यास्त्रयोदशविरचनस्यान्ते एकस्मिन् श्लोके श्रीधरस्वामिन उल्लेखो विद्यते। तत्र कान्तिमालाटीकानिर्माणे विष्णुपुरीमहाराजेन श्रीधरस्वामिनष्टीकातो यन्न्यूनाधिक्यं कृतं तदर्थं तेन क्षमा याचना कृतास्ति—

इत्येषा बहुयत्नतः खलु कृता श्रीभक्तिरत्नावली
तत्प्रीत्यैव तथैव सम्प्रकटिता तत्कान्तिमाला मया।
अत्र श्रीधरसत्तमोक्तिलिखने न्यूनाधिकं यत्त्वभूत्
तत्क्षन्तुं सुधियोऽर्हत स्वरचनालुब्धस्य मे चापलम् ॥ १३-१४ ॥

अपि च नाभाजीकृते भक्तिमाले चैतन्यमहाप्रभुपरमहंसविष्णुपुरीमहाराजयोर्नामोल्लेखात् तौ ततः पूर्वमेवाविर्भूताविति स्पष्टं प्रतीयते। तथा च श्रीधरस्वामिनाभाजीमध्ये एवासील्लब्धजन्मा गोस्वामी परमहंसविष्णुपुरीजीमहाराज इति निर्विवादम्। भक्तिरत्नावली हि परमहंसविष्णुपुरीजीमहाराजस्यास्ति सङ्कलितो ग्रन्थः। इतोऽन्योऽस्य कश्चन मौलिको ग्रन्थो नोपलभ्यते, येनास्य विशिष्टवैदुष्यस्य प्राखर्यं प्रकटीभवेत्। अत्रापीदमशंसयं वक्तुं शक्यते यदयं महाभागो भक्तिसम्प्रदायस्यासीदसाधारणो विद्वानित्यत्र न काप्यस्ति विप्रतिपत्तिः। अनेन नवधाभक्तेरेव सर्वेषां श्रेयःसाधनानामुपायानां श्रेष्ठत्वं प्रतिपादितम्। इतोऽन्यदस्य सम्बन्धे न ज्ञायत इत्यत्रैव विरम्यते।

## प्राच्यप्रतीच्यमतसमीक्षा

भारते भक्तेरुद्गमः कदा कुत्र च जात इति प्रश्नस्योत्तरे पाश्चात्यविपश्चितां प्राच्यविद्याविशारदानां प्रकथनमस्ति यद् भारते भक्तिकल्पना ईसाईधर्मस्यास्ति दायः। पाश्चात्ये जगति कर्मप्रधानयहूदीधर्मापेक्षया ईसाईधर्मे प्रेम्णः प्रचुरता विद्यते, यतो हि ईशाईधर्मस्य मूलसिद्धान्तोऽस्ति भगवति प्रेमप्राचुर्यं भगवतो भक्तिर्वा। अतः पाश्चात्यानां विदुषां मतेन ईसाईधर्मे एव सर्वप्रथमं भक्तेः समुदयो जातः। तत एव लब्धप्रतिष्ठा भक्तिर्भारतवर्षेऽपि प्रविष्टा सती सर्वत्र सादरं प्रचारिता प्रसारिता चाभवत्। एवं भारतवर्षं भक्तेः कल्पनायामीसाईधर्मस्यास्ति अधमर्णः। तस्माद्भारतभूमौ भक्तिप्रचारे प्रसारे च ईशाईधर्मस्यास्ति प्रचुरः प्रभावः।

किन्तु समीक्षाजगति पाश्चात्यविपश्चितामिदं मतं नितान्तं निर्मूलं निराधारं कपोलकल्पितं सर्वथा अप्रामाणिकञ्च मन्यते। वैदिकवाङ्मयस्यानुशीलनेनैष निष्कर्षो निःसरति यद् यथा वेदो ज्ञानकर्मणोरुद्गमस्थलं तथैव भक्तेरपि मूलं स्रोतो वेद एव विद्यते।

यद्यपि वेदेषु स्पष्टतया भक्तिशब्दो नोपलभ्यते, तथापि वेदमन्त्रेषु देवानां स्तुतिषु तैः साकं मातृ-पितृ-भ्रातृ-सुहृदादीनां स्निग्धबन्धूनां विविधप्रकारको हृदयङ्गमः सम्बन्धः स्तुतिकर्तॄणामन्तःकरणेषु देवान् प्रति स्पष्टतः प्रेम्णोऽनुरागस्य वा सद्भावं व्यञ्जयति येन तदुन्मुखीभवति प्रवृत्तिः।

वेदे वैदिकदेवेषु प्रधानो देवराज इन्द्रः शौर्यस्य प्रतीकः प्रोक्तः। दस्यूनां दमने मानवाः तस्य सततं साहाय्यं कामयन्ते। तदनुकम्पया आर्याः शत्रून् शातयितुं समर्था जायन्ते। स न केवलमुपासकानां सखा, माता पिता वा स्वीकृतोऽस्ति, अपि तु पितॄणामपि श्रेष्ठतमो वर्णितोऽस्ति। तथा हि ऋग्वेदमन्त्रः—

> त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ अधा ते सुम्नमीमहे। ( ८।९८।११ )
>
> अपि च—सखा पिता पितृतमः पितॄणां कर्तेमु लोकमश्नुते वयोधाः। ( ४।१७।१७ )

एवमिन्द्रो मित्रतायाः सहृदयताया मातृत्वस्य पितृत्वस्य चावासभूमिरभिमतोऽस्ति। किं तेन सहैवंविधं भावपूर्णं स्निग्धानुरागसम्बन्धं विलोक्य वेदेष्वनुरागातिशयसूचकभक्तेरसद्भावं कल्पयितुं शक्यते? तस्मात् स्तवनकाले विभिन्नदेवानां भावप्रवणासु स्तुतिषु श्रूयमाणा तादृशी सरसतापूर्णभावुकता नीरसहृदयेषु न सम्भवतीति स्तोतॄणां हृदयेषु भक्तिसद्भावः

कल्प्यते। देवानां स्तवनकाले स्तोतॄणां हृदयेष्वनुरागविशेषस्य सत्तया पूज्येष्वनुरक्तिसूचकभक्तेरपि-स्फुट आभासः प्रतीयते।

ब्राह्मणग्रन्थेषु कर्मकाण्डस्य प्राधान्येऽप्युपासकानां हृदयेषु भक्तिभावस्यानुरागात्मिका प्रवृत्तिरुत्तरोत्तरं वर्द्धमानैव दृष्टिगोचरी भवति। आरण्यकेषु बहिर्यागापेक्षया आन्तर-यागायैवाधिकं महत्त्वं दत्तमस्ति। उपनिषत्सु च चित्तवृत्तिनिरोधात्मकेन योगेन पुष्टं साधकानां हृदयं भक्तावधिकमाकृष्टं जायते। श्वेताश्वतरोपनिषदि स्पष्टतया भक्तिशब्दस्य प्रयोगो दृष्टिपथमायाति—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥ ३।६।२३॥

अग्रे उपनिषत्सु प्रतिपाद्याया एव भक्तेर्विशदतया विकाशो महाभारते, गीतायाम्, श्रीमद्भागवतादिमहापुराणेषु, भक्तिसूत्रेषु वैष्णवादीनां साम्प्रदायिकग्रन्थेषु च जातः। प्राय इमे ग्रन्थाः पाश्चात्त्यजगता सार्द्धं भारतवर्षस्य सम्पर्कात् पूर्वमेव निर्मिताः, प्रामाणिकरूपेण स्वीकृताः सर्वमान्याश्च जाताः सन्ति।

श्रीमद्भागवतमहापुराणस्य वेदस्तुत्यनुसारं ज्ञानकर्मभ्यां सहैव भक्तेः प्रतिपादनमपि वेदस्याभीष्टमस्ति।

भगवद्भक्तेराचार्याणां सम्मतौ तु वेदमन्त्रेभ्योऽपि भक्तितत्त्वस्य समर्थनं जायते। महर्षिणा शाण्डिल्येन स्वकीये भक्तिसूत्रे स्पष्टतया प्रतिपादितमस्ति यद् भक्तिः श्रुत्या साक्षाद्रूपेण ज्ञातुं शक्या—"भक्तिः प्रमेया श्रुतिभ्यः" (१।१२।६) सूत्रस्यास्य व्याख्यानं कुर्वता नारायणतीर्थेन भक्तिचन्द्रिकाभिधायां टीकायां भक्तेस्तद्भेदानां च प्रदर्शनाय व्याख्यासहिता अनेके वेदमन्त्राः समुद्धृताः सन्ति, येषु श्रवणकीर्तनभगवदर्पणानां स्पष्टं प्रतिपादनं भवति।

इत्थं वैदिकवाङ्मयस्य समीक्षया निष्कर्षो निःसरति यद् भक्तिसिद्धान्तो वैदिकोऽस्ति य उपनिषद्द्वारा परिपुष्टः पुराणेषु च पूर्णतया विकसितः सन् विविधैश्च भक्तिग्रन्थैः समस्तासु भारतभूमिषु प्रचारितः प्रसारितश्च जातः। यथा वेदो ज्ञानकर्मणोरुद्भवभूमिरस्ति, तथैव स भक्तेरप्युद्गमस्थलो वर्तत इत्यत्र नास्ति काचित् संशीतिः। भारतीयानां विदुषां मतेन समेषां सिद्धान्तानां मूलं वेद एव वर्तते। अतो भक्तिसद्भावोऽपि वेदत एव मन्यते। तस्माद्भक्तेरर्वाचीनत्वमवैदिकत्वं च मन्यमानानां पाश्चात्त्यविपश्चितां मतं निर्मूलम्।

यच्च डा० ग्रियर्सनमहोदयेन प्रबन्धमेकं लिखित्वा रायल-एसियाटिक-सोसाइटी-सभायां पठितस्तत्र तेनेदं साधयितुं प्रयतितं यद् भारतवर्षे भगवद्भक्तिरीसासंप्रदायानुयायिभिः

प्रचालिता । ईसामसीहस्य धर्मप्रचारकः सेन्टटामसनामक एकः शिष्यो भारते आगत्य दक्षिण-देशे मद्रासे स्थितः, तत्र तेन स्वीयः संप्रदायः प्रसारितः । तत्कालादेव भारतवर्षे भक्तिमार्गः प्रचलितः, पश्चाद्दक्षिणत एव समस्ते भारते भक्तिमार्गस्य प्रसारो जातः । इतः पूर्वं हिन्दुषु भक्ति-मार्गो न प्रचलित आसीदिति ।

तन्न युक्तिसहम्, यतो हि ईसामसीहात् प्रागपि भारतवर्षे भक्तिमार्गः प्रचलित आसीदिति ग्रीकदेशीयस्येतिहासकारस्य मेगस्तनिजस्य लेखैरेव प्रमाणितं भवति । ग्रीकदेशाधिपतेः सेल्यूकसस्य राजदूतो मेगस्थनीजो मगधेश्वरस्य सम्राजश्चन्द्रगुप्तमौर्यस्य राजधान्यां पाटलिपुत्रे बहुतिथं काल-मुषित्वा पुस्तकमेकं लिखितवानस्ति । तत्र तेनोल्लिखितमस्ति यत् शौरसेनीषु मथुराप्रदेशे वासुदेवस्योपासना प्रचलिता आसीत् । पुस्तकमदस्तेन ईसामसीहात् त्रिशतीपूर्वमेव लिखितम् । मेगस्तनीजानुसारमीशापूर्वं चतुर्थशताब्द्यामपि भारते भक्तिमार्गः प्रचलित आसीत् । घोसुण्डी-शिलालेखे ( ई० पू० २०० ) भगवत्सङ्कर्षणवासुदेवयोः पूजार्थं शिलाप्रकारनिर्माणस्योल्लेखो विद्यते नानाघाटलेखे ( ई० पू० १५ ) सङ्कर्षणवासुदेवयोः पूजाया वर्णनमुपलभ्यते ।

महाभारते वासुदेवः ( प्रकृतिः ), संकर्षणः ( जीवः ), प्रद्युम्नः ( मनः ), अनिरुद्धः ( अहङ्कारः ) इति चत्वारो व्यूहाः प्रोक्ताः । एते ईश्वरस्यैव रूपान्तराणि सन्ति । अहङ्कारत एव शनैः शनैर्भक्तिद्वारा भक्ता वासुदेवं प्राप्नुवन्ति । किञ्च भग्नावशिष्टां प्राचीनामुत्तुङ्गभूमिं च खनित्वा खनित्वा प्रस्तरान् खर्परादीनि च निःसारयितुं सततं सन्नद्धेन पाश्चात्यविद्वद्बहुलेन पक्षपातरहितेन भारतीयेनोत्खननविभागेन तत्तत्स्थानेषु या मूर्तयो मुद्राः शिलालेखाश्चोपलभ्यन्ते तेभ्योऽपि ईसामसीहात् पूर्वं भारते वासुदेवोपासनाविषये स्पष्टं प्रमाणं मिलति । उत्खननविभागेनैको भेलसासमीपे वेसनगरे वासुदेवनिमित्तमेवंविधो गरुडध्वजस्तम्भोऽवाप्तोऽस्ति यं निर्माय तक्षशिला-निवासी वासुदेवोपासको हिलियोडोरनामको ग्रीकराजदूत ईसामसीहात् सार्द्धशतवर्षपूर्वमेव स्थापितवानासीत् । भक्तिमन्तरा उपासनायाः सम्भवो नास्ति, यतो भक्तिरस्त्युपासनायाः प्राणः, नापि भक्तिं विना यज्ञादिकर्म अनुष्ठातुं शक्यते । अतो भक्तिमार्गं ईसामसीहाद् बहुपूर्वत एव भारते प्रचलितो वर्तते । गीतायां भक्तियोगस्य विशिष्टं विवेचनमस्ति । भगवता श्रीकृष्णेन चार्जुनाय स्थाने स्थाने भगवत्प्रपत्तेरुपदेशो दत्तोऽस्ति । कलिकातास्थ-इम्पीरियल-लाइब्रेरी-भूतपूर्वग्रन्थाध्यक्षो बहुभाषाभिज्ञो हरिनाथदे-महोदयश्चीनभाषायामेकं गीतानुवादं दृष्टवानस्ति, य ईसामसीहाद् द्विशतीपूर्वमेव लिखितोऽस्ति । अपि च डा० ग्रियर्सनादपि पूर्वं सर्वप्रथमं शर्मण्प्रदेशीयो डा० लोरिनजरनामा विद्वानपि स्वकीये श्रीमद्भगवद्गीतानुवादेऽस्यां समस्यायां

दृष्टिपातं कुर्वाणो लिखितवानासीद् यद् न्यूटेस्टामेन्टस्य बहव उपदेशा गीतायामुपलभ्यन्ते। अतो न्यूटेस्टमेन्टोऽस्ति प्राचीनस्ततः परं गीताया निर्माणं जातम्। एतदभिप्रायक एवैकः प्रबन्ध इण्डियन-आन्टिक्वेरीनामिकायां मासिकपत्रिकायामपि प्रकाशित आसीत्, किन्तु डा०म्यूरो नैतत्स्वीकृतवान्। शर्मण्यदेशीया डा० लासन-विटलिंकप्रभृतयो महाविद्वांसो डा०म्यूरस्य निर्भयं समर्थनं कृतवन्तः। एतेनापीसामसीहात् पूर्वमेव गीताया निर्माणं जातमिति निर्विवादं सिध्यति। तस्माद् डा०ग्रियर्सनप्रभृतीनामुक्तयः सर्वथा निर्मूला भ्रान्तिपूर्णा उपेक्ष्याश्च सन्तीत्यत्र नास्ति कश्चित् सन्देहलेशः।

## भक्तेरुपासनामूलकत्वम्

उपासना किल भवति भक्तिमूला। यथा स्थूलशरीरेण सह प्राणानां सम्बन्धः, तथैव भक्त्या सहोपासनाया अप्यस्ति स्वाभाविकः सम्बन्धः। यथा स्थूलशरीराद् निःसृतेषु प्राणेषु तद्धि शवरूपं भवति, तथैव भक्तिमन्तरोपासनापि व्यर्थैव। यद्युपासनाया भक्तेः सम्बन्धो न स्यात्तर्हि नासावुपासनाशब्दवाच्या भवितुमर्हति। अतो यथा प्राणान् विना शरीरं नैव स्थातुं शक्नोति, तथैव भक्तिं विनोपासनापि न सम्भवतीति फलतो भक्तिरूपासनायाः प्राणस्वरूपा सिध्यति। अत एवोक्तम्—

तस्याश्चैव द्विजा ज्ञेया भक्तिः प्राणस्वरूपिणी।

सकामनिष्कामभेदेनोपासना द्विविधा। तत्र निष्कामोपासनैव मुख्या, तस्या एव भक्तिशास्त्रेषु स्तुतिः कृताऽस्ति। यत्र कुत्राप्युपासनामूलकस्य कर्मकाण्डस्यावरत्वप्रदर्शनमुपलभ्यते तत्र सकामत्वमेव कारणमस्ति। यतो हि वैष्णवैः केवलं निष्कामोपासनाया एव महत्त्वं स्वीक्रियते, तस्या एव च सर्वत्र प्राशस्त्यमुच्यते।

भक्ता व्यक्ताव्यक्तोपासनारूपेण भगवन्तमुपासते। तत्र व्यक्तोपासनैव सरला, अव्यक्तोपासना च महती कठिनाऽस्ति। सगुणसाकारादिरूपेण भगवत उपासना व्यक्तोपासना कथ्यते। तत्रोपास्योपासकभावो यावत्तिष्ठति तावद् द्वैतभावोऽवश्यमेव तिष्ठति। पराभक्तेरवस्थायां यदा उपासको भक्त उपास्यदेवतया सह तन्मयो भवति, तदा द्वैतभावो विनश्यति। सैवास्ति परमानन्दस्यावस्था। अनेके एवंविधा भक्ताः सन्ति य उपासकभावं कदाऽपि त्यक्तुं न वाञ्छन्ति। तैस्तत्रैव महानन्दोऽवाप्यते। एवमपि सन्ति भक्ता ये मुक्त्यवस्थायामपि भक्तेरानन्द एव श्रेयोमार्गं मन्यन्ते। शैव-शाक्त-गाणपत्य-वैष्णव-सौरभेदेनोपासना पञ्चायतनमुच्यते। तत्र

ख

उच्चकोटिकोपासनायामेवाग्रेसरन्ति, राजसा अधिकारिणो मध्यममार्गमाश्रयन्ते, तामसप्रकृतयस्त्वासुरोपासनामेवात्मन: श्रेयस्करीं मन्यन्ते। भगवता श्रीकृष्णेनापि श्रीमद्भगवद्गीतायां त्रिविधोपासनाभेदं प्रदर्शयता प्रोक्तं यत् सात्त्विकप्रकृतय उपासका देवतानामुपासनां कुर्वन्ति, राजसप्रकृतयः पुमांसो यक्षराक्षसान् पूजयन्ति, तामसस्वभावाश्च मानवा भूतप्रेतादिकमेव समाराधयन्ति—

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः।
भूतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥१७।४।

यथा भगवान् भास्करः स्वतेजसा भूमिगतं वाष्पराशिं स्वाभिमुखमाकर्षति, तथैवोपास्यदेवोऽप्युपासकान् स्वाभिमुखमाकृष्य तेषामिप्सितं पूरयति। अत एवोपासका स्वस्वलक्ष्यसिद्धये स्वस्वस्वभावानुसारं साधनमवलम्ब्य तत्तद्देवानामुपासनायामग्रेसरा भवन्ति। भगवानस्ति प्रेममयः, अतस्तदुपलब्धये उपासनापथमपि प्रेमप्रचुराया भक्तेराश्रयमवलम्बते। तस्मादुपासना भक्तिरसस्य मधुरधारायामेव विकाशमाप्नोति, नान्यथा।

केषाञ्चिन्मते—सालम्बननिरालम्बनभेदादप्युपासना भवति द्विविधा। तत्रालम्बनेन सम्पाद्यमानोपासना सालम्बनोपासना कथ्यते, आलम्बनराहित्येन क्रियमाणोपासना च निरालम्बनोपासना गीयते। आलम्बनं हि भवति भावमूलम्। तत्र ध्येयस्य प्राधान्यं जायते। मनसो ध्येयाभिमुखीकरणमन्तरा ध्यानसिद्धिरसम्भवा। एवञ्च वेदशास्त्रसम्मता योगविज्ञानमूलिकोपासनाप्रणाली सालम्बना; तदन्या प्रमाणविरहिता केवलमनःकल्पिता ध्यातृ-ध्येय-ध्यानविवर्जिता मतान्तरप्रचारिता अवैदिक्युपासनाप्रणाली निरालम्बनान्तर्गता ज्ञेया।

वैदिकविज्ञानयुक्ता निराकारब्रह्मोपासना किल अध्यात्माधिदैवाधिभूतभावसंयुता विद्यते। एवं ब्रह्मस्वरूपध्यानमपि सच्चिदानन्दमयमेव। सगुणपञ्चोपासनालीलाविग्रहोपासनाप्रभृतयश्च मूर्तिध्यानसंयुक्ताः सन्ति। अतो वैदिक्युपासनापद्धतयः सावलम्बनेत्यत्र न कस्याप्यस्ति काचिद्विमतिः, किन्त्ववैदिकमार्गप्रचारितोपासनाप्रणाल्यो निजभावविज्ञानमनुसृत्य स्वस्वसरण्यनुसारेण सिद्धिप्रदा भवन्तीति हेतोस्ता निरालम्बना इत्यत्र न मनागप्यस्ति सन्देहलेशः।

ब्रह्मणः साक्षात् सम्बन्धनिबन्धनत्वात् प्रणवस्यालम्बनं सर्वाभ्यर्हितमुक्तम्—

एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥

प्रणवाश्रयेण साध्यमानोपासना मुख्या अवगन्तव्या। एका स्वतन्त्रा उद्गीथोपासनापद्धतिरपि वेदे वर्णिताऽस्ति। एवं वेदेषु बहुविधानां धारणानामवलम्बनेन बहुविधं ब्रह्मोपासना-

विधानं दरीदृश्यते। तदनुसारमेव तत्तदुपासनाचार्या महर्षयः प्रधानविधीनामवलम्बनेनोपासना-विज्ञानरहस्यस्योद्घाटनं स्वेषु स्वेषु तत्तद्ग्रन्थेषु कृतवन्तः सन्ति। अतोऽधिकं जिज्ञासुभिस्तत एवावसेयं सर्वम्।

## भक्तितत्त्वविवेचनम्

इह हि संसारे सुखमेव मे शाश्वतं स्याद् दुःखं च कदाचिन्मा भूदितिधिया दुःखं परिहातुं सुखं चोपलब्धुं सततमभिलषति प्राणिमात्रम्। न हि कोऽपि विवेकी स्वल्पे सुखमनुभवति, सर्वोऽपि जनो निरन्तरमधिकादधिकं सुखमेवाभिवाञ्छति। जीवो यावदनन्तं सुखं न लभते तावत्प्रयतमान एव तिष्ठति। तथा चाह भगवती छान्दोग्यश्रुतिः—"यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः" (७।२२।१)।

एवञ्च भगवत्साक्षात्कारस्वरूपमेवात्यन्तिकमनन्तं सुखमेव जीवस्य वास्तविकं लक्ष्यं चरममुद्देश्यं मानवशरीरलाभस्य फलञ्चास्ति। आत्यन्तिकं निरतिशयं सुखमेव मोक्षः, मुक्तिः परमपुरुषार्थः, अपवर्गः कैवल्यम्, निर्वाणं निःश्रेयसञ्चोच्यते। एतल्लब्ध्वा जीवः कृतकृत्यो भवति, न तस्य किञ्चिदवाप्यमवशिष्यते। एतदेव सुखस्य चरमा सीमा परमा च गतिरस्ति। तथा चोक्तं श्वेताश्वतरोपनिषदि—"तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (३।८)। अत एव श्रुत्या निर्णीतम् "इह चेदवेदीदथ सत्यमस्ति नो चेदवेदीन्महती विनष्टिः।" अत आत्मनो दर्शनं श्रवणं मननं निदिध्यासनं चावश्यककर्तव्यतया समुपतिष्ठते। अत एवाह छान्दोग्ये योगी याज्ञवल्क्यो मैत्रेयीं प्रति—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यो निदिध्यासितव्यश्च" (४।५)। श्रीमद्भगवद्गीतायाञ्च—

> यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
> यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥६।२२॥

यद्यपि "अपाम सोमममृता अभूम" इति श्रुत्या सोमपानादिभिर्लभ्यस्य स्वर्गादेरपि सुखसाधनत्वं प्रतीयते, तथापि "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति गीतावचनानुसारं भोगेन पुण्यक्षयानन्तरं स्वर्गाच्च्युतिदर्शनान्न तदात्यन्तिकं सुखं मन्यन्ते विद्वांसः। वेदान्तसिद्धान्तानुसारमभेदोपासनया निरतिशयानन्दरूपं पूर्णसुखस्वरूपं च ब्रह्म साक्षात्कृत्यैव जीवः सर्वदुःखविनिर्मुक्तो भूत्वा परमानन्दं विन्दते शाश्वतीं च शान्तिं लभते। पुराणानामनुसारं भेदोपासनया परमात्मनः

साक्षात्कारं सम्पाद्य जन्ममृत्युबन्धनक्लेशरहितो जीवः सगुणस्य भगवतो नित्यलीलाधाम्नि अप्राकृतेन शरीरेण निवसन् भगवत्सान्निध्यसुखमनुभवति। अतो भगवत्स्वरूपसाक्षात्कारमन्तरा न किमप्यस्त्यन्यद् वास्तविकं सुखम्।

"रसो वै सः, रसं लब्ध्वा ह्यानन्दी भवति" इति श्रुत्यनुसारं भगवतो रसरूपत्वाद् ब्रह्मानन्द-प्रदायिनं भक्तिरसमेव द्वारीकृत्य रसरूपस्य भगवतः सान्निध्यमवाप्तुं शक्यते। यथा पदार्थवादिनी न्यायवैशेषिकदर्शने पदार्थज्ञानद्वारा निःश्रेयसपथं प्रदर्शयतः। योगदर्शनं च जीवेश्वरयो-रेकत्वाधिगमपूर्वकसमाधिना कैवल्यप्राप्तिं प्रतिपादयति। सांख्यदर्शनं तु त्रिविधदुःखात्यन्तनिवृत्ति-मभिलक्ष्य प्रकृतिपुरुषयोर्विवेकात्मकज्ञानेन मुक्तिमार्गमुपदिशति। मीमांसादर्शनमपि वैदिकैः कर्मभिः संस्कारशुद्ध्या निर्वाणोपलब्धिं निर्दिशति। वेदान्तदर्शनं चाद्वयब्रह्मज्ञानेन मोक्षाधि-गममुद्बोधयति तथैव भगवत्सान्निध्योपलब्धिहेतुभूतं भक्तिदर्शनमपि भगवत्तत्त्वसाक्षात्कारद्वारा अपवर्गद्वारमुद्घाट्य परमं पदं प्रापयति भक्तप्रवरान्।

अतो भक्त्या भगवतो वास्तविकं स्वरूपं विज्ञाय परमपुरुषार्थं निर्वाणपदं प्राप्तुं शक्यते, इत्यत्र नास्ति कश्चन सन्देहः। तथा चोक्तं स्वयमेव भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायाम्—

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ १८।५५॥

पुराणानुसारं समाधिसुखस्येव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वाद् भक्तियोगोऽपि परमपुरुषार्थोऽभिप्रेतः। अत एव जीवनमुक्तानाममलात्मनां ज्ञानिनामपि भक्तिरावश्यकत्वेन अनिवार्या प्रतिपादिता श्रीमद्भागवते—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः॥ १।७।१०॥

अत एवाद्रुतचित्तस्य निर्वेदपूर्वकं तत्त्वज्ञानं द्रुतचित्तस्य च भगवल्लीलाकथाश्रवणादि-श्रद्धापूर्विका भक्तिरिति द्वयमप्युपात्तम्—

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते॥

(श्रीमद्भागवते ११।२०।९)

तत्तत्पुराणेषु भगवतो भक्तिर्भक्तान् दुःखबहुलादस्मात् संसारात् परमानन्दपूर्णपरिस्थितौ समुपस्थापयितुमेकमात्रं सर्वसुगमं साधनं निर्दिष्टमस्ति। तत्त्वस्यास्य प्रतिपादनं तु प्रायः प्रति-

पुराणं प्राप्यत एव, अथापि पुराणमूर्धन्ये सर्ववेदान्तसारे वैष्णवतिलके श्रीमद्भागवते महापुराणे भक्तितत्त्वस्य सर्वाङ्गीणं विश्लेषणं प्रस्तुतमस्ति। तदनुसारं प्रेमपयोधौ पूर्णात्मनि परमात्मनि संसक्त्या भक्त्या समः कल्याणकारी कश्चन अन्यो मार्गो न दृष्टिगोचरतामायाति, तदुक्तं श्रीमद्भागवते महापुराणे—

न युज्यमानया भक्त्या भगवत्यखिलात्मनि।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये॥

(३।२५।२६)

भक्त्या भक्तो यावत् पुलकिताङ्गो द्रवीभूतहृदयो विगलितानन्दाश्रुश्च न भवति तावद् आन्तरिकीं पवित्रतां नासादयति। यथा समाधिद्वारा चेतसः समताधिगमाद् मानसिको भावो विषयेभ्यः समूलमपहरति, तथैव भगवद्भक्त्या साकं परमानन्दसम्बन्धसत्वात् पापराशिः प्रणश्यति। तदनन्तरं यथाऽग्निना सुवर्णं निर्मलं सत् स्वकीयं स्वाभाविकं स्वरूपं प्रतिपद्यते, तथा जीवोऽपि भगवद्भक्त्या गलितमलिनसंस्कारः सन् नैजं स्वाभाविकं स्वरूपमासाद्य शाश्वतीं शान्तिमनुभवति। तथा चोक्तं श्रीमद्भागवते भगवद्भजनायासुरबालकान् प्रेरयता प्रह्लादेन—

तदा पुमान् मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रभावेण समेत्यधोक्षजम्॥

(७।७।३६)

अधोक्षजालम्भमिहाशुभात्मनः
शरीरिणः संसृतिचक्रशातनम्।
सद्ब्रह्मनिर्वाणसुखं विदुर्बुधाः
ततो भजध्वं हृदये हृदीश्वरम्।

(७।७।३७)

सर्वमिदं मानवयोनावेव सम्भवति, नान्यत्र। विधातुः सृष्टेर्वैचित्र्याद् मानव एव कैवलमेतादृगस्ति यो विचिन्त्य स्वशुभाशुभे विमोक्तुमर्हत्यात्मानं मृत्योः पाशात्। अत एव सृष्टिनिर्माणावसरे ब्रह्मदेवस्य मानवनिर्माणादेव परमः सन्तोषोऽजायत। तथा चोक्तं श्रीमद्भागवते महापुराणे—

सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या नाना सरीसृपपशून् खगदंशमत्स्यान् ।

तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्मावलोकधिषणं मुदमाप देवः ॥११।९।२८॥

अत एव सम्प्राप्य मानवं शरीरं नूनं सम्पादनीयमात्मतत्त्वविज्ञानम् । अयमेव परमः पुरुषार्थः, उत्कृष्टा सिद्धिः श्रेष्ठा च सम्पदस्ति । अनेनैव मानवजन्मनः साफल्यम्, एतेनैव कृतार्थोऽयं लोकः, अमुनैव वसुन्धरा वस्तुतो वसुन्धरा । मानवजन्म लब्ध्वा य आत्मज्ञानाय न प्रयतते तस्य महती हानिर्भवति । अत एवोक्तं पूज्यपादैः श्रीशङ्कराचार्यैः—

लब्धा कथञ्चिन्नरजन्मदुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् ।

यस्त्वात्ममुक्तौ न यतेत मूढधीः स आत्महा स्वं विनिहन्त्यसद्ग्रहात् ॥

( विवेकचूडामणौ ४ )

एतत्सर्वं लक्ष्यीकृत्यैव श्रुत्यापि स्पष्टमुद्घोषितम्—

तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैव सेतुः ।

इह चेदवीदथ सत्यमस्ति नो चेदवीन्महती विनष्टिः ॥

अत एवान्ते सर्वकामनया भगवद्भजनमेव सिद्धान्तितं श्रीमद्भागवते—

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।

तीव्रेण भक्तियोगेन भजेत पुरुषं परम् ॥ २।३।१० ॥

यदीच्छसि परं ज्ञानं ज्ञानाच्च परमं पदम् ।

तदा यत्नेन महता कुरु गोविन्दकीर्तनम् ॥

## भक्तेर्विकासक्रमः

स्नेहप्रेमश्रद्धाभेदेन लौकिकोऽनुरागस्त्रिविधः । तत्र पुत्रकन्याशिष्यादिषु निम्नगामी अनुरागः स्नेह उच्यते । मित्रकलत्रादिषु समानगामी अनुरागः प्रेम निगद्यते । मातृपितृगुरुजनादिषु च मान्यगामी अनुरागः श्रद्धानाम्ना व्यपदिश्यते ।

अनुरागोऽपि द्विविधः—काममूलकः प्रेममूलकश्च । काममूलके आसक्तिः, प्रेममूलके च भावः प्राकट्यमासादयतः । कामस्य मूलं स्वार्थः, तस्य लक्ष्यमनात्मेन्द्रियादिकम् । प्रेम्णो मूलं परार्थः, तदीयं लक्ष्यमात्मा । अतः कामी यावतीं स्वार्थपरतां परित्यजति तावत्येव तत्र परार्थपरता व्यज्यते । स च प्रेमिको जायते । प्रेमवृद्ध्या सहैव प्रेमिकस्य स्वार्थवृत्तिरपि क्षीयते । तदन्तःकरणानुरागतरङ्गिणी कामभूमिं विहाय प्रेमभूमौ प्रवहति । स्वार्थस्याज्ञानमूलत्वात् कामिनि विशुद्धप्रेम्णोऽभावाद् नासौ भक्तेरधिकारी, अपि तु भगवदुन्मुखः प्रेमिक एव भवति भक्तेरधिकारी । तथा चोक्तं भगवता श्रीकृष्णेन श्रीमद्भागवते—

मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते ।
न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥
( १०।३२।१७ )

स्नेहादयस्तिस्रोऽपि वृत्तयो लौकिकत्वाद्विनश्वरशीलाः, यतो जगतो नश्वरत्वात् तदाश्रयोऽपि विनश्वर एव, किन्तु भक्तिस्तद्विलक्षणा; यतः सा अनश्वरे परमात्मन्यलौकिकप्रीतिरूपा। लौकिकं व्यवहारमनुसृत्य मित्र-पुत्र-कलत्रादिभिः सह यः स्नेह-प्रेम-श्रद्धादिसम्बन्धो भवति स नश्वरो बन्धनकारणं च; यतो हि तन्मूले मोहस्य काममूलकममत्वबुद्धिसद्भावाद् जीवेन बन्धनमेव लभ्यते, न मुक्तिः। परमेश्वरविषयकालौकिकेऽनुरागे तु तद्भावाभावः, तस्य नित्यसत्यसनातनसकलकामनाश्रयभावाधीश्वरत्वात्। अत ईश्वरे स्नेहादिव्यवहारो नूनमेव भक्तिपदवाच्यः। वस्तुत आत्मसुखेच्छा सम्बन्धसंयुक्तत्वाद् मोहमिश्रिता लौकिकानुरागरूपाः स्नेहप्रेमश्रद्धादयः सत्त्वोन्मुखरजःप्रधानाः, भगवदनुरागरूपिणी भक्तिस्त्वलौकिकी मोहातीता शुद्धसत्त्वगुणमयी च प्रोच्यते। अतो भगवद्धृदयविहारिणी साक्षान्मुक्तिप्रदायिनी भक्तिर्लोकातीतेत्यत्र न कश्चित् सन्देहलवः।

यथा हिमालयप्रदेशान्निर्गमकाले कापि धारा अलकनन्दा, काचन मन्दाकिनी काचिच्च भागीरथीति गीयते, पश्चात्तिस्रो मिलित्वा समतलभूमौ प्रवहन्त्यो गङ्गानाम्ना व्यपदिश्यन्ते, तथैवानुरागमयी धारा स्नेहप्रेमश्रद्धारूपेण पति-पुत्र-मित्र-पितृप्रभृतिषु प्रवहन्ती चञ्चलरूपा पावनी गीयते। ततश्च स्वीयत्रिविधनामरूपस्वभावान् परित्यज्य स्वार्थरहितभगवद्भावमयसमतलप्रदेशे एकीभूय शान्तधारारूपेण यदा प्रवहति तदैवासौ धारा भक्तिरिति प्रोच्यते। तथा च पुत्रमित्रपितृप्रभृतिषु या अनुरागोत्पत्तिः स्नेहप्रेमश्रद्धारूपेण जायते सैव पश्चाद् भगवद्भावोन्मुखी ईश्वरानुरागरूपिणी भक्तिरित्यभिधीयते।

जीवो हि स्वस्वरूपं विस्मृत्य प्रकृतिसम्बद्धत्वात् तद्गतेच्छासुखदुःखादिधर्मान् आत्मन्यारोपयन् घटीयन्त्रवद् जन्ममृत्युचक्रे परिभ्राम्यन्नाध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति दुःखत्रयमुपभुङ्क्ते, परन्तु यदा परया भक्त्या इदमेवावधारयति यदहं शरीरत्रयानवच्छिन्नः, तद्गतसुखदुःखासम्बद्धः, सर्वव्यापकपूर्णानन्दसच्चिदानन्दस्वरूपस्तदानीमसौ ज्ञानी भक्तः स्वस्वरूपमधिगच्छन् पूर्णसच्चिदानन्दसागरे निमज्जति। तदुक्तं श्रीमद्भागवते उद्धवं प्रति भगवता श्रीकृष्णेन—

तस्माद् ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावतः ॥ ११।१९।५ ॥

ज्ञानविज्ञानयज्ञेन मामिष्ट्वाऽत्मानमात्मनि ।
सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन् ॥ ११।१६।६ ॥
भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते ।
मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ ११।२६।३० ॥
भक्त्योद्धवोनपायिन्या सर्वलोकमहेश्वरम् ।
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपभाति सः ॥ ११।१६।४५ ॥

आत्मसाक्षात्कारं कुर्वता ज्ञानिना भक्तेन परमपदमधिगम्यते । आनन्दस्वरूपे सर्वाधारे परमात्मनि परां भक्तिं लभमानस्य साधकस्य न किञ्चिदपि प्राप्तुमवशिष्यते । निर्विकल्पक-समाधिं प्राप्तवता साधकेन योऽसीमानन्दोऽधिगम्यते नासौ वाचा वर्णयितुं शक्यते । सच्चिदा-नन्दमहासागरे निमग्नस्य भक्तशिरोमणेः समस्तमपि संसारबन्धनं विच्छिद्यते । पञ्चभिः कोशैः सह आत्मनः सम्बन्धेन या किल जीवभावसमुत्पत्तिः सा प्रणश्यति; भक्तिप्रभावेण योगी भगवदानन्द-सत्तामधिगम्य संसारचक्रजन्ममृत्युभयाद् विमुच्यते । तथा चोक्तं श्रीमद्भागवतेऽसुरबालकानु-पदिशता प्रह्लादेन—

तदा पुमान् मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रभावेण समेत्यधोक्षजम् ॥ ७।७।३६ ॥

अधोऽक्षजालम्भमिहाशुभात्मनः
शरीरिणः संसृतिचक्रसाधनम् ।
सद्ब्रह्मनिर्वाणसुखं विदुर्बुधा-
स्ततो भजध्वं हृदये हृदीश्वरम् ॥ ७।७।३७ ॥

एवं मनुनापि भक्तराजो ध्रुवः समुपदिष्टः—

त्वं प्रत्यगात्मनि तदा भगवत्यनन्ते
आनन्दमात्र उपपन्नसमस्तशक्तौ ।
भक्तिं विधाय परमां शनकैरविद्या-
ग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढः ॥ ४।११।३० ॥

## भक्तिलक्षणमीमांसा

को भगवान् किञ्चास्ति तस्य भक्तेः स्वरूपमिति प्रश्ने संक्षेपादिदमेव वक्तुं शक्यते यत्—यः सर्वसाक्षी, सर्वान्तर्यामी, सर्वशक्तिमान्, सर्वेश्वरः, सर्वशासको, निरतिशयज्ञानवान् सर्वज्ञश्चास्ति। यस्य भक्त्या मानवः सकलदुर्गुणदुःखविमुक्तो भूत्वा विशुद्धो भवति। योऽजन्मापि जीवेषु दयां कृत्वा—

> यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
> अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥ ४।७॥
> परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
> धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥ ४।८॥

इति श्रीमद्भगवद्गीतायां स्वकीयप्रतिज्ञानुसारं प्राणिनां कल्याणाय, धर्मस्य स्थापनाय, अधर्मस्य निराशाय, सतां संरक्षणाय दुष्टानां दलनाय च समये समये स्वमायया देवमानव-पश्वादिषु योनिषु, सत्ययुगे मत्स्य-कूर्म-वाराह वामन-नृसिंहरूपेण, त्रेतायां रामरूपेण, द्वापरे कृष्ण-बलरामरूपेण कलियुगे च बुद्ध-कल्किरूपेणावतीर्य भक्तानाह्लादयति, शास्त्रीयमर्यादां पालयति, सुखयति च समस्तं लोकम्। स एव नित्योऽविनाशी सच्चिदानन्दघनस्वरूपः सर्वव्यापकः परमात्मा भगवान् बोद्धव्यः। तस्मिन् परमानुरक्तिः अनन्यं प्रेम वा भक्तिः। एवञ्च जगदाधारपरमेश्वर-विषयकोऽनुरागो भगवद्विषयकान्तःकरणवृत्तिविशेषो वा भक्तिरितिप्रतिफलति।

यतिवर्यश्रीमधुसूदनसरस्वतीसिद्धान्तानुसारं भगवद्भावेन द्रवीभूतस्य चित्तस्य सविकल्पा तदाकारतापत्तिरेव भक्तिर्निगद्यते। तथा हि—"द्रवीभावपूर्विका मनसो भगवदाकाररूपता सविकल्पा वृत्तिर्भक्तिः।"

अत एव श्रीमद्भागवते महापुराणे भगवद्गुणगानश्रवणमात्रेणैव भगवदभिमुखी समुद्र-गामिन्या गङ्गाया अविच्छिन्नया धारया समा चित्तस्य कामनाहीना अविच्छिन्ना गतिरेव भक्ति-योगः प्रोक्तः स्वयमेव भगवता श्रीकृष्णेन स्वमातरं देवहूतिं प्रति—

> मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
> मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥
> लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।
> अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे॥ ३।२६।११-१२॥

ईदृशमेव धारावाहिकमविच्छिन्नं पूततमं प्रेम प्रार्थयता प्रह्लादेनापि भगवन्तं नृसिंहं प्रति निवेदितमासीद् यत्–भगवन्! यथा विषयलोलुपा अज्ञानिनो मानवा विषयान् प्रत्येकचित्ताः सन्त आन्तरिकीं प्रीतिं कुर्वन्ति, तथैव ममाप्यविच्छिन्नं प्रेम परमात्मनि स्यात्, न ममान्तःकरणात् तत्कदाचिदपि दूरीभवतु—

या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु॥
(विष्णुपुराणे १।२०।१६)

सिद्धान्तममुमेवादाय भक्तिदर्शनस्य सूत्रकारा महर्षिनारद-महर्षिशाण्डिल्यप्रभृतयो महामुनयः स्वस्वग्रन्थेषु भक्तिलक्षणं कृतवन्तः। तत्र देवर्षिणा नारदेन स्वकीये नारदभक्तिसूत्रे "सा त्वस्मिन् परमप्रेमरूपा" (सू० २) इति सूत्रयता परमेश्वरे परमं प्रेमैव भक्तिः प्रोक्ता।

महर्षिणा शाण्डिल्येन त्वात्मीयशाण्डिल्यभक्तिसूत्रे ईश्वरं प्रति परमानुराग एव भक्तिर्निगदिता, यतो हि परमेश्वराभिमुखेन प्रेम्णैव जीवोऽमृतरूपं मोक्षं लभते। तथा हि—"सा परानुरक्तिरीश्वरे (१।२), तत्संस्थस्यामृतत्वोपदेशात्" (१।३।)।

अङ्गिरसो मुनेर्मतेन भक्तिर्भगवन्तं प्रत्यनुरागविशेषः, अलौकिकेश्वरानुरागरूपा वा। तन्मते सर्वासु चित्तवृत्तिषु प्राधान्येन वृत्तिद्वयं कारणस्वरूपतां भजते—रागो द्वेषश्च। तत्र रागो रजःप्रधानः, द्वेषश्च तमःप्रधानः। सुखानुशायी रागः, दुःखानुशायी द्वेष इति योगसूत्रानुसारेण सुखानुस्मरणपूर्वकं प्रवृत्तिरेव रागः; दुःखानुस्मरणपुरःसरं विरुद्धभावनोत्पत्तिरेव द्वेषः। तथा च तमःप्राधान्याद् द्वेषवृत्तिर्द्वेषस्य, रागवृत्तिश्च सत्त्वोन्मुखरजःप्राधान्येन सुखस्य हेतुर्भवति। भक्तिः किल द्वेषप्रतिकूला रागानुकूला चालौकिकी वृत्तिः। अलौकिकी भगवद्भक्तिः सात्त्विकी, यतस्तया साकं भगवदनुरागस्यास्ति सम्बन्धः। फलतोऽधोगतिदायिन्या द्वेषवृत्तेर्विपरीता समुन्नतिसम्पादिकाऽनुरागवृत्तिरूपिणी भक्तिरुक्ता भवति। एवञ्च द्वेषातीता रागानुरूपा परमेश्वराभिमुखगमनशीला सत्त्वगुणमयी भगवति विशिष्टालौकिकानुरागवृत्तिरेव भक्तिः। अलौकिकेश्वरानुरागरूपा वा भक्तिः। भक्तिरसायनस्य प्रथमे उल्लासे धर्मपूर्वकं भगवद्गुणानामाराधनेन द्रवीभूतस्य चेतसस्तैलधारावदविच्छिन्नधारावाहिकं भगवदाकारवृत्तिरेव भक्तेः सामान्यलक्षणमभिहितम्—

द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥१।३॥

भक्तिविशेषप्रतिपादके द्वितीये उल्लासे तु द्रवीभूते चेतसि मनस गोविन्दाकारता वृत्तिरेव भक्तिरित्युक्तम्—

द्रुते चित्ते प्रविष्टा या गोविन्दाकारता स्थिरा ।
सा भक्तिरित्यभिहिता विशेषस्त्वधुनोच्यते ।।२।१।।

हरिभक्तिरसामृतसिन्धौ रूपगोस्वामिना तु—

अन्याभिलाषिताशून्या ज्ञानकर्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ।।
( पूर्वभागे १।१।१ )

नारदपञ्चरात्रे तु भक्तिलक्षणमेवं कृतमस्ति—

सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् ।
हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते ।।

अपि च—

अनन्यममता विष्णौ ममता प्रेमसङ्गता ।
भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैः ।।

पूज्यपादैः श्रीशङ्कराचार्यैस्तु स्वकीये विवेकचूडामणवात्मस्वरूपानुसन्धानमेव भक्तिः प्रोक्तास्ति—

स्वरूपानुसन्धानं भक्तिरित्यभिधीयते ।।

एवमेभिस्तत्तदाचार्यैः स्वस्वग्रन्थेष्वेवंविधं भक्तिलक्षणं कृतमस्ति। परमेषां समेषां समीक्षया इदमेव तात्पर्यमवसीयते यदखिलात्मनि भगवति परमात्मन्यसाधारणं प्रेमैवास्ति भक्तिः ।

भज सेवायामिति धातोर्भावे क्तिन्-प्रत्ययेन निष्पन्नस्य भक्तिशब्दस्याप्यर्थः प्रेम्णा भगवत्सेवैव प्रतीयते । यथा वृक्षस्य पूर्णता फलेन सिध्यति, तथैव भक्तेरपि पूर्णता परमप्रेमास्पदे पुरुषोत्तमे परमेण प्रेम्णैव निष्पद्यते । तस्माद् भगवति जगदीश्वरेऽनन्यानुराग एव भक्तिरिति निष्कर्षः ।

## भक्तेर्भेदविवेचनम्

भक्तिस्तावद्द्विविधा, गौणी परा-भेदात् । गौणी पुनर्द्विधा—वैधी रागात्मिका च । वैधी अपि पुनः श्रवणादिभेदेन नवधा, रागात्मिका च हास्यादिरसभेदेन चतुर्दशधा विभज्यते । तथा च वैधी-रागात्मिका-पराभेदाद् भवति भक्तिस्त्रिविधा। पूर्वं वैधी ततो रागात्मिका

ईदृशमेव धारावाहिकमविच्छिन्नं पूततमं प्रेम प्रार्थयता प्रह्लादेनापि भगवन्तं नृसिंहं प्रति निवेदितमासीद् यत्–भगवन्! यथा विषयलोलुपा अज्ञानिनो मानवा विषयान् प्रत्येकचित्ताः सन्त आन्तरिकीं प्रीतिं कुर्वन्ति, तथैव ममाप्यविच्छिन्नं प्रेम परमात्मनि स्यात्, न ममान्तःकरणात् तत्कदाचिदपि दूरीभवतु—

या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुसरतः सा मे हृदयान्मापसर्पतु॥
(विष्णुपुराणे १।२०।१६)

सिद्धान्तममुमेवादाय भक्तिदर्शनस्य सूत्रकारा महर्षिनारद-महर्षिशाण्डिल्यप्रभृतयो महामुनयः स्वस्वग्रन्थेषु भक्तिलक्षणं कृतवन्तः। तत्र देवर्षिणा नारदेन स्वकीये नारदभक्तिसूत्रे "सा त्वस्मिन् परमप्रेमरूपा" (सू० २) इति सूत्रयता परमेश्वरे परमं प्रेमैव भक्तिः प्रोक्ता।

महर्षिणा शाण्डिल्येन त्वात्मीयशाण्डिल्यभक्तिसूत्रे ईश्वरं प्रति परमानुराग एव भक्तिर्निगदिता, यतो हि परमेश्वराभिमुखेन प्रेम्णैव जीवोऽमृतरूपं मोक्षं लभते। तथा हि—"सा परानुरक्तिरीश्वरे (१।२), तत्संस्थस्यामृतत्वोपदेशात्" (१।३।)।

अङ्गिरसो मुनेर्मतेन भक्तिर्भगवन्तं प्रत्यनुरागविशेषः, अलौकिकेश्वरानुरागरूपा वा। तन्मते सर्वासु चित्तवृत्तिषु प्राधान्येन वृत्तिद्वयं कारणस्वरूपतां भजते—रागो द्वेषश्च। तत्र रागो रजःप्रधानः, द्वेषश्च तमःप्रधानः। सुखानुशायी रागः, दुःखाशायी द्वेष इति योगसूत्रानुसारेण सुखानुस्मरणपूर्वकं प्रवृत्तिरेव रागः; दुःखानुस्मरणपुरःसरं विरुद्धभावनोत्पत्तिरेव द्वेषः। तथा च तमःप्राधान्याद् द्वेषवृत्तिर्द्वेषस्य, रागवृत्तिश्च सत्त्वोन्मुखरजःप्राधान्येन सुखस्य हेतुर्भवति। भक्तिः किल द्वेषप्रतिकूला रागानुकूला चालौकिकी वृत्तिः। अलौकिकी भगवद्भक्तिः सात्त्विकी, यतस्तया साकं भगवदनुरागस्यास्ति सम्बन्धः। फलतोऽधोगतिदायिन्या द्वेषवृत्तेर्विपरीता समुन्नतिसम्पादिकाऽनुरागवृत्तिरूपिणी भक्तिरुक्ता भवति। एवञ्च द्वेषातीता रागानुरूपा परमेश्वराभिमुखगमनशीला सत्त्वगुणमयी भगवति विशिष्टालौकिकानुरागवृत्तिरेव भक्तिः। अलौकिकेश्वरानुरागरूपा वा भक्तिः। भक्तिरसायनस्य प्रथमे उल्लासे धर्मपूर्वकं भगवद्गुणानामाराधनेन द्रवीभूतस्य चेतसस्तैलधारावदविच्छिन्नधारावाहिकं भगवदाकारवृत्तिरेव भक्तेः सामान्यलक्षणमभिहितम्—

द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥१।३॥

भक्तिविशेषप्रतिपादके द्वितीये उल्लासे तु द्रवीभूते चेतसि मनस गोविन्दाकारता वृत्तिरेव भक्तिरित्युक्तम्—

द्रुते चित्ते प्रविष्टा या गोविन्दाकारता स्थिरा ।
सा भक्तिरित्यभिहिता विशेषस्त्वधुनोच्यते ॥२।१॥

हरिभक्तिरसामृतसिन्धौ रूपगोस्वामिना तु—

अन्याभिलाषिताशून्या ज्ञानकर्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ॥
( पूर्वभागे १।१।१ )

नारदपञ्चरात्रे तु भक्तिलक्षणमेवं कृतमस्ति—

सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् ।
हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते ॥

अपि च—

अनन्यममता विष्णौ ममता प्रेमसङ्गता ।
भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैः ॥

पूज्यपादैः श्रीशङ्कराचार्यैस्तु स्वकीये विवेकचूडामणवात्मस्वरूपानुसन्धानमेव भक्तिः प्रोक्तास्ति—

स्वरूपानुसन्धानं भक्तिरित्यभिधीयते ॥

एवमेभिस्तत्तदाचार्यैः स्वस्वग्रन्थेष्वेवंविधं भक्तिलक्षणं कृतमस्ति । परमेषां समेषां समीक्षया इदमेव तात्पर्यमवसीयते यदखिलात्मनि भगवति परमात्मन्यसाधारणं प्रेमैवास्ति भक्तिः ।

भज सेवायामिति धातोर्भावे क्तिन्-प्रत्ययेन निष्पन्नस्य भक्तिशब्दस्याप्यर्थः प्रेम्णा भगवत्सेवैव प्रतीयते । यथा वृक्षस्य पूर्णता फलेन सिध्यति, तथैव भक्तेरपि पूर्णता परमप्रेमास्पदे पुरुषोत्तमे परमेण प्रेम्णैव निष्पद्यते । तस्माद् भगवति जगदीश्वरेऽनन्यानुराग एव भक्तिरिति निष्कर्षः ।

## भक्तेर्भेदविवेचनम्

भक्तिस्तावद्द्विविधा, गौणी-परा-भेदात् । गौणी पुनर्द्विधा—वैधी रागात्मिका च । वैधी अपि पुनः श्रवणादिभेदेन नवधा, रागात्मिका च हास्यादिरसभेदेन चतुर्दशधा विभज्यते । तथा च वैधी-रागात्मिका-पराभेदाद् भवति भक्तिस्त्रिविधा । पूर्वं वैधी ततो रागात्मिका

तदनन्तरं च परा भक्तिर्जायते। साधनदशायां गौणी एव सिद्धावस्थायां परा निगद्यते। अतः पराया भक्तेः प्राप्तये या साधनावस्था सैव गौणी प्रोच्यते।

यदा वैधीभक्तिमनुतिष्ठतो भक्तस्य हृदये भगवन्तं प्रत्येवंविधोऽपूर्वोऽनुराग उत्पद्यते येनाहर्दिवं भक्तो भगवद्भावसागरे निमग्नोऽमन्दमानन्दसन्दोहं लभते, तदानीं तस्य चेतसि तैलधारावदानन्दामृतसिञ्चनकरोऽनवच्छिन्नो भक्तिरसप्रवाहो विजृम्भते। इयं दशैव रागात्मिका प्रोच्यते।

दशायामस्यां भक्तस्य मनोमधुपः प्रभुपादपद्ममकरन्दरसास्वादनोन्मत्तः सर्वत्र प्रभुमेव पश्यन्नानन्दनिमग्नो निरन्तरं तिष्ठति। भक्तहृदयं सांसारिकेभ्यो विषयेभ्यो विरक्तं सन्नह-र्निशं भगवति लीनं भवति। एतत्परिपक्वदशायाः परिणाम एव पराभक्तिर्निगद्यते, यस्या-महङ्कारदेहात्मभावौ विनश्यतः सर्वत्राऽऽत्मदृष्टिश्च जायते। तथाचोक्तं श्रीशङ्कराचार्यपादैः—

सम्पूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमा
गाङ्गं वारि समस्तवारिनिवहः पुण्याः समस्ताः क्रियाः।
वाचः प्राकृतसंस्कृताः श्रुतिगिरो वाराणसी मेदिनी
सर्वावस्थितिरस्य वस्तुविषया दृष्टे परे ब्रह्मणि॥

तथा च विधानेनानुष्ठीयमाना वैधी किल सोपानरूपा गुरुशास्त्रोपयोगद्वारा निषिद्ध-साधनपरित्यागपूर्वकं विहितसाधनाभ्यासेन प्रथमदशायां विधीयमाना भक्तिरेव वैधी समाम्नायते। भक्तेः समुन्नतिभूमिमासादयितुमियं सोपानरूपा।

## भक्तिशास्त्रपरम्परापर्यालोचनम्

योगसाधनद्वारा चित्तवृत्तिनिरोधपूर्वकमन्तःकरणं निर्मलं विधाय साधको भक्तेः प्रभावेण भगवन्तं साक्षात्कृत्य तत्सन्निधानं लभमान आत्मज्ञानमधिगम्य निर्वाणपदं प्राप्तुं शक्नोतीति निश्चित्य, उपासनापरिपुष्टये विश्वकल्याणकामनया महर्षिभिः सुगमोपायं भक्तिशास्त्रमाविष्कृतम्।

तत्र देवर्षिणा नारदेन भक्तिविषयकाणि चतुरशीतिसंख्याकानि (८४) सूत्राणि प्रणीतानि, महर्षिणा शाण्डिल्येन च द्व्यधिकशतानि (१०२) सूत्राणि निर्मितानि। तत्र नारद-भक्तिसूत्रापेक्षया शाण्डिल्यभक्तिसूत्रं भक्तिसम्प्रदाये विशिष्टं स्थानं महत्त्वं च बिभर्ति। अत एव तत्र द्वाभ्यां स्वप्नेश्वरभवदेवमिश्राभ्यां पृथक्-पृथक् स्वतन्त्रं भाष्यद्वयं कृतम्। श्रीस्वामिना नारायणतीर्थेन च विशदभावपूर्णा चन्द्रिकाख्या व्याख्या विहिताऽस्ति। एवं भाष्यद्वय-व्याख्या-

विभूषितस्य शाण्डिल्यभक्तिसूत्रस्य भक्तसमाजे विपुलोऽस्ति प्रचारः प्रसारः समादरश्च। नारदभक्तिसूत्रे किमपि भाष्यं व्याख्यानं वा नेदानीं यावदवलोकितम्, किन्तु केवलं तत्सूत्राण्येव दृष्टिपथमायन्ति।

वर्तमाने युगे प्रामाणिकतया समुपलब्धस्य पूर्वोक्तमहर्षिद्वयप्रणीतस्य भक्तिसूत्रद्वयस्य पर्यालोचनया प्रतीयते यदाभ्यां द्वाभ्यां भक्तेराचार्याभ्यां देवर्षिनारद-महर्षिशाण्डिल्याभ्यां पूर्वमपि भक्तिशास्त्रस्यासन्ननेके आचार्यास्तद्ग्रन्थाश्च। परमस्माकं दौर्भाग्याद् दैवदुर्विलासतया परिस्थितेः पारवश्याद् हिन्दुधर्मेऽनेकाक्रान्त्युपस्थितेश्चेदानीं ते कालकवलिता जाताः। तेषां मध्ये एकस्यापि कस्यचन ग्रन्थरत्नस्य दर्शनं न जायते। किन्तु केवलं शाण्डिल्यभक्तिसूत्रे भक्तिविषयकमतान्तरप्रतिपादनप्रसङ्गे येषां पूर्वाचार्याणा चर्चाऽस्ति ते सन्ति काश्यपबादरायण-शाण्डिल्यजैमिनिमुनयः।

तथाहि—

(१) तामैश्वर्यपरां काश्यपः परत्वात् ॥ २ । १ । ३ ॥
(२) आत्मैकपरां बादरायणः ॥ २ । १ । ४ ॥
(३) उभयपरां शाण्डिल्यः शब्दोपपत्तिभ्याम् ॥ २ । १ । ५ ॥
(४) नाम्नेति जैमिनिः सम्भवात् ॥ २ । २ । ६ ॥

एषां मध्ये ( २।१।५ ) सूत्रे प्रोक्तः शाण्डिल्योऽयमेतस्माद् भक्तिसूत्रनिर्मातुः शाण्डिल्यादन्यः प्रतीयते। यतो हि शाण्डिल्याभिधा अनेके महर्षयस्तत्तद्ग्रन्थेषु श्रूयन्ते। (१) एकस्तावत् शाण्डिल्यो भक्तिसूत्रप्रणेता महर्षिः शाण्डिल्यः। (२) अपरो बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य वंशनिरूपके षष्ठे ब्राह्मणे प्रथममन्त्रे "कौशिकात् कौशिकः, कौण्डिन्यात् कौण्डिन्यः, शाण्डिल्याच्छाण्डिल्यः ( ४।६।१ ) इत्यादिना वर्णितो वंशर्षिः शाण्डिल्यः। (३) अन्यो व्यासशिष्यः शाण्डिल्यः संहिताप्रणेता महर्षिः शाण्डिल्यः। (४) इतरस्तु जयासंहितानिर्माता नारद-शिष्यत्वेन प्रथितयशा महर्षिः शाण्डिल्यः। परमेषु भक्तिसूत्रप्रणेता महर्षिः शाण्डिल्यः पञ्चरात्रानुयायीति स्पष्टं प्रतिभाति, एतत्सूत्राणां तदनुसारित्वात्।

एवमपि नारदभक्तिसूत्रे स्मृता भक्तेराचार्याः सन्ति पाराशर्य-गर्ग-शाण्डिल्य-ब्रह्मकुमार-व्यास-शुक-विष्णुकौण्डिन्य-शेष-उद्धव-आरुणि-बलि-हनुमद्विभीषणादयः। तथा हि—

(१) पूजादिषु अनुराग इति पाराशर्यः ॥ १६ ॥
(२) कथादिषु इति गर्गः ॥ १७ ॥

(३) आत्मरत्यविरोधेनेति शाण्डिल्यः ॥ १८ ॥

(४) नारदस्तु तदर्पिताखिलाचारिता तद्विस्मरणे परमव्याकुलतेति ॥ १९ ॥

(५) तस्या ज्ञानमेव साधनमित्येके ॥ २८ ॥

(६) अन्योन्याश्रयत्वमित्यन्ये ॥ २९ ॥

(७) स्वयं फलरूपतेति ब्रह्मकुमाराः ॥ ३० ॥

(८) इत्येवं वदन्ति जनजल्पनिर्भया एकमता कुमार-व्यास-शुक-शाण्डिल्य-गर्ग-विष्णु-कौण्डिन्य-शेष-उद्धव-अरुणि-बलि-हनुमद्विभीषणादयो भक्ताचार्याः ॥ ८३ ॥

नारदभक्तिसूत्रशाण्डिल्यभक्तिसूत्रातिरिक्तान्यपि कियन्ति भक्तिसूत्राणि साम्प्रतं दृष्टिगोचरमायन्ति। यथा श्रीहरिहरारण्यस्वामिभिर्विरचितानि षड्विंशति( २६ )संख्याकानि परभक्तिसूत्राणि। श्रद्धेयमहामहोपाध्यायपं०गोपीनाथकविराजमहोदयद्वारा टिप्पणविवरणादिभिः सनाथीकृत्य सरस्वतीभवनग्रन्थमालातो मुद्रिते भक्तिमीमांसानामके ग्रन्थेऽज्ञातकर्तृकानि द्व्यधिकशत(१०२)सूत्राणि, भारतधर्ममहामण्डलतो मुद्रिते दैवीमीमांसादर्शने ३४२ सूत्राणि सत्यनारायणशर्मणो भक्तिसूत्रं च भगवद्भक्तानां हृदयान्यावर्जयन्ति।

एतद्भगवद्भक्तिसूत्रातिरिक्ता अनेकैर्भक्तिशिरोमणिभिर्विद्वन्मणिभिर्भक्तिविषयमधिकृत्य समये समयेऽनेके ग्रन्थाः प्रणीता विविधा निबन्धाश्च लिखिताः। यत्रैतेऽतिप्रसिद्धाः प्रामाणिकाश्च सन्ति—

| | |
|---|---|
| (१) श्रीमधुसूदनसरस्वतीस्वामिनाम् | भक्तिरसायनम् |
| (२) श्रीस्वामिनारायणतीर्थानाम् | भक्त्यधिकरणमाला |
| (३) श्रीनृसिंहभारतीमहोदयानाम् | भक्तिसुधातरङ्गिणी |
| (४) श्रीहरिहरानन्दसरस्वतीनाम् | भक्तिसुधा |
| (५) श्रीरूपगोस्वामिनाम् | (क) भक्तिरसामृतसिन्धुः |
| | (ख) उज्ज्वलनीलमणिः |
| | (ग) दानकेलिकौमुदी च |
| (६) श्रीजीवगोस्वामिनः | वैष्णवतोषिणी |
| (७) श्रीगीतास्वामिविजयस्य | नवभक्तिरसायनम् |
| (८) श्रीबोपदेवस्य | मुक्ताफलम् |
| (९) श्रीरघुनाथशास्त्रिणः | भक्तितरङ्गिणी |

## भक्तिरससमीक्षा

पुण्यस्थलीभारतभूमिर्हि सरसस्य भक्तिरसस्य स्निग्धया धारया सिक्ता आप्यायिता च वर्तते। भारते भक्तिरसस्य प्रवाहोऽनादिकालत एव प्रचलन्नास्ते। स्निग्धानुरागसम्बन्धा भावप्रवणा भक्तिरसप्लाविता बहवो विद्वांसः सन्तो महात्मानश्चानायासेन परमात्मानमवाप्य कृतकृत्यतामगुः, यन्ति यास्यन्ति च।

यद्यपि रसविषयकचिन्तनपरम्पराया उदयस्तु बहुपूर्वत एव जात आसीत्, परन्तूपलब्धसामग्रीप्रामाण्यात् तस्य प्रवर्तनं भरतमुनित एव मन्यते रसज्ञैः। भारते भरतेन मुनिना रसनिष्पत्तिं सूत्ररूपेण निर्दिशता तत्र पानकरसन्यायेन दृष्टान्तमुपस्थायात्मसन्तोषो लब्धः। आनन्दसाधनमेव रसतत्त्वस्य चरमं लक्ष्यम्। "रसो वै सः, रसं लब्ध्वा ह्यानन्दीभवति, आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन, आनन्दाद् ह्येव भूतानि जायन्ते" इत्यादिश्रुतिवचनानि आनन्दस्य परमात्मस्वरूपतां प्रतिपादयन्त्यो जीवनस्य परमं पुरुषार्थमानन्दमेवामनन्ति। दुखस्यात्यन्तिकनिवृत्तेरपि समावेश आनन्द एव जायते। आनन्दस्याधिष्ठानमस्त्यात्मा। स चास्ति द्विविधः—एको जीवात्मा, द्वितीयश्च परमात्मा। तत्र वस्तुतः परमात्मैवास्ते आनन्दस्याधिष्ठानम्, तथापि जीवात्मन्यपि सच्चिदानन्दस्वरूपस्य परब्रह्मणोंऽशस्य विद्यमानत्वादग्निस्फुलिंग इव समुद्रजलबिन्दुवद्वा जीवे आनन्दानुभूतिर्जायते, आनन्दप्रतिभासो वा भवति।

विषयजन्य आनन्दोऽस्थायी भवति, स्थायी तु त्वात्मगत एवानन्दो भवति। भरतमुनेर्लक्ष्यं जीवगतस्यानन्दांशोद्बोधनमात्रमस्ति। जीवो ह्यनादिकालतो नानायोनिषु बंभ्रममाणोऽनेकाभिर्वासनाभिः परिव्याप्तो भवति। मानवमानसे विविधा वासनाः सूक्ष्मतया तिष्ठन्ते, काव्यार्थचिन्तनयोग्यताऽपि तत्र स्वभावत एव समुद्भवति। अतो विभावानुभावसञ्चारिभावमाध्यमेन रसास्वादस्य प्रक्रियायां विचारो रसाचार्यस्य भरतस्यास्ति लक्ष्यम्। वस्तुतोऽयं रसोप

क्रमः परमानन्दास्वादस्यास्ति पूर्वपीठिकैव विविधवासनासंसक्तचेतसां सचेतसां कृतेऽधिकः सुगमश्च ।

परमतत्त्वपुरुषोत्तमगतायाः पूर्णाया रसानुभूतेः सर्वैर्दुष्करत्वाद् भरतादिभिराचार्यैर्न निःश्रेयसाप्तौ समर्थानां श्रवणादिसाधनानां विचारः प्रस्तुतः, न वा निखिलानर्थनिदानभूतस्याज्ञानस्योन्मूलने प्रयासो विहितः । भरतमुनिना हि महता परिश्रमेण दिव्यज्ञानमन्दरेणागमसिन्धोर्मन्थनं विधाय पीयूषवपुषो यस्य नाट्यशास्त्रस्य प्रणयनमकारि तस्य लक्ष्यं जीवगतानन्दांशस्यास्वादनमात्रमेवास्ते, न तु पूर्णब्रह्मानन्दानुभूतिरपि तस्यास्ति लक्ष्यभूता ।

भक्तिरसाचार्यैस्तु न जीवगतानन्दांशमात्रमेव लक्ष्यीकृतम्, प्रत्युत आनन्दराशिभगवद्गतानन्दस्यास्वादनमेवास्ति तेषां वास्तविकं लक्ष्यम् । पुष्कलानन्दरसास्वादस्तु तदैवोद्भवति यदा परमानन्दस्वरूपो भगवान् स्वयमेव मनोगतो भवेत् । तथा चोक्तं श्रीस्वामिवर्यैर्मधुसूदनसरस्वतीपादैः—

भगवान् परमानन्दस्वरूपः स्वयमेव हि ।
मनोगतस्तदाकारो रसतामेति पुष्कलम् ॥

( भ० र० १।१० )

अपि च भक्त्या भक्तस्य द्रवितं चित्तं नित्यं विभुं पूर्णबोधं सुखात्मकं च परमात्मानं नितरां समाश्लिष्यति, तदा किमप्यन्यत् कर्तव्यं नावशेषतया अवतिष्ठते । अर्थात् सर्वदेशव्यापकस्य नित्यसुखस्वरूपस्य सर्वतः परिपूर्णस्य परमेश्वरस्य द्रवीभूतेन चेतसा ग्रहणे कृतकृत्यतया न किञ्चिदवशिष्यते । अत एवोक्तं ब्रह्मणा श्रीमद्भागवते भगवन्तं श्रीकृष्णं प्रति—

पुरेह भूमन् बहवोऽपि योगिन-
स्त्वदर्पितेहा निजकर्मलब्धया ।
विबुध्य भक्त्यैव कथोपनीतया
प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम् ॥

( १०।१४।५ )

भगवन्तं विभुं नित्यं पूर्णं बोधसुखात्मकम् ।
यद् गृह्णाति द्रुतं चित्तं किमियदवशिष्यते ॥

यथा बिम्बस्थानीयं मुखमेव दर्पणाद्युपाधिसम्बन्धात् प्रतिबिम्बरूपं धत्ते, तथैवेश्वरो देहोपाधिसंयोगाद् जीवरूपं गृह्णाति । अत एव जीव ईश्वरवत् पूर्णरसरूपः, तयोर्भेदो नास्ति । दृश्यदर्शकयोरभेदानुभव एव रसस्य परमं प्रयोजनम् । कान्तादिलौकिकविषयेष्वपि रसप्रतीतिकारणं

सुखस्वरूपं चैतन्यघनमेवास्ति; किन्तु मायाया आवरणशक्त्या आवृतत्वान्न तत्प्रतीयते विशुद्धं भगवत्तत्त्वम् । अत एवोक्तं भर्तृहरिणा वैराग्यशतके—

यदासीदज्ञानं स्मरतिमिरसञ्चारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदिति ।
इदानीमस्माकं पटुतमविवेकाञ्जनदृशां
शमीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥

अतो द्रवीभूतचित्तवृत्तावाविर्भूतश्चिदानन्द एव रसत्वं प्रतिपद्यते ।

यत्र भरतेन मुनिना नाट्यशास्त्रे नवरसाः स्वीकृतास्तत्र भक्तिसम्प्रदाये पञ्च मुख्याः सप्त च गौणा इति गौणमुख्यभेदाद् द्वादश भक्तिरसाः स्वीक्रियन्ते । भक्तेः सप्त गौणरसाः साहित्ये तथैव स्वतन्त्रतया स्वीकृताः शिष्टौ द्वौ शान्तशृङ्गाररसौ भक्तिशास्त्रे शान्तमधुरभक्तिभेदेऽन्तर्गतौ कृतौ । तत्र मुख्यभक्तौ शान्तस्य नामग्राहं ग्रहणं कृतम्, किन्तु शृङ्गारस्य न नामग्राहं ग्रहणमस्ति । वस्तुतो मधुरभक्तिरेव साहित्यशास्त्रस्य शृङ्गाररसः ।

## १—मुख्यो भक्तिरसः




## २—गौणो भक्तिरसः




भक्तिरसामृतसिन्धौ दक्षिणविभागे पञ्चमलहर्यां स्थायिभावस्य विस्तृतविवेचनप्रसङ्गे स्थायिभावपरिभाषां कुर्वता रूपगोस्वामिना प्रोक्तं यद् यो हि भावो विरुद्धान् अविरुद्धान् वा भावान् स्ववशे कृत्वा उत्तमराजवत् शोभेत स स्थायी भावो निगद्यते—

अविरुद्धान् विरुद्धांश्च भावान् यो वशतां नयन् ।
सुराजेत विराजेत स स्थायीभाव उच्यते ॥

भक्तिशास्त्रे श्रीकृष्णविषयकरतिरेव स्थायीभावः स्वीकृतोऽस्ति । सा द्विविधा-मुख्यरति-गौणरतिश्च । गोस्वामिना स्थायीभावस्य स्वरूपं तु तदेव स्वीकृतं यत् साहित्यशास्त्रे स्वीकृतमस्ति,

क्रमः परमानन्दास्वादस्यास्ति पूर्वपीठिकैव विविधवासनासंसक्तचेतसां सचेतसां कृतेऽधिकः सुगमश्च ।

परमतत्त्वपुरुषोत्तमगतायाः पूर्णाया रसानुभूतेः सर्वैर्दुष्करत्वाद् भरतादिभिराचार्यैर्न निःश्रेयसाप्तौ समर्थानां श्रवणादिसाधनानां विचारः प्रस्तुतः, न वा निखिलानर्थनिदानभूतस्याज्ञानस्योन्मूलने प्रयासो विहितः । भरतमुनिना हि महता परिश्रमेण दिव्यज्ञानमन्दरेणागमसिन्धोर्मन्थनं विधाय पीयूषवपुषो यस्य नाट्यशास्त्रस्य प्रणयनमकारि तस्य लक्ष्यं जीवगतानन्दांशस्यास्वादनमात्रमेवास्ते, न तु पूर्णब्रह्मानन्दानुभूतिरपि तस्यास्ति लक्ष्यभूता ।

भक्तिरसाचार्यैस्तु न जीवगतानन्दांशमात्रमेव लक्ष्यीकृतम्, प्रत्युत आनन्दराशिभगवद्गतानन्दस्यास्वादनमेवास्ति तेषां वास्तविकं लक्ष्यम् । पुष्कलानन्दरसास्वादस्तु तदैवोद्भवति यदा परमानन्दस्वरूपो भगवान् स्वयमेव मनोगतो भवेत् । तथा चोक्तं श्रीस्वामिवर्यैर्मधुसूदनसरस्वतीपादैः—

भगवान् परमानन्दस्वरूपः स्वयमेव हि ।
मनोगतस्तदाकारो रसतामेति पुष्कलम् ॥
( भ० र० १।१० )

अपि च भक्त्या भक्तस्य द्रवितं चित्तं नित्यं विभुं पूर्णबोधं सुखात्मकं च परमात्मानं यतरां समाश्लिष्यति, तदा किमप्यन्यत् कर्तव्यं नावशेषतया अवतिष्ठते । अर्थात् सर्वदेशव्यापकस्य नित्यसुखस्वरूपस्य सर्वतः परिपूर्णस्य परमेश्वरस्य द्रवीभूतेन चेतसा ग्रहणे कृतकृत्यतया न किञ्चिदवशिष्यते । अत एवोक्तं ब्रह्मणा श्रीमद्भागवते भगवन्तं श्रीकृष्णं प्रति—

पुरेह भूमन् बहवोऽपि योगिन-
स्त्वदर्पितेहा निजकर्मलब्धया ।
विबुध्य भक्त्यैव कथोपनीतया
प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम् ॥
( १०।१४।५ )

भगवन्तं विभुं नित्यं पूर्णं बोधसुखात्मकम् ।
यद् गृह्णाति द्रुतं चित्तं किमियदवशिष्यते ॥

यथा बिम्बस्थानीयं मुखमेव दर्पणाद्युपाधिसम्बन्धात् प्रतिबिम्बरूपं धत्ते, तथैवेश्वरो देहोपाधिसंयोगाद् जीवरूपं गृह्णाति । अत एव जीव ईश्वरवत् पूर्णरसरूपः, तयोर्भेदो नास्ति । दृश्यदर्शकयोरभेदानुभव एव रसस्य परमं प्रयोजनम् । कान्तादिलौकिकविषयेष्वपि रसप्रतीतिकारणं

सुखस्वरूपं चैतन्यघनमेवास्ति; किन्तु मायाया आवरणशक्त्या आवृतत्वान्न तत्प्रतीयते विशुद्धं भगवत्तत्त्वम्। अत एवोक्तं भर्तृहरिणा वैराग्यशतके—

> यदासीदज्ञानं स्मरतिमिरसञ्चारजनितं
> तदा दृष्टं नारीमयमिदमशेषं जगदिति।
> इदानीमस्माकं पटुतमविवेकाञ्जनदृशां
> शमीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते॥

अतो द्रवीभूतचित्तवृत्तावाविर्भूतश्चिदानन्द एव रसत्वं प्रतिपद्यते।

यत्र भरतेन मुनिना नाट्यशास्त्रे नवरसाः स्वीकृतास्तत्र भक्तिसम्प्रदाये पञ्च मुख्याः सप्त च गौणा इति गौणमुख्यभेदाद् द्वादश भक्तिरसाः स्वीक्रियन्ते। भक्तेः सप्त गौणरसाः साहित्ये तथैव स्वतन्त्रतया स्वीकृताः शिष्टौ द्वौ शान्तश्रृङ्गाररसौ भक्तिशास्त्रे शान्तमधुरभक्तिभेदेऽन्तर्गतौ कृतौ। तत्र मुख्यभक्तौ शान्तस्य नामग्राहं ग्रहणं कृतम्, किन्तु श्रृङ्गारस्य न नामग्राहं ग्रहणमस्ति। वस्तुतो मधुरभक्तिरेव साहित्यशास्त्रस्य श्रृङ्गाररसः।

१—मुख्यो भक्तिरसः

शान्तरसः | प्रीतरसः | प्रेयान्रसः | वात्सल्यरसः | मधुररसः

२—गौणो भक्तिरसः

हास्यरसः | अद्भुतरसः | वीररसः | करुणरसः | रौद्ररसः | भयानकरसः | वीभत्सरसः

भक्तिरसामृतसिन्धौ दक्षिणविभागे पञ्चमलहर्यां स्थायिभावस्य विस्तृतविवेचनप्रसङ्गे स्थायिभावपरिभाषां कुर्वता रूपगोस्वामिना प्रोक्तं यद् यो हि भावो विरुद्धान् अविरुद्धान् वा भावान् स्ववशे कृत्वा उत्तमराजवत् शोभेत स स्थायी भावो निगद्यते—

> अविरुद्धान् विरुद्धांश्च भावान् यो वशतां नयन्।
> सुराजेत विराजेत स स्थायीभाव उच्यते॥

भक्तिशास्त्रे श्रीकृष्णविषयकरतिरेव स्थायीभावः स्वीकृतोऽस्ति। सा द्विविधा–मुख्यरति-गौणरतिश्च। गोस्वामिना स्थायीभावस्य स्वरूपं तु तदेव स्वीकृतं यत् साहित्यशास्त्रे स्वीकृतमस्ति,

किन्तु तद्वर्गीकरणव्यवहारो भिन्नप्रकारेणोपस्थापितः। श्रीकृष्णविषयकरतेर्गौणमुख्यस्थायि-भावस्य वर्गीकरणं तेन स्वकीयया शैल्या समुपस्थापितम्—

**श्रीकृष्णरतिर्मुख्यस्थायिभावः**




**श्रीकृष्णरतिः ( गौणस्थायिभावः )**




लक्ष्यभेदाद् रसस्य निष्पत्तावास्वादे च भवति भेदः स्वाभाविकः। "विभावानुभावसञ्चारि-संयोगाद् रसनिष्पत्तिः" इति भरतसूत्रमवलम्ब्य रसनिष्पत्तिविषये यावत्यो व्याख्या उपलभ्यन्ते ताः सर्वा अपि भक्तिविषयकरसनिष्पत्तिव्याख्यातो विभिन्ना एव दृष्टिगोचरतामायान्ति।

भट्टलोल्लटस्योत्पत्तिवादो यत्र विभावादिकारणैः सह स्थायिभावस्य (दमयन्त्यादिदर्शनज-नलादिसमवेतरत्याद्युद्बोधस्य तत्कार्यकटाक्षासहचरितोत्कण्ठादीनां च) अनुकार्यनलादिनैव सम्बन्धात् तत्रैव रस उत्पद्यते, नटे तु तत्तदनुकृत्या सादृश्यमूलकारोपो विधीयते। शङ्कुकस्यानु-मितिवादो यत्रानुकार्ये नलादौ गृहीतैर्विभावादिभिर्हेतुभिरनुकार्यभिन्ने नटे रसस्यानुमानं क्रियते। आभ्यामाचार्याभ्यां प्रदर्शितरसनिष्पत्तिप्रकाराद् भिन्नो भक्तिरसनिष्पत्तिप्रकारः। भक्ति-

रसदृष्ट्या न रसोत्पत्तिरनुकार्ये भवति, नापि नटेऽनुमीयते; प्रत्युत तत्र भक्तस्य भाव एवास्वादगोचरो भूत्वा रसरूपतां प्रतिपद्यते ।

नाट्येऽनुकार्यगतभावस्य नटे आरोपसम्भवेऽपि भक्तिक्षेत्रीयरसानुभूतौ कर्तृत्वं श्रवण-कीर्तनादावेवाधारितमस्ति । अत एव भट्टनायकस्यापि भावकत्व-भोजकत्वरूपयोर्द्वयोर्व्यापरयोर्नवीनकल्पनाऽपि न कृतकार्या भवति, यत्रैकया विभावादीनां साधरणीकरणं क्रियते, द्वितीयया च सत्त्वोद्रेकाज्जायमानामानन्दात्मिकां संविद्विश्रान्तिं संसाध्य रसस्यानुभवः क्रियते । न वा व्यञ्जनावादिनोऽभिनवगुप्तस्य प्रमातृगतसहजातमनोभावस्यास्वादनादेव निर्वाहो भवितुमर्हति, यतो ह्यन्यपात्रगतभावस्य प्रधानपात्रगतभावे विलयस्य सिद्धान्तो न भक्तिरससिद्धान्ते मान्यतामर्हति । चतुर्ष्वेतेषु मतेष्वात्मस्वरूपस्य रसस्य नित्यता न सिद्धयति । अतो भावत्रयीसमूहालम्बनज्ञानानन्तरं जायमाना व्यवधानरहिताः प्रतीतिरेव भक्तिरसः । अत एव भक्तिरसायनेऽयं सर्वमान्यः सिद्धान्तः समुद्घोषितः श्रीपतिवर्यमधुसूदनसरस्वतीपादैः ।

सानन्तरक्षणेऽवश्यं व्यनक्ति सुखमुत्तमम् ।
तद्रसः, केचिदाचार्यास्तामेव तु रसं विदुः ॥३।१३॥

अपि च—

नित्यं सुखमभिव्यक्तं रसो वै स इति श्रुतेः ।
प्रतीतिः स्वप्रकाशस्य निर्विकल्पसुखात्मिका ॥३।२२॥

किञ्च—

परमानन्द आत्मैव रस इत्याहुरागमाः ।
शब्दतस्तदभिव्यक्तिप्रकारोऽयं प्रदर्शितः ॥३।२४॥

भरतसूत्रे पञ्चमी हेत्वर्था, हेतुत्वं च कारकत्व-ज्ञापकत्वान्यतररूपम् । ज्ञापकत्वं च तद्विषयकज्ञानजनकज्ञानविषयत्वम्, ज्ञानं चात्र त्रिविधम्—प्रत्यक्षम्, अनुमितिः शाब्दबोधश्च । तत्र प्रत्यक्षं द्विविधम्—यथार्थमयथार्थं च । अयथार्थं पुनर्द्विधा—दोषजन्यं भ्रमत्वेन प्रसिद्धम्, इच्छाजन्यमारोपत्वेन ख्यातम् ।

तथा च भट्टलोल्लटादीनां मते रसास्पदनलयुधिष्ठिरादिनायकेषूत्कण्ठादिभिर्हेतुभी रस उत्पद्यते, ज्ञापकहेतुना नटादिपात्रेषु रस आरोप्यते । व्यञ्जनावृत्त्या वा नलदमयन्त्यादीनां गुणक्रियादीनि नटनटीष्वारोप्य अयथार्थानुभवस्वरूपो मानसो रसः साध्यते । एवं च स्वस्व-

शेमुषीविकासानुसारेण भरतसूत्रघटकसंयोगपञ्चमीनिष्पत्त्यर्थविविधतया अभियुक्ता भट्टलोल्लट-भट्टनायकाभिनवगुप्ताचार्या रसतत्त्वं सोपष्टम्भं प्राचीकसन् ।

भक्तिरसे भावस्याश्रयो भक्त एव भवति, न नाट्यगतपात्रं यथा लौकिके रसे जायते । लौकिके रसे शृंगाररसस्याश्रयो भवति नलदुष्यन्तादिः आलम्बनविभावस्य च दमयन्तीशकुन्तलादिः, किन्तु भक्तिरसक्षेत्रे राधाकृष्णयोर्द्वयोरपि विवेचनमालम्बनप्रकरणे एव कृतमस्ति । अत एव भक्तिरसानुयायिभिराचार्यैः रसानुभूतेरभिनवा प्रक्रिया कल्पिता ।

## कृतज्ञताप्रकाशः

यैर्महानुभावैर्ग्रन्थस्यास्यैवंविधरूपप्रदाने प्रकाशने येन केनापि प्रकारेण साहाय्यप्रदाने च प्रयासो विहितः, येषां च विपश्चिदपश्चिमानां रहस्यपूर्णैर्विचारैर्ग्रन्थोऽयमलङ्कृत उपयोगी च सम्पन्नः, तेभ्यो महानुभावेभ्यः कृतज्ञताप्रकाशोऽनिवार्यतया मे परमावश्यकः प्रतिभाति ।

सुरभारतीसमुपासनैकव्रतिनां वाराणसेयसंस्कृतविश्वविद्यालयीयानुसन्धानविभागसञ्चालकानां विद्वन्मूर्धन्यानां श्रीमतामाचार्यबलदेवोपाध्यायमहोदयानां सबहुमानमनेकैः साधुवादैः साकं संस्मरणमस्मिन्नवसरे समुचितं मन्ये, येषां नैसर्गिकेणौदार्येण, अनुपमया अनुकम्पया, सत्प्रेरणया निरन्तरमुत्साहप्रदानेन चेयं भगवद्भक्तिरत्नावली प्रचुरपुण्यपुञ्जानां पाठकानां पुरस्तात् प्रस्तुता प्रवर्तते ।

अखिललोकनायकस्य नित्यगोलोकलीलारसिकस्य सर्वान्तर्यामिणः करुणावरुणालयस्य राधिकारमणस्य भगवतः श्रीकृष्णस्य चरणसरसीरुहयुगलं सुमनसा मनसा समभ्यर्च्य विस्तराद् विरमति ।

वाराणसेयसंस्कृतविश्वविद्यालयः,
वाराणसी
**वसन्तपञ्चमी**
सं० २०२५
दि० २२-१-६८

विदुषां वशंवदः
**श्रीकृष्णमणित्रिपाठी**
व्याख्याता
पुराणेतिहासविभागस्य

# विषयानुक्रमणिका

# भक्तिरत्नावली

श्रीगोपीनाथाय नमः

जयति जननिवासो देवकीजन्मवादो
यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्म्मम् ।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्द्धयन् कामदेवम् ॥ १ ॥
( श्रीमद्भागवते १०।९०।४८ शुकः )

## कान्तिमाला

ये मुक्तावपि निस्पृहाः प्रतिपदं प्रोन्मीलदानन्ददां
यामास्वाद्य समस्तमस्तकमणिं कुर्वन्ति यं स्वे वशे ।
तान् भक्तानपि तां च भक्तिमपि तं भक्तिप्रियं श्रीहरिं
वन्दे सन्ततमर्थयेऽनुदिवसं नित्यं शरण्यं भजे ॥

सत्सदाचारानुमितं श्रुतिबोधितप्रारिप्सितनिर्विघ्नपरिसमाप्तिकारणं श्रीकृष्णकीर्तनरूपं मङ्गलमाचरति श्रीमद्भागवतपद्येनैव-जयतीति । जनानां प्राणिनां निवासः स्थानं स्वस्वरूपमिति यावद् विश्वरूपत्वात्—

य एको विभाति स्वतः शुद्धचेताः
प्रकाशस्वरूपोऽपि नानेव धीषु ।
शरावोदकस्थो यथा भानुरेकः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ (हस्तामलक स्तोत्र ८)

त एव वा निवासो यस्य सर्वगुहाशयत्वमिति श्रुतेः । यद्वा नितरां वासः शरणं तेषामिति वार्थः । कृष्णत्वं स्पष्टयन्नाह-देवक्यां जन्मेति वादः प्रसिद्धिर्यस्य न वास्तवं जन्मेति भावः, अजत्वात् । यदुवराः परिषदः सभाः सेवका यस्य । अवतारप्रयोजनमाह दोर्भिर्बाहुभिरधर्म्मं अस्यन् तन्मूलदुष्टदैत्यादिवधादस्यन् क्षिपन् चतुर्भुजत्वम् इच्छाधीनमित्याह—स्वैरिति । स्वैः स्वकीयैः यद्वा-स्वैः स्वभक्तैरर्जुनादिभिर्दोर्भिरिव दोर्भिरित्यर्थः ।

एवमेवं समर्थस्य मद्विघ्ननिवारणमीषत्करमिति दर्शितं सम्बन्धमात्रेण सर्वतापनिवारक इत्याह स्थिराः स्थावराः चरा जङ्गमास्तेषां वृजिनं पापं हन्तीति। वृन्दावनतनुलतापक्षिमृगादि-तापत्रयनिवारक इत्यर्थः। विलासवैदग्ध्यलावण्यादि। निरपेक्षप्रेमाधीनत्वमाह—व्रजेति विषयान्तरकामापेक्षया कृष्णविषयः कामः परमानन्दप्रदत्वात्। दीव्यतीति देवस्तं स्वविषयप्रीति-दार्ढ्यार्थं वर्द्धयन् एवं विशिष्टः श्रीकृष्णो जयति सर्वोत्कर्षेण वर्तत इत्यर्थः॥ १॥

श्री शुकदेवजी इस पद्य के द्वारा भगवान् श्रीकृष्ण में वर्तमान विशेषताओं को व्यक्त करते हुए उनके उत्कर्ष का वर्णन कर रहे है—जो सम्पूर्ण जीवों के आश्रय हैं, अजन्मा होने पर भी जिन्हे लोग देवकी का पुत्र कहते है, जिन्होंने अपने बाहुसदृश अर्जुन आदि वीरों द्वारा अधर्मकारियों का वधकर पृथ्वी का भार हल्का किया है, जिनसे स्थावर-जंगम जगत् के दु.ख का नाश होता है, यदुवंश के बड़े २ लोग जिनके पार्षद थे, जो अपने श्रीमुख की मुस्कान से व्रजवनिताओ के अनुराग को बढ़ाने वाले हैं, उस मंगलमय भगवान् श्रीकृष्ण की जय हो।॥ १॥

—x—

यत्कीर्तनं यत्स्मरणं यदीक्षणं
यद्वन्दनं यच्छ्रवणं यदर्हणम्।
लोकस्य सद्यो विधुनोति किल्बिषं
तस्मै सुभद्रश्रवसे नमो नमः॥ २॥
( २।४।१५ शुकः )

अथैतद् ग्रन्थप्रतिपाद्यनानाविधविष्णुभक्तिमहिमानं दर्शयन् नमस्काररूपं मङ्गलमाचरति-यत्कीर्तनमिति। ईक्षणं जगन्नाथ प्रतिमादिषु, अर्हणं पूजा, एतानि सद्यः कल्मषं विधुन्वन्ती-त्यन्वयः। लोकस्य मनुष्यमात्रस्य। एतेन सर्वेषां श्रवणाद्यधिकार इति दर्शितम्। सुभद्रं श्रवो यशो यस्य। अतो नान्येषां यज्ञदेवादीनां कीर्तनादिमात्रं तथा सर्वस्य सद्यः सुमङ्गलम्॥ २॥

राजा परीक्षित् द्वारा भगवान् के गुणों का वर्णन करने के लिए प्रार्थना किये जाने पर श्री शुकदेवजी अपना प्रवचन प्रारंभ करने के निमित्त ३ श्लोकों से भगवान् श्रीकृष्ण का बारम्वार स्मरण और नमस्कार कर रहे है—

जिनके कीर्तन, स्मरण, दर्शन, अभिवादन, कथाश्रवण और पूजन से मनुष्यों के पाप तत्काल नष्ट हो जाते हैं, उस अचिन्त्य शक्तिशाली मंगलमय भगवान् श्रीकृष्ण को बारम्बार नमस्कार है ॥ २ ॥

—x—

भूयो नमः सद्वृजिनच्छिदेऽसता-
मसम्भावायाखिलसत्त्वमूर्तये ।
पुंसां पुनः पारमहंस्य आश्रमे
व्यवस्थितानामनुमृग्यदाशुषे ॥ ३ ॥
( २।४।१३ शुकः )

नमस्कारप्रचयमभिप्रेत्याह—भूय इति । सतां भक्तानां वृजिनं पापं वृहद्दुःखं वा छिनत्तीति तथाऽसताम् अभक्तानाम् असम्भवाय विनाशकाय नन्वयमेव किमिति पुनर्नमस्क्रियते इत्याशङ्क्याह—अखिलसत्त्वमूर्तये सर्वात्मने तथा चान्यनमस्कारोऽप्येतन्नमस्कार एवेति साक्षात्स एव किन्न नमस्करणीय इति भावः । शुद्धसत्त्वगुणाश्रयाय वा तथा च ज्ञानप्रदत्वात्स एव वन्द्य इत्यर्थः । अत एव पारमहंस्ये प्रत्यक् निष्ठारूपेऽन्तर्मुखे आश्रमे व्यवस्थितानां पुंसामनुमृग्यं यत्तन्निरसनेन यदन्वेषणीयमात्मतत्त्वं तस्य दाशुषे दात्रे ॥ ३ ॥

जो सत्पुरुषों के दुःख को दूर करते हैं, दुष्टों के नाशक है, सत्त्वगुण के भण्डार हैं, परमहंस मार्ग में चलने वालों को आगम, ज्ञान देते हैं—ऐसे परमेश्वर को मैं पुनः प्रणाम करता हूँ ॥ ३ ॥

—x—

श्रियः पतिर्यज्ञपतिः प्रजापति-
र्धियां पतिर्लोकपतिर्धरापतिः ।
पतिर्गतिश्चान्धकवृष्णिसात्वतां
प्रसीदतां मे भगवान् सतां गतिः ॥ ४ ॥
( २।४।२० शुकः )

सर्वेश्वरत्वमनुस्मरन् प्रार्थयते-श्रियः पतिरिति । गतिः रक्षकः । प्रसीदतां प्रारिप्सितसिद्धिर्यथा स्यात्तथा ॥ ४ ॥

लक्ष्मीजी के पति, यज्ञ के पति, प्रजाओ के पति, बुद्धि के पति, तीनों लोकों के पति, पृथ्वी के पति, अन्धक, वृष्णि एवं सात्वत[१] वंशों के नायक तथा सज्जनों के शरण भगवान् श्रीकृष्ण मुझ पर प्रसन्न हों ॥ ४ ॥

—×—

यः स्वानुभावमखिलश्रुतिसारमेक-
मध्यात्मदीपमतितितीर्षतां तमोऽन्धम् ।
संसारिणां करुणयाह पुराणगुह्यं
तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥ ५ ॥
( १।२।३ सूतः )

अथ भागवताचार्य्यं शुकं स्तौति—यः स्वानुभावमिति । स्वः निजः असाधारणः सद्यो भगवद्भक्तिप्रदत्वादिरूपोऽनुभावो महिमा यस्य तत् । अत एव अखिलश्रुतीनां सारम्, अत एकं श्रेष्ठम्, अतः पुराणानां मध्ये गुह्यं गोप्यं श्रीभागवतं संसारिणामन्धतमः अतिदुर्ज्ञेयं संसाराख्यम् अतितितीर्षताम् उत्तरितुमिच्छतां कृते अध्यात्मदीपं साक्षादात्मप्रकाशकं करुणया आह । अत एव मुनीनां गुरुमाश्रयामि ॥ ५ ॥

नैमिषारण्य क्षेत्र में शौनकादि ऋषियों द्वारा भगवान् श्रीकृष्ण के चरित्रवर्णन के लिए प्रार्थना किये जाने पर रोमहर्षण के पुत्र उग्रश्रवा सूत आनन्दमग्न होकर ऋषियों के मङ्गलमय प्रश्न का अभिनन्दन करते हुए श्री शुकदेवजी का नमस्कार कर रहे है—मैं उन मुनियों में श्रेष्ठ व्यासपुत्र श्री शुकदेवजी की शरण लेता हूँ जिन्होंने संसाररूपी घने अन्धकार को पार करने वाले विषयासक्त संसारी जीवों पर कृपा करके अतिगोप्य, अध्यात्मविद्या ( आत्मतत्त्व ) का प्रकाशक, वेदों का सारभूत, पुराणों में श्रेष्ठ, भगवद्भक्तिवर्द्धक, और अनुपम श्रीमद्भागवत पुराण का व्याख्यान किया है ॥ ५ ॥

—×—

१—वृष्णि, अन्धक और सात्वत ये तीनों यदुवंशी क्षत्रिय थे । भगवान् श्रीकृष्ण का जन्म वृष्णि वंश में हुआ था ।

विष्णुपुरीवाक्यम्

दूरान्निशम्य महिमानमुपेत्य पार्श्वमन्तः
प्रविश्य शुभभागवतामृताब्धेः ।
पश्यामि कृष्णकरुणाञ्जननिर्म्मलेन
हृल्लोचनेन भगवद्भजनं हि रत्नम् ॥ ६ ॥

इह खलु सकलपुरुषार्थमर्थयमानानां तदुपायमनुसरतां भगवद्भक्तिमेव परमोपायत्वेन स्वतः पुरुषार्थत्वेन च श्रीभगवान् वेदव्यास उपनिबबन्ध । अन्यनिबन्धनन्तु भक्तिनिरूपमोपकरणमेवेत्याशयेन तत्परश्लोकसंग्रहग्रहिलः स्वयं चतुर्भिः प्रतिजानीते । तत्र स्वज्ञानमाह-दूरादिति । पार्श्वमुपेत्य अधीत्येत्यर्थः । अन्तः प्रविश्य सरहस्यं बुद्ध्वा ॥ ६ ॥

आरम्भ में श्रीमद्भागवत के पाँच श्लोकों से मङ्गलाचरण करने के बाद विष्णुपुरीजी महाराज अपने बनाए हुए चार श्लोकों से ग्रन्थनिर्माण का प्रयोजन व्यक्त कर रहे हैं—मैं दूर से श्रीमद्भागवतरूपी अमृतसमुद्र की महिमा सुनकर जब उसके पास पहुँच कर ( पढ़कर ) उसमें प्रवेश किया तो उसमें उसके गूढ़ रहस्य को समझकर श्रीकृष्ण की कृपारूपी अञ्जन से निर्मल हुए हृदयलोचन से भगवद्भजनरूपी रत्न को देखा । इसका तात्पर्य यह है कि मैंने पहले सत्पुरुषों से श्रीमद्भागवत की महिमा सुनी, बाद में पढ़कर इस रहस्य को जाना कि श्रीमद्भागवत का एकमात्र सार भगवद्भजन ही है ॥ ६ ॥

—×—

तदिदमतिमहार्घं भक्तिरत्नं मुरारे-
रहमधिकसयत्नः प्रीतये वैष्णवानाम् ।
हृदि गतजगदीशादेशमासाद्य माद्य-
न्निधिवरमिव तस्माद्वारिधेरुद्धरामि ॥ ७ ॥

प्रतिजानीते तदिदमिति । अन्तर्य्यामि प्रेरणं दर्शयन् औद्धत्यं परिहरति हृदि गतेति । तस्माद्भागवताख्यात् ॥ ७ ॥

इसलिए हृदयस्थ जगदीश के आदेश से वैष्णवभक्तों की प्रीति के निमित्त समुद्र से रत्नों के समान प्रयास-पूर्वक इस अनमोल भगवद्भक्तिरूपी रत्न को श्रीमद्भागवतरूपी समुद्र से निकाल रहा हूँ ॥ ७ ॥

—×—

कण्ठे कृता कुलमशेषमलङ्करोति
वेश्मस्थिता निखिलमेव तमोऽपहन्ति ।
तामुज्ज्वलां गुणवतीं जगदीशभक्ति-
रत्नावलीं सुकृतिनः परिशीलयन्तु ।। ८ ।।

ग्रन्थप्रयोजनं कैमुतिकन्यायेनाह-कण्ठेति । गुणवतीं गुणो भगवति प्रेमप्रदत्वादिरूपः तद्युक्ताम् । पक्षे गुणः सूत्रम् । यस्याः कण्ठे वेश्मधारणेनापि तादृशं हितं तत्र श्रवणविचारणादीनां परिशीलनेन हितं भवतीति किं वाच्यम् ।। ८ ।।

जिस प्रकार रत्नों की माला जब गले में पहनी जाती है तब सारे शरीर की शोभा बढ़ा देती है, जब घर में रखी रहती है तब अन्धकार को दूर कर घर को प्रकाशित कर देती है, उसी प्रकार यह भक्ति-रत्नावली जब कण्ठस्थ रहेगी तब सम्पूर्ण कुल को अलंकृत किये रहेगी, जब घर में पड़ी रहेगी तो घर को प्रकाशित किये रहेगी। अतः इस प्रकाशमय भक्तिरत्नावली को पुण्यात्मा ध्यान से पढ़ें।

**सारांश**—यह है कि भगवद्भक्ति मणिमाला के समान कार्य करती है। जैसे जो पुण्यात्मा पुरुष मणियो की माला पहनता है उसके अंग प्रत्यंग मणियों की कान्ति से जगमगा उठते है और जो उसे घर में रखता है तो उसके घर का अन्धकार दूर हो जाता है वैसे ही जो लोग भगवद्भक्ति का प्रतिपादन करनेवाली भक्तिरत्नावली को कण्ठस्थ कर लेंगे उनका सारा वंश विशुद्ध हो जायेगा और जो इसे अपने घर में रखेंगे उनके घर से शोक मोह आदि दुःख दूर हो जायेंगे। अतः पुण्यात्माओं को मणिमाला के समान इस भक्तिरत्नावली को अवश्य धारण करना चाहिए ।। ८ ।।

—×—

निखिलभागवतश्रवणालसा
बहुकथाभिरथानवकाशिनः ।
अयमयं[१] ननु ताननु सार्थको
भवतु विष्णुपुरीग्रथनग्रहः ।। ९ ।।

नन्वत्र भागवतमेवास्ति, कृतं त्वत्प्रयत्नेन किं तत्राह निखिलेति । अनलसा अपि आवश्यक ( कुटुम्ब ) पोषणव्यवसायकथाभिः अनवकाशः अवकाशाभावो येषान्तेऽनवकाशिनः

१—अयमेवेति पाठान्तरम् ।

तांस्तु लक्षीकृत्य अयमयमिति वर्तमानसान्निध्यं दर्शयति विष्णुपुरी तैरभुक्तः सन्यासी अहमेव। तस्य ग्रन्थनग्रहः नानाप्रकरणस्थश्लोकानामेकवाक्यतया लेखने प्रयत्नः सार्थको भवतु भविष्यतीत्यर्थः ॥ ६ ॥

गृहस्थी के कामकाजों में व्यस्त रहने के कारण जिन्हे सम्पूर्ण श्रीमद्भागवत सुनने का समय नही मिलता उनके लिए विष्णुपुरी का यह ग्रन्थनिर्माणपरिश्रम सफल हो ॥९॥

—x—

स वै पुंसां परो धर्म्मो यतो भक्तिरधोक्षजे।
अहैतुक्यप्रतिहता ययात्मा सुप्रसीदति ॥ १० ॥
(१।२।६ सूतः)

एवं स्वयं चतुःश्लोक्या अभिधेयप्रयोजनसम्बन्धान् दर्शयित्वा सामान्यतो विशेषतः साधूनां भक्तिं निरूपयिष्यन् प्रथमं तावद्भक्तिसामान्यविरचनमवतारयितुं सर्वे स्वस्वधर्म्मा भक्तिमुखनिरीक्षका इत्याह—स वै पुंसामिति। अहैतुकी फलाभिसन्धिवर्जिता। अप्रतिहता निरन्तरा अव्यभिचारिणी च। आत्मा मनः प्रसीदति सत्त्वप्रधानं भवति, ततश्च तत्त्वज्ञानोदय इति भावः। अत एवाह। पर इति ॥ १० ॥

शौनकादि ऋषियों के प्रश्न की प्रशंसा करते हुए सूत जी ५ श्लोकों मे कह रहे हैं—मनुष्यों का वही मुख्य धर्म है जिसके अनुष्ठान से भगवान् श्रीकृष्ण में निरन्तर निष्काम भक्ति बनी रहे जिससे अन्त.करण अत्यन्त निर्मल हो जाता है[1] ॥ १० ॥

—x—

वासुदेवे भगवति भक्तियोगः प्रयोजितः।
जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥ ११ ॥
(१।२।७ सूतः)

ननु तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन (बृ० उ० ४।४।२२) इत्यादिश्रुतिभ्यो धर्म्मस्य ज्ञानाङ्गत्वं प्रसिद्धम्, तत्कुतो भक्तिहेतुत्वमुच्यते?

---

१—मूल श्लोक में अधोक्षज शब्द आया है जिसकी व्युत्पत्ति विद्वानो ने इस प्रकार की है—अधःकृतम् अक्षजम् इन्द्रियजन्यं ज्ञानं येन सः अधोक्षजः। अर्थात् जो चक्षुरादि इन्द्रियों से नही देखे सुने जाते उस गोतीत (अवाङ्मनसगोचर) को अधोक्षज कहते है।

सत्यं तत्तु भक्तिद्वारेणेत्याह—वासुदेव इत्यनेन भक्तिरेव योगः प्रयोजितः कृतः वैराग्यविषयेषु ज्ञानम् आत्मतत्त्वविषयम् अहैतुकं हेतुशून्यं शुष्कतर्काद्यगोचरम् औपनिषदमित्यर्थः। तथा च श्रेयोऽर्थिभिः वासुदेवभजनमेव कृत्यमिति भावः ॥ ११ ॥

भगवान् श्रीकृष्ण के चरणों मे भक्ति करने से वैराग्य एवं फलाकाङ्क्षारहित तत्त्वज्ञान उत्पन्न होता है ॥ ११ ॥

—×—

सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः
परःपुरुष एक इहास्य धत्ते।
स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥ १२ ॥
( १।२।२३ सूतः )

ननु वासुदेव एव किमिति भजनीय इत्यत आह सत्त्वमिति। यद्यपि इह सर्गे एक एव विष्णुर्हर्यादिसंज्ञात्रयं धत्ते इति त्रयोऽपि तुल्यमुपास्याः तथापि श्रेयांसि सत्त्वतनोः केवलसत्त्वशरीराद्वासुदेवस्य श्रेयसो ज्ञानसाध्यत्वात्, ज्ञानस्य च तत्त्वसाध्यत्वात्। सत्त्वात्संजायते ज्ञानमिति भगवद्गीतायाम् (१४।१७)। विरिञ्चिहरयोरपि सत्त्वसम्बन्धित्वात् अत्र सत्त्वस्यैव कैवल्यम्, अब्भक्षो वायुभक्ष इतिवत् (म० भा० प०) द्रष्टव्यम्। तस्मात्साधुनियमितं वासुदेवे भगवतीति ॥ १२ ॥

सत्त्व, रज तथा तम ये तीनों प्रकृति के गुण है। इनसे युक्त होकर एक ही परमात्मा इस संसार की सृष्टि, पालन और संहार करने के लिए ब्रह्मा, विष्णु एवं महेश ये तीनों नाम धारण करते है। इन तीनों में से सत्त्वप्रधानशरीरधारी विष्णु से ही मनुष्यों का परम कल्याण होता है ॥ १२ ॥

—×—

अतो वै कवयो नित्यं भक्तिं परमया मुदा।
वासुदेवे भगवति कुर्वन्त्यात्मप्रसादिनीम् ॥१३॥
( १।२।२२ सूतः )

अत्र सदचारं प्रमाणयति—अत इति। यतः वासुदेवादेव श्रेयो भवति अत एव निश्चये। तथात्मप्रसादिनी भक्तिर्वासुदेवादेव यतः अतो देवतान्तरत्याज्य इत्याह ॥ १३ ॥

इसी कारण बुद्धिमान् लोग बड़ी प्रसन्नता से भगवान् वासुदेव[1] (श्रीकृष्ण) में मन को स्वच्छ करनेवाली भक्ति करते हैं ॥ १३ ॥

—×—

मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ।
नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥१४॥
( १।२।२६ सूतः )

मुमुक्षव इति । घोररूपान् भूतादीन् भूतपतीन् अथ लोकपालानपि श्राद्धबलिपूजाद्यकरणे अनिष्टकारित्वात्, बह्वायासेऽप्यल्पदातृत्वाच्च घोररूपास्ते । कलाः अवतारान् । अनसूयवः देवान्तरानिन्दकाः । मुमुक्षव इत्यनेन भक्तिसाध्यज्ञानस्य फलं मोक्षो दर्शितः । तत्र मुमुक्षव इव इत्युपलक्षणम् ॥ १४ ॥

अत एव मुक्ति की इच्छा करने वाले लोग भयानकरूपधारी लोकपालादि देवताओं को छोड़कर शान्तस्वरूप भगवान् विष्णु के ही अवतारों की पूजा करते हैं, किन्तु अन्य देवताओं की निन्दा नहीं करते[2] ॥ १४ ॥

—×—

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन भजेत पुरुषं परम् ॥१५॥
( २।३।१० शुकः )

तस्मात्सकामोऽकामो वा विवेकी तमेव भजेत इत्याह—अकाम इति । तीव्रेण व्यभिचारादिदोषरहितेन ॥ १५ ॥

---

१—वसुदेवस्यापत्यं वासुदेवः इस व्युत्पत्ति के द्वारा वासुदेव शब्द का अर्थ तो वसुदेव का पुत्र प्रसिद्ध ही है, पर विद्वानों ने इसकी व्युत्पत्ति इस प्रकार भी की है—वसति सर्वत्र इति वासुः । वसन्ति सर्वाणि अस्मिन्निति वा वासुः जो सबमें बसे अथवा जिसमें सब बसें वह वासु है । वासुश्चासौ देवो वासुदेवः । इस तरह विष्णु और विष्णु के द्वापरयुगी अवतार ( भगवान् श्रीकृष्ण ) दोनों अर्थ वासुदेव शब्द से निकलते हैं ।

२—यद्यपि श्रीमद्भागवत में विष्णु भक्ति प्रतिपाद्य है । इसलिए इसमें वैष्णवों के इष्टदेव का ही प्राधान्य है पर अन्य देवों की निन्दा, असूया, द्वेष या डाह नहीं है ।

श्रीशुकदेवजी राजा परीक्षित् से कह रहे हैं—मोक्ष की कामना करनेवाले विवेकी पुरुश को चाहिए कि वह निष्काम अथवा सकाम होकर तीव्र भक्ति से परमात्मा की उपासना करे ॥ १५ ॥

—×—

वासुदेवपरा वेदा वासुदेवपरा मखाः।
वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ १६ ॥
वासुदेवपरं ज्ञानं वासुदेवपरं तपः।
वासुदेवपरो धर्म्मो वासुदेवपरा गतिः ॥ १७ ॥
(१।२।२८-२९ सूतः)

श्रेयो मार्गान्तरमपि वासुदेवपरमेवेत्याह—द्वाभ्याम् वासुदेवपरा इत्याभ्याम्। मखानां वासुदेवार्पणार्थत्वेन वासुदेवपरत्वम्। तत्प्रतिपादका वेदा वासुदेवतात्पर्यका एव। तथा च गीतासु-वेदैश्च सर्वैरहमेव वेद्य इति (१५।१५)। आसनप्राणायामादिक्रियाणां तत् ज्ञानोपायत्वेन तत्परत्वे योगशास्त्रमपि तत्परमेव। ज्ञानस्य तद्विषयत्वेन तत्परत्वे ज्ञानशास्त्रमपि तत्परम्। तपः पदं ज्ञानपरं प्रकरणात् तपोवत् ज्ञानस्यापि शुद्धिहेतुत्वात् स्वर्गादीनां तदानन्दांशरूपत्वात् तत्परत्वे तदर्थकधर्मशास्त्रमपि तत्परमेव। गतिर्गम्यते इति गतिः स्वर्गादिः यद्वा वेदानां तत्परत्वे तत्प्रतिपाद्यानां मखयोगादीनां तत्परत्वम्। अत्र तपस्तप एव ॥ १६-१७ ॥

सूत जी शौनकादिक ऋषियों से कह रहे हैं—समस्त वेद वासुदेव का ही प्रतिपादन करते हैं। यज्ञ भी एकमात्र वासुदेव की प्रसन्नता के उद्देश्य से किये जाते हैं। योगसाधन भी वासुदेव की प्राप्ति के उपाय है। सभी कर्मों का फल भी वासुदेव की उपासना है। वासुदेव ही ज्ञानशास्त्र के प्रतिपाद्य हैं। और वासुदेव ही सर्वश्रेष्ठ गति हैं। अतः वासुदेव की उपासना करना मानवमात्र का कर्तव्य है ॥ १६-१७ ॥

—×—

यमादिभिर्योगपथैः कामलोभहतो मुहुः।
मुकुन्दसेवया यद्वत्तथात्माद्धा न शाम्यति ॥ १८ ॥
(१।६।३६ नारदः)

अत एव तत्पराणामेतेषां सामर्थ्ये हेतुं दर्शयति-यमादिभिरिति। आत्मा मनः यद्वत् यथा

मुकुन्दसेवया तथा यमादिभिर्न शाम्यति, अद्धा साक्षात् यमादीनां मनःशोधकत्वेऽपि भक्तिमुखनिरीक्षकत्वादिति भावः । योगपथैरित्युपलक्षणं कर्मादिपथैरित्यपि द्रष्टव्यम् ॥ १८ ॥

नारदजी व्यास जी से कह रहे है—सर्वदा काम और लोभ से व्यथित मन यम, नियम आदि अष्टाङ्ग योग के अनुष्ठान से वैसा शान्त नहीं होता जैसा कि भगवान् श्रीकृष्ण की आराधना से शान्त हो जाता है ॥ १८ ॥

—×—

**भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ।**
**अपश्यत्पुरुषं पूर्णं मायां च तदुपाश्रयाम् ॥ १९ ॥**

( १।७।४ सूतः )

अत्रापि भक्तिरेव फलमित्यत्र फलमेव प्रमाणमिति सूतवाक्येनाह—भक्तियोगेति । भक्तियोगेन अमले शुद्धे अत एव प्रणिहिते निश्चले अपश्यत् वेदव्यासः ॥ १६ ॥

सूतजी शौनक से कह रहे है—जब भक्तियोग के प्रभाव से मन अच्छी तरह निर्मल एवं निश्चल हो गया, तब व्यासजी ने सर्वशक्तिमान् भगवान् एवं उनकी अधीन माया को देखा ।

**सारांश**—यह है कि जब व्यास जी नारद जी के उपदेश से भक्ति में मग्न हो गये तभी उन्हें नारायण का दर्शन हुआ[१] ॥ १९ ॥

—×—

**देवानां गुणलिङ्गानामानुश्रविककर्मणाम् ।**
**सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ २० ॥**
**अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।**
**जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ २१ ॥**

न केवलं साक्षात्फला भक्तिः किन्तु शीघ्रफलापीति उत्तमां भक्तिं लक्षयन्नाह द्वाभ्याम्-देवानामिति । एकं शुद्धं मनो यस्य पुंसस्तस्य देवानाम् इन्द्रियाणां तद्देवानां च वा या सत्त्वे

१—वेदविभाजन, महाभारतरचना और १७ पुराणों के प्रणयन के बाद भी जब महर्षि व्यास जी के [म]न में शान्ति न मिली तब देवर्षि नारद जी के उपदेश से उन्होंने भक्तिप्रधान श्रीमद्भागवत का निर्माण [क]र भक्तियोग में निमग्न हो इष्टसिद्धि को प्राप्त किया ।

विष्णावेव स्वाभाविकी वृत्तिः अन्यविषयेष्विवायत्नसिद्धा अनिमित्ता निष्कामा सा भागवती भक्तिरित्यन्वयः। कथं भूतानां देवानाम् आनुश्रविककर्म्मणां गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदः तेनोक्तान्येव कर्माणि येषां गुणलिङ्गानां गुणा रूपादयः लिङ्गानि ज्ञापकानि येषां रूपाद्युपलब्धिकरणत्वेन तत्कल्पनात्। एतदुक्तं भवति विषयाभिमुखानामपीन्द्रियाणां वेदोक्तविषयमात्रग्रहणात्। तदुक्तम् भगवदाराधनार्थक्रियाकरणाद्यस्य वृत्तिर्भागवतीति हेतुकथनं सत्त्वे विष्णौ सा वृत्तिरिति भक्तिलक्षणम्। सा च वाणीगुणानुकथनेनेत्यादि वक्ष्यमाणक्रमेण द्रष्टव्या। सिद्धेः मोक्षादपि मोक्षस्य सुखरूपत्वात् भक्तौ तदनुभवाद्गरीयस्त्वम्। शर्करातद्धोजिनोरिव। जरयतीति कोशं लिङ्गशरीरम्, आत्मावरणमज्ञानं वा। निगीर्णं भुक्तमन्नादि यथा अनलो जठराग्निर्जरयति भुक्तपरिणामवत भक्तस्यासाधारणयत्नैर्विनैव मोक्षो भवतीति भावः॥ २०-२१॥

महामुनि कपिलदेवजी अपनी माता देवहूति से ११ श्लोको मे कह रहे है—विशुद्ध अन्तःकरणवाले पुरुष की वेदविहित यज्ञ एवं भगवत्सेवा मे लगी हुई विषयासक्त इन्द्रियों की सत्त्वगुणमय भगवान् के प्रति स्वाभाविक प्रवृत्ति (लगन) को निष्काम भक्ति कहते है। वह भक्ति मुक्ति से भी बढ़कर है। जैसे जठराग्नि खाये हुए अन्न को पचा देती है वैसे ही निष्काम भक्ति[1] लिंग शरीर या आत्मा के आवरक अज्ञान को भस्म कर डालती है। भक्त को असाधारण यत्न के बिना भी मुक्ति मिल जाती है॥ २०-२१॥

—×—

नैकात्मतां मे स्पृहयन्ति
केचिन् मत्पादसेवाभिरता मदीहाः।
येऽन्योऽन्यतो भागवताः प्रसज्य
सभाजयन्ते मम पौरुषाणि॥ २२॥

तस्माद्भक्तेर्गरीयस्त्वं श्रीकपिलवचनेन द्रढयति पञ्चभिः-नैकात्मतामिति। एकात्मतां सायुज्यं मोक्षं न स्पृहयन्ति भक्तिविरोधित्वात् यतः मत्पादसेवायामेव सर्वतोभावेन रताः।

---

१—शरीर दो प्रकार का माना गया है, एक स्थूल शरीर और दूसरा सूक्ष्म शरीर जिसको लिंगशरीर भी कहते हैं। स्थूल शरीर तो मरने के बाद जला दिया जाता है, किन्तु लिंग शरीर का सम्बन्ध जन्मान्तर में बना रहता है। जब तक उसका नाश नहीं होता तब तक जीव की मुक्ति नही होती। भक्ति द्वारा ही वह मुक्ति साध्य है।

अत एव मदीहाः मदर्था ईहा चेष्टा येषां ते। तर्हि प्राधान्येन किं कुर्वन्ति इत्यपेक्षायामाह येऽन्योऽन्यत इति प्रसज्य प्रकर्षेण प्रसक्तिं कृत्वा सभाजयन्ते श्रवणकीर्तनादिना मानयन्तीति॥२२॥

जो लोग मेरे चरणकमल की सेवा में निरत है, मेरे लिए ही सारी चेष्टाये किया करते हैं और परस्पर मिलकर मेरे यश का कीर्तन किया करते है। वे भगवद्भक्त एकात्मतारूप मोक्ष की इच्छा नहीं करते, किन्तु भक्ति ही चाहते हैं॥ २२॥

—×—

**पश्यन्ति ते मे रुचिरावतंस-**
**प्रसन्नवक्त्रारुणलोचनानि।**
**रूपाणि दिव्यानि वरप्रदानि साकं**
**वाचं स्पृहणीयां वदन्ति॥ २३॥**

ननु त्वत्पौरुषसभाजनेन किं स्यात्तत्राह-पश्यन्ति ते म इति। प्रसन्नानि वक्त्राणि अरुणानि लोचनानि येषु तैः मद्रूपैः साकं सह एवं परमेश्वरसाक्षाद्दर्शनानन्दो मुक्तौ नास्तीति तात्पर्यार्थः॥ २३॥

हे मातः! वे सन्त लोग प्रसन्नमुख एवं अरुण नेत्रों से सम्पन्न वरदेनेवाले मेरे दिव्य स्वरूपों का दर्शन पाते हैं और मेरे साथ मीठी-मीठी बातें करते है॥ २३॥

—×—

**तैर्दर्शनीयावयवैरुदार-**
**विलासहासेक्षितवामसूक्तैः।**
**हृतात्मनो हृतप्राणांश्च भक्ति-**
**रनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते॥ २४॥**

मुक्तिसुखं त्वनायासेन भवतीत्याह तैरिति। तैरूपैर्हेतुभिः हृतात्मनः हृतान्तःकरणान् हृतप्राणान् हृतबहिरिन्द्रियान् अनिच्छतोऽपि भक्तान् मम भक्तिः अण्वीं सूक्ष्मां मोक्षलक्षणां गतिं दशाम् अपृथगायासलभ्यत्वाल्लघुतरां वा गतिं मुक्तिं भक्तिसुखात् अण्वीमिति वा भारं ग्रामं प्रापयतीतिवत् प्रयुङ्क्ते प्रापयतीत्यर्थः। किं भूतैरूपैः उदारो विलासो लीला हासस्तथा ईक्षितं तैर्वामं मनोहरं सूक्तं येषु तैः॥ २४॥

विलास, हास, दर्शन एवं मधुर भाषणों से अत्यन्त स्मरणीय एवं अति दर्शनीय अवयववाले मेरे स्वरूपों से जिनके मन और प्राण मेरी ओर आकृष्ट हो जाते हैं, उन मेरे भक्तों को मोक्ष की इच्छा नहीं होती, तो भी मेरी भक्ति उन्हें मुक्ति देती ही है[१] ॥ २४ ॥

—×—

अथो विभूतिं मम मायिनस्तामैश्वर्य्यमष्टाङ्गमनुप्रवृत्तम् ।
श्रियं भागवतीं वा स्पृहयन्ति भद्रां परस्य ते मेऽश्नुवते नु लोके ॥ २५ ॥

एवं विभूत्यादिकमपि भक्तावयत्नसाध्यमित्याह–अथो इति । अविद्यानिवृत्यनन्तरं तां विभूतिं सत्यलोकादिगतां भोगसम्पत्तिं अणिमाद्यष्टाङ्गैश्वर्य्यं च अनुप्रवृत्तं भक्तिमनु स्वत एव प्रवृत्तं भागवतीं वैकुण्ठस्थां श्रियं सम्पत्तिम् अस्पृहयन्ति ते न स्पृहयन्ति, यद्यपि तथापि लोके वैकुण्ठाख्ये अश्नुवत एव प्राप्नुवन्त्येव ॥ २५ ॥

और मेरे भक्तजन वैकुण्ठधाम में पहुँचकर मेरी माया से रचित अणिमादि ऐश्वर्यसिद्धि को भोगना नहीं चाहते, तो भी वे मेरे वैकुण्ठधाम में नित्यानन्दमय सुखभोग को पाते ही हैं। वहाँ वे सिद्धियाँ उनके पास नित्य उपस्थित रहती ही है[२] ॥ २५ ॥

—×—

न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नोऽनिमिषो लेढि हेतिः ।
येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥ २६ ॥

नन्वेवं तर्हि लोकत्वाविशेषात् स्वर्गादिवद् भोक्तृयोग्यानां कदाचिद्विनाशः स्यादित्याशङ्क्याह न कर्हिचिदिति । हे शान्तरूपे देवहूति मातः ! शान्तं शुद्धं यत् सत्त्वं तद्रूपे वैकुण्ठे

१—यहाँ मुक्ति से भक्तिमार्ग का उत्कर्ष दिखाया गया है। वास्तविक भक्त मुक्ति नहीं चाहते।

२—भक्ति से मुक्ति तो मिलती ही है, किन्तु उसमें विभूति का भी अभाव नहीं होता। अर्थात् भक्ति से मुक्ति एवं विभूति दोनों का लाभ होता है।

वा मत्पराः कदाचिदपि न नङ्क्ष्यन्ति, भोगहीना न भविष्यन्तीत्यर्थः। यतः तत्र कालोऽपि न प्रभवतीत्याह अनिमिषः निमेषशून्यः परग्रासे सर्वदा जाग्रद्रूपः मे मम हेतिः अस्त्रं कालचक्रमित्यर्थः। तान् नो लेढि न ग्रसति कुतः! येषामिति। सुत इव स्नेहविषयः सखेव विश्वासास्पदं गुरुरिव हितोपदेष्टा यतः सुहृदिव हितकारी इष्टं दैवं इष्टदेवतेव पूज्यः एवं प्रियः विषयवत्। आत्मा देहः तद्वत् न तु आत्मा सरूपं साधारण्यात् तदभिमानस्य त्वत्राविवक्षितत्वात्। एवं सर्वभावेन ये मां भजन्ति तान् न कालचक्रं ग्रसतीत्यर्थः। अयं प्रकरणार्थः यः सकामो भक्तौ प्रवृत्तः पश्चात्स्वादं लब्ध्वा तान् विहाय भक्तिमेवेच्छति करोति च। तस्य पूर्वकामान् कदाचिद्भगवान् पूरयत्येव, भक्तकामितार्थप्रदातृत्वनियमात्। तदिदमुक्तमनिच्छतोऽपि यस्तु श्रुत्वा वा प्रसङ्गात् अनुभूय भक्तिस्वादं निष्काम एव भगवन्तं भजते तस्य भक्तिसुखं सदा भवत्येवेति। अधिकन्तु वैकुण्ठलोके ऐश्वर्य्यादि सुखमसाधारणमिति भक्तिःप्रसिद्धसिद्धेरप्यधिकेति दिक्॥ २६॥

हे शान्ति की मूर्ति मा! उन मेरे भक्तों का न तो कभी नाश होता है, न मेरा कालरूपी सुदर्शन चक्र ही उन पर कभी चोट कर पाता, उनका मैं प्राणों के समान प्यारा, पुत्र के समान स्नेहभाजन, मित्र के समान विश्वासी, सुहृद के समान हितैषी, गुरु के समान शिक्षक और इष्टदेव के समान पूजनीय हूँ। तात्पर्य यह है कि जो सर्वभाव से मेरा भजन करता है, मेरा कालचक्र उसका कुछ भी नहीं बिगाड़ सकता है॥ २६॥

—×—

इमं लोकं तथैवामुमात्मानमुभयायिनम्।
आत्मानमनु ये चेह ये रायः पशवो गृहाः॥ २७॥
विसृज्य सर्वानन्यांश्च मामेव विश्वतोमुखम्।
भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये॥ २८॥
नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात्।
आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते॥ २९॥
(३।२५।३१–४० कपिलः)

एवं भूतां भक्तिम् भक्तेभ्यो ददामि नान्येभ्यः इति तद्वाक्येनैवाह—द्वाभ्याम् इममित्याभ्याम्। उभयायिनं लोकद्वयगामिनम् आत्मानं सोपाधिकम् आत्मानम् अनु ये पुत्रकलत्रादयः ये पश्वादयः रायो धनानि, अन्यांश्च परिग्रहान् विसृज्य मां भजन्ति। मृत्योः संसारात् अतिपारये

अतिपारयामि तादृशभक्तिदानेन संसारपारं नयामीत्यतिपदस्यार्थः। अन्येभ्यस्तु निर्वाणादीन् ददामीति भावः। अतो न केवलभक्तमुमुक्षुभक्तयोरप्यविशेष इति स्वतः पुरुषार्थो भक्तिरिति द्रष्टव्यम् ॥ २७-२८ ॥

अभक्तानां तु न कथञ्चिन्मोक्ष इत्याह—तद्वाक्येनैव नान्यत्रेति। मत् मत्तो भगवतः अन्यत्र मां विना सर्वभूतानां आत्मनः भगवतः इत्यैश्वर्य्यं प्रधानपुरुषयोरीश्वरादिति निरपेक्षितत्वम्। आत्मन इति हितकारित्वं तीव्रं संसारलक्षणम् ॥ २६ ॥

जो मेरे भक्त इस लोक, परलोक तथा दोनो लोकों में गमनशील आत्मा और आत्मा के अनुगामी पुत्र, कलत्र आदि आत्मीय जनों का, धन-दौलत, हाथी-घोड़ा, परिवार आदि वैभव का त्यागकर अनन्यभाव से मेरा भजन करते है, उनको मै जन्म-मृत्यु रूप संसार से पार कर देता हूँ। मेरे भजन के अतिरिक्त किसी से भी मृत्यु का भय नही मिटता, क्योंकि मैं सर्वान्तिर्यामी हूँ, मैं प्रकृति एवं पुरुप का स्वामी हूँ और सम्पूर्ण ऐश्वर्यों से सम्पन्न हूँ ॥ २७-२९ ॥

—×—

तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम्।<br>
तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुजम् ॥ ३० ॥<br>
( ३।३२।२२ कपिलः )

परमेष्ठिनं मामेव तान् तान् गुणान् भक्तवात्सल्यादीनधिकृत्य प्रवृत्तया ॥ ३० ॥

इसलिए तुम एकाग्रचित्त से परमपुरुष परमात्मा का भजन करो, क्योंकि उनके चरणकमल भक्तवात्सल्यादि गुणों से सर्वथा भजनीय हैं ॥ ३० ॥

—×—

तमेव वत्साश्रय भृत्यवत्सलं<br>
मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम्।<br>
अनन्यभावे निजधर्म्मभाविते<br>
मनस्यवस्थाप्य भजस्व पूरुषम् ॥३१॥

एवं श्रीकपिलवाक्यमुपसंहृत्य नान्यत्रेत्यत्रैवार्थे ध्रुवं प्रति सुनीतिवाक्यमाह·तमेव वत्सेति। मृग्या अन्वेषणीया पदाब्जयोः पद्धतिः मार्गो यस्य। तमेवाश्रय शरणं भजस्वेत्यन्वयः।

यथा लोकेऽपि भीतः शरणं प्रविश्य सेवां करोति, नान्यस्मिन् भावो यस्य तस्मिन् निजधर्मैर्भाविते शोधिते मनसि संस्थाप्य नित्यं स्मरन् भजस्व । नान्यथा हितसिद्धिरिति वाक्यार्थः ॥ ३१ ॥

सुनीति अपने पुत्र ध्रुवजी से कह रही है—हे वत्स ! मोक्षार्थी लोग भी मोक्षप्राप्ति के लिए जिनके चरणकमलों का ध्यान किया करते है उन भक्तवत्सल श्री भगवान् की शरण लो और स्वधर्माचरण से विशुद्धहृदय में भगवान् का ध्यान करते हुए अनन्यभाव से उनकी आराधना करो ॥ ३१ ॥

—×—

नान्यं ततः पद्मपलाशलोचनाद्
दुःखच्छिदं ते मृगयामि कञ्चन ।
यो मृग्यते हस्तगृहीतपद्मया
श्रियेतरैरङ्ग विमृग्यमानया ॥३२॥
( ४।८।२२ सुनीतिः )

तमेव इत्यनेन सूचितं सर्वोत्तमत्वं प्रपञ्चयति—नान्यमिति । हस्तेन तद्विरहतापशान्त्यर्थं तत्पूजार्थं वा गृहीतं पद्मं यया, हे अङ्ग ध्रुव, इतरैर्ब्रह्मादिभिः ॥ ३२ ॥

हे वत्स ! उस भक्तसन्तापहारी, कमलनयन नारायण के अतिरिक्त दूसरे को मैं नहीं देखती, जो तुम्हारे दुःख को दूर कर सके । मैं भगवान् की महिमा का वर्णन क्या करूँ, जिन्हें प्रसन्न करने के लिए ब्रह्मादि द्वारा आराध्यमान लक्ष्मीजी भी हाथ में कमल लेकर ढूँढ़ती फिरती हैं ॥ ३२ ॥

—×—

अथो[1] भजे त्वाखिलपूरुषोत्तमं
गुणालयं पद्मकरेव लालसः ।
अप्यावयोरेकपतिस्पृधोः कलि-
र्न स्यात् कृतत्वच्चरणैकतानयोः ॥३३॥
( ४।२०।२७ पृथुः )

ननु लक्ष्मीरपि कथं तमेव भजते ? सकलपौरुषशालित्वेन सर्वोत्तमत्वादिति पृथुवचनेनाह द्वाभ्याम्—अथो भजेत्वा इत्याभ्याम् । अथ स्वप्रकरणोक्तहेतोस्त्वामेव भज इति साधारणम् । एतद् दृष्टान्तेन स्पष्टयति—पद्मकरा लक्ष्मीरिव यथान्यवरत्यागेन लक्ष्मीस्त्वां भजते तद्वत् । नन्वेवं

१–अथा—इति पाठान्तरम् ।

तर्हि तया सह कलहः स्यात् । तत्राह—एकस्मिन् पत्यौ त्वयि स्पर्द्धमानयोरावयोः कर्मिणामिन्द्रादिनेव मे मया सह कलिर्न्न स्यात् । तत्र हेतुः कृतस्त्वच्चरणयोरेकस्तानो मनोविस्तारो याभ्यां त्वच्चरणमहिम्ना कलिर्न स्यादिति भावः । यद्वा, अपिशब्दो वितर्कार्थः । तया सह कलिः किन्न स्यादिति वितर्कयति कलिहेतुः—एकेति । ननु पर्यायेण सेवायां न स्यात् । नेत्याह—कृतेति । अविशेषाद् युगपदिति विशेषः ॥ ३३ ॥

राजा पृथु भगवान् के दर्शन होने पर कहते हैं—भगवन् ! यदि पद्महस्ता लक्ष्मीजी के समान गुणों के आकर सभी पुरुषों में श्रेष्ठ आपको मैं भी प्रेम से भजूँ, तो ऐसा तो न होगा कि हम दोनों में कलह हो जाय ? क्योंकि हम दोनों की अभिलाषा एक ही पति ( आप ) की है और हम दोनों आपके चरणारविन्द के समान अनुरागी हैं ॥ ३३ ॥

—x—

जगज्जनन्यां जगदीशवैशसं
स्यादेव यत्कर्मणि नः समीहितम् ।
करोषि फल्ग्वप्युरुदीनवत्सलः
स्व एव धिष्ण्येऽभिरतस्य किं तया ॥३४॥
( ४।२०।२८ पृथुः )

अथापि मे भयं नास्तीत्याह—जगज्जनन्यामिति । यत्कर्मणि यस्याः कर्मणि त्वत्सेवारूपे नः समीहितं नोऽस्माकमिच्छा भवति । अभयहेतुमाह—करोषि फल्गु तुच्छमप्युरु करोषि, यतो दीनवत्सलः । निःस्पृहश्चेत्याह—स्वस्वरूप एवाभिरतस्य तव किं तया प्रयोजनम्, तां नाद्रियस इत्यर्थः । एवं प्रकृत्यैव भगवतो भक्तवात्सल्यं दर्शितम् । वस्तुतस्तु विष्णुभक्तान् मातेवानुगृह्णाति लक्ष्मीः, तदुक्तम्—जगज्जनन्यामिति ॥ ३४ ॥

हाँ जगन्माता लक्ष्मीजी के साथ हमारा विरोध तो अवश्य होगा ही, क्योंकि उनके कार्य में मेरी भी चेष्टा है, किन्तु उस सम्भावित विरोध के डर से मैं आपके सेवासंकल्प को नहीं छोड़ सकता । कारण—मुझे मालूम है कि आप ऐसे दीनवत्सल हैं कि अपने भक्तों के थोड़े से प्रयास को भी बहुत मान लेते हैं । अतः आप मेरा पक्षपात करेंगे ही और दूसरी बात यह है कि आप तो अपने आनन्दमय स्वरूप में ही निमग्न रहते हैं, तब लक्ष्मीजी से क्या मतलब ? ॥ ३४ ॥

—x—

य: परं रहसः साक्षात् त्रिगुणाज्जीवसंज्ञितात्।
भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे ॥३५॥
( ४।२४।२८ रुद्रः )

एवं विष्णुभक्तो रुद्रस्यापि प्रियो भवतीत्यत्र प्रचेतसः प्रति रुद्रवचनमाह द्वाभ्याम्— यः परमिति। यः साक्षाद्वासुदेवं प्रपन्नः स हि स एव मे प्रियः, प्रियकृदपराधेऽपि नाप्रिय इति वा। कथं भूतम्? रहसः सूक्ष्मात् त्रिगुणात् प्रधानाद् जीवसंज्ञितात् पुरुषाद्यः परं प्रकृति-पुरुषयोर्नियन्तार-मित्यर्थः ॥ ३५ ॥

रुद्रजी प्रचेताओं से कहते हैं—जो मनुष्य सूक्ष्म त्रिगुणात्मक प्रकृति और पुरुष, जिनको जीव भी कहते हैं, उन दोनों के नियामक भगवान् वासुदेव का शरणागत है, वह मेरा अत्यन्त प्रिय है ॥३५॥

—×—

अथ भागवता यूयं प्रियाः स्थ भगवान् यथा।
न मे भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥३६॥
( ४।२४।३० रुद्रः )

अत एव यूयं मे प्रिया इत्याह—अथेति। भवद्भिरपि मयि प्रीतिः कार्येत्याशयेनाह। मत् मत्तोऽन्यः ॥ ३६ ॥

हे भगवद्भक्तों! आप लोग वैसे ही मेरे प्रिय हों, जैसे भगवान् नारायण मुझे प्रिय हैं। नारायण के अतिरिक्त दूसरा कोई न मेरा प्यारा है, न भगवद्भक्तों का[१] ॥ ३६ ॥

—×—

तत्कर्म हरितोषं यत् सा विद्या तन्मतिर्यया।
हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ॥३७॥
( ४।२९।४९ नारदः )

---

१—श्रीमद्भागवत में भगवान् शङ्कर के मुख से नारायण की स्तुति कराने का यह अभिप्राय है कि शैव लोग वैष्णवों से और वैष्णव शैवों से द्वेष न रखें। दोनो के आराध्य देवों में परस्पर अनन्यता है। इसी अभिप्राय से पद्मपुराण में लिखा है कि—

शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः।
उभयोरन्तरं नास्ति यः पश्यति स मूढधीः ॥

तर्हि तया सह कलहः स्यात् । तत्राह—एकस्मिन् पत्यौ त्वयि स्पर्द्धमानयोरावयोः कर्मिणामिन्द्रादिनेव मे मया सह कलिर्न स्यात् । तत्र हेतुः कृतस्त्वच्चरणयोरेकस्तानो मनोविस्तारो याभ्यां त्वच्चरणमहिम्ना कलिर्न स्यादिति भावः । यद्वा, अपिशब्दो वितर्कार्थः । तया सह कलिः किन्न स्यादिति वितर्कयति कलिहेतुः—एकेति । ननु पर्यायेण सेवायां न स्यात् । नेत्याह—कृतेति । अविशेषाद् युगपदिति विशेषः ॥ ३३ ॥

राजा पृथु भगवान् के दर्शन होने पर कहते हैं—भगवन् ! यदि पद्महस्ता लक्ष्मीजी के समान गुणों के आकर सभी पुरुषों में श्रेष्ठ आपको मैं भी प्रेम से भजूं, तो ऐसा तो न होगा कि हम दोनों में कलह हो जाय ? क्योंकि हम दोनों की अभिलाषा एक ही पति ( आप ) की है और हम दोनों आपके चरणारविन्द के समान अनुरागी हैं ॥ ३३ ॥

—×—

जगज्जनन्यां जगदीशवैशसं
स्यादेव यत्कर्मणि नः समीहितम् ।
करोषि फल्ग्वप्युरुदीनवत्सलः
स्व एव धिष्ण्येऽभिरतस्य किं तया ॥३४॥
( ४।२०।२८ पृथुः )

अथापि मे भयं नास्तीत्याह—जगज्जनन्यामिति । यत्कर्मणि यस्याः कर्मणि त्वत्सेवारूपे नः समीहितं नोऽस्माकमिच्छा भवति । अभयहेतुमाह—करोषि फल्गु तुच्छमप्युरु करोषि, यतो दीनवत्सलः । निःस्पृहश्चेत्याह—स्वस्वरूप एवाभिरतस्य तव किं तया प्रयोजनम्, तां नाद्रियस इत्यर्थः । एवं प्रकृत्यैव भगवतो भक्तवात्सल्यं दर्शितम् । वस्तुतस्तु विष्णुभक्तान् मातेवानुगृह्णाति लक्ष्मीः, तदुक्तम्—जगज्जनन्यामिति ॥ ३४ ॥

हाँ जगन्माता लक्ष्मीजी के साथ हमारा विरोध तो अवश्य होगा ही, क्योंकि उनके कार्य में मेरी भी चेष्टा है, किन्तु उस सम्भावित विरोध के डर से मैं आपके सेवासंकल्प को नहीं छोड़ सकता । कारण—मुझे मालूम है कि आप ऐसे दीनवत्सल हैं कि अपने भक्तों के थोड़े से प्रयास को भी बहुत मान लेते हैं । अतः आप मेरा पक्षपात करेंगे ही और दूसरी बात यह है कि आप तो अपने आनन्दमय स्वरूप में ही निमग्न रहते हैं, तब लक्ष्मीजी से क्या मतलब ? ॥ ३४ ॥

—×—

यः परं रहसः साक्षात् त्रिगुणाज्जीवसंज्ञितात् ।
भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे ॥३५॥
( ४।२४।२८ रुद्रः )

एवं विष्णुभक्तो रुद्रस्यापि प्रियो भवतीत्यत्र प्रचेतसः प्रति रुद्रवचनमाह द्वाभ्याम्—यः परमिति। यः साक्षाद्वासुदेवं प्रपन्नः स हि स एव मे प्रियः, प्रियकृदपराधेऽपि नाप्रिय इति वा। कथं भूतम्? रहसः सूक्ष्मात् त्रिगुणात् प्रधानाद् जीवसंज्ञितात् पुरुषाद्यः परं प्रकृति-पुरुषयोर्नियन्तारमित्यर्थः ॥ ३५ ॥

रुद्रजी प्रचेताओं से कहते हैं—जो मनुष्य सूक्ष्म त्रिगुणात्मक प्रकृति और पुरुष, जिनको जीव भी कहते हैं, उन दोनों के नियामक भगवान् वासुदेव का शरणागत है, वह मेरा अत्यन्त प्रिय है ॥३५॥

—×—

अथ भागवता यूयं प्रियाः स्थ भगवान् यथा ।
न मे भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥३६॥
( ४।२४।३० रुद्रः )

अत एव यूयं मे प्रिया इत्याह—अथेति। भवद्भिरपि मयि प्रीतिः कार्येत्याशयेनाह। मत् मत्तोऽन्यः ॥ ३६ ॥

हे भगवद्भक्तों ! आप लोग वैसे ही मेरे प्रिय हों, जैसे भगवान् नारायण मुझे प्रिय है। नारायण के अतिरिक्त दूसरा कोई न मेरा प्यारा है, न भगवद्भक्तों का[१] ॥ ३६ ॥

—×—

तत्कर्म हरितोषं यत् सा विद्या तन्मतिर्यया ।
हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ॥३७॥
( ४।२९।४९ नारदः )

---

१—श्रीमद्भागवत में भगवान् शङ्कर के मुख से नारायण की स्तुति कराने का यह अभिप्राय है कि शैव लोग वैष्णवों से और वैष्णव शैवों से द्वेष न रखें। दोनों के आराध्य देवों में परस्पर अनन्यता है। इसी अभिप्राय से पद्मपुराण में लिखा है कि—

शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः।
उभयोरन्तरं नास्ति यः पश्यति स मूढधीः ॥

एवं रुद्रवाक्यमुदाहृत्य "स वै पुंसां परो धर्मः" इत्यनेनोक्तं सर्वोपायानां भगवत्परत्वं युक्तमेवेत्याह—तत्कर्मेति। हरेस्तोषो येन तस्मिन् हरौ मतिर्यया अत्र हेतुर्हरिरिति। हरिर्देहभृतामात्मा ईश्वरश्च। तत्र हेतुः स्वयं स्वातन्त्र्येण प्रकृतिः कारणम् ॥ ३७ ॥

नारदजी प्राचीन बर्हि से कहते है :—वही कर्म है जिससे हरि को सन्तोष हो, वही विद्या है जिससे भगवान् में विश्वास और भक्ति हो। हरि प्राणिमात्र के अन्तर्यामी परमात्मा हैं और उनके एकमात्र कारण और प्रभु हैं ॥ ३७ ॥

—×—

यस्यास्ति भक्तिर्भगवत्यकिञ्चना
सर्वैर्गुणैस्तत्र समासते सुराः।
हरावभक्तस्य कुतो महद्गुणा
मनोरथेनासति धावतो बहिः ॥३८॥
(५।१८।१२ प्रह्लाद)

अत एव देवतान्तरोपासनमपि भगवद्भक्तावन्तर्भवतीत्यन्वयव्यतिरेकत्वेनाह—यस्यास्तीति। अकिञ्चना निष्कामा मनःशुद्धौ हरेर्भक्तिर्भवति, ततश्च तत्प्रसादे सति सर्वे देवाः सर्वैर्गुणैर्धर्मज्ञानादिभिः सह तत्र सम्यगासते नित्यं वसन्ति। गृहाद्यासक्तस्य तु हरिभक्त्यसम्भवात्। कुतः? महतां गुणा ज्ञानवैराग्यादयो भवन्ति। असति विषयसुखे मनोरथेन बहिर्धावतः ॥ ३८ ॥

प्रह्लादजी भगवद्भक्ति की प्रशंसा करते हैं—जिसकी नारायण में निष्काम-भक्ति है उस भक्त में देवता लोग धर्म, ज्ञान, वैराग्य आदि सकल सद्गुणों के साथ निवास करते हैं और जो नारायण का भक्त नहीं है एवं मनोरथों से बँधकर असद्विषयक सुख के पीछे-पीछे दौड़ता रहता है उसको महापुरुषों के गुण कहाँ से प्राप्त हो सकते है ? ॥ ३८ ॥

—×—

हरिर्हि साक्षाद्भगवान् शरीरिणा-
मात्मा झषाणामिव तोयमीप्सितम्।
हित्वा महांस्तं यदि सज्जते गृहे
तदा महत्त्वं वयसा दम्पतीनाम् ॥३९॥
(५।१८।१२-१३ प्रह्लादः)

ननु हरिविमुखस्य[1] गृहाद्यासक्तस्यापि लोके महत्त्वं दृश्यते तत्राह—हरिरिति। यथा

१–भक्तिरहितस्येति पाठान्तरम्।

ाणां मीनानामीप्सितं तोयमेवात्मा, तेन विना जीवनाभावात् । महानिति निखिलगुण-सिद्धोऽपि हरिमीदृशं हित्वा यदि गृहे सज्जते, तदा दम्पतीनां मिथुनानां शूद्रादिष्वपि प्रसिद्धं यसैव केवलं यन्महत्त्वं तदेव तस्य भवति, न तु ज्ञानादिना। मिथुनेषु पूज्यमानेषु स्त्रीभ्यः सां महत्त्वं बालमिथुनेभ्यश्च वृद्धमिथुनानां महत्त्वं यथेत्यर्थः तन्महत्त्वमुपहासास्पदमिति ावः ॥ ३६ ॥

जैसे मछलियों का प्राण जल है, क्योंकि उसके विना वे जी नहीं सकतीं, से ही भगवान् हरि प्राणिमात्र के प्रिय प्राण है। जो हरि को छोड़कर घर-गृहस्थी में ासक्त रहते हैं उनका ज्येष्ठत्व उनकी अवस्था से ही माना जाता है, जैसा कि लोकव्यवहार अनुसार स्त्री और पुरुष के जोड़े में पुरुष बड़ा माना जाता है। सारांश यह है कि से लौकिक व्यवहार में अवस्था ही महत्त्व का कारण है वैसे ही हरिविमुख प्राणी में वस्थाप्रयुक्त महत्त्व भले ही मिल जाय, किन्तु असली ज्ञान आदि से प्रयुक्त महत्त्व नहीं ाना जा सकता, अर्थात् भगवद्भक्ति के विना ज्ञान की प्राप्ति सर्वथा असम्भव है ॥ ३९ ॥

—×—

स वै पतिः स्यादकुतो भयः स्वयं
समन्ततः पाति भयातुरं जनम् ।
स एक एवैतरथा मिथो भयं
नैवात्मलाभादधिमन्यते परम् ॥४०॥
(५।१८।२० रमा)

तदेवं सर्वात्मना भगवानेव भजनीयः, न त्वन्ये देवादयोऽपि; स्वरक्षायामप्यक्षमत्वादित्या-येनाह—स वै पतिरिति। स वै एवंभूतो भगवानेक एव, नान्यः। यो भगवान् आत्मलाभात् रमन्यद् अधि अधिकं न मन्यते। इतरथाऽन्याधीनसुखस्य न स्वतन्त्रता, स्वतन्त्राणां नानात्वेन मण्डलेश्वराणामिव मिथो भयं स्यात् ॥ ४० ॥

लक्ष्मीजी भगवान् की स्तुति करती हैं—वही प्रभु कहलाने के योग्य है, जो स्वयं र्भय है और भयभीत प्राणियों की सब तरह से रक्षा करता है। इस प्रकार परमात्मा ही कमात्र प्रभु हैं, उनके अतिरिक्त कोई दूसरा प्रभु नहीं है। यदि दूसरा प्रभु मान लिया जाय, ो सामन्त राजाओं के समान उन्हें भी परस्पर भय होगा, फिर वे क्या पालन कर केंगे ? इससे सिद्ध होता है कि आपसे परे कोई दूसरा प्रभु नहीं है, आप ही 'पति' शब्द-

वाच्य हैं। अतः शास्त्रज्ञ विद्वान् परमात्मा की प्राप्ति से बढ़कर श्रेष्ठ वस्तु अन्य कुछ नहीं मानते ॥ ४० ॥

—×—

सुरोऽसुरो वाऽप्यथ वानरो नरः
सर्वात्मना यः सुकृतज्ञमीश्वरम्।
भजेत रामं मनुजाकृतिं हरिं
य उत्तराननयत् कोशलान् दिवम् ॥४१॥
(५।१९।८ हनूमान्)

अतः श्रीभगवानेव सर्वैः सेव्य एव, न तु सत्कुलजन्मादिकं तस्य तोषहेतुरित्यत्र हनूमद्वचनमुदाहरति द्वाभ्याम्—सुरोऽसुरो वेति। सुरो देवः, असुरो दैत्यः; नरो मनुष्यः, अनरो मनुष्यादन्यो यः कोऽपि हरिं भजेत स एवोत्कर्षात्तोषमाप्नोतीति विशेषः। मनुजाकृतिमिति। उपासनाभिप्रायं सुकृतज्ञमल्पीयस्यपि भजने बहुमानिनमुत्तरान् कोशलान् अयोध्यावासिनो दिवं वैकुण्ठमनयत् ॥ ४१ ॥

हनुमान्‌जी भगवान् राम की स्तुति करते हैं—चाहे सुर हो, चाहे असुर हो, चाहे दूसरा जीव हो, सबको उचित है कि उस मनुष्यरूपधारी श्रीरामजी का भजन करे, जिसने समस्त अयोध्यावासियों को स्वर्ग में पहुँचा दिया[1] ॥ ४१ ॥

—×—

न जन्म नूनं महतो न सौभगं
न वाग् न बुद्धिर्नाकृतिस्तोषहेतुः।

---

१—'सुर' शब्द का अर्थ देवता तथा 'असुर' शब्द का अर्थ दैत्य है, असुर शब्द के व्याख्यान में विद्वानों ने बड़ी-बड़ी कल्पनायें की है—'न सुरः असुरः' यह तो साधारण व्युत्पत्ति है, परन्तु वेद में असुर शब्द वीर्यवान् (बली) के अर्थ में भी आता है और कहीं-कहीं देवों के विशेषण रूप से भी प्रयुक्त हुआ है। 'असु' प्राणवाचक शब्द है जिसको प्राण (बल) है वह असुर है। प्राचीनकाल के असीरियन जाति के बादशाहों के नाम के अन्त में 'असुर' शब्द का प्रयोग देखने में आया है। देवजाति के आर्यों के साथ विरोध रखने के कारण वे जब घृणित समझे जाने लगे, तबसे असुर शब्द लौकिक संस्कृत में दुष्ट दैत्यों का वाचक हो गया। यहाँ तक कि भाषा में यह शब्द बदमाश अर्थ में भी प्रयुक्त होने लगा है। जैसे—यह तो बड़ा असुर पैदा हुआ है।

तैर्यद्विसृष्टानपि नो वनौकस-
श्चकार सख्ये वत लक्ष्मणाग्रजः ॥४२॥
(५।१९।७ हनूमान्)

तत्रात्मानमेव दृष्टान्तयति—न जन्म नूनमिति। महतः पुरुषाज्जन्म, महतो रामस्य वा सौभगं सौन्दर्यमाकृतिर्जातिर्यद् यस्मात् तैर्जन्मादिभिर्विसृष्टानपि नो वनौकसः, वनेचरान् वत अहो लक्ष्मणस्याग्रजोऽपि सखित्वे कृतवान् अनुगृहीतवानित्यर्थः ॥ ४२ ॥

महानुभाव श्रीरामचन्द्रजी के सन्तोष के लिए न तो महान् वंश में जन्म होने की आवश्यकता है, न सुन्दर रूप की आवश्यकता है, न मधुर वाणी से स्तुति की जरूरत है, न तीक्ष्ण बुद्धि की आवश्यकता है और न देह के सौन्दर्य की आवश्यकता है, क्योंकि इन सभी गुणों से रहित हम जंगली जीवों को भी उन्होंने अपना मित्र बना लिया ॥ ४२ ॥

—×—

सत्यं दिशत्यर्थितमर्थितो नृणां
नैवार्थदो यत्पुनरर्थिता यतः।
स्वयं विधत्ते भजतामनिच्छता-
मिच्छापिधानं निजपादपल्लवम् ॥४३॥
(५।१९।२७ देवाः)

तेष्वपि निष्कामाः कृतार्था इत्याह—सत्यमिति। अर्थितः प्रार्थितः सन् अर्थितं ददातीति सत्यम्, तथापि परमार्थदो न भवति। यत् यस्माद् यतो दत्तानन्तरं पुनरप्यर्थिता भवति। ननु नार्थितश्चेन्न किमपि दद्यादित्याशङ्क्याह—अनिच्छतां निष्कामानामिच्छापिधानमाच्छादकं सर्वकामपूरकं निजपादपल्लवं स्वयमेव सम्पादयति, यद्वा कामेनापि भजतां कृपया परमया परम-हितमेव विधत्त इत्याह—सत्यं दिशतीति। आर्थितः सन् अर्थितं दिशतीति सत्यम्। पुनः पुनरर्थितो नैव ददातीति कुतः? यतोऽर्थदः। विषयाश्चानर्थाः, तर्हि किं ददातीत्यपेक्षायामाह—निजपादपल्लवमिच्छापिधानं तेषामनिच्छतामपि विधत्ते। यतः कोऽपि कामो नोदेति। अनर्थ-प्रार्थनेऽपि परमार्थद एव प्रकृतिः। यथा माता बालानां मुखाद् मृदमपनीय रुदतामनिच्छतां शर्करां ददाति, ज्ञातरसो बालो मृदं विहाय शर्करायामनुरज्यते। तदुक्तं कारुणिकत्वात् स्वयमिति ॥ ४३ ॥

देवता लोग भगवान् की विशेषता बतला रहे हैं—इसमें सन्देह नहीं कि सकाम भक्त भगवान् से जो कुछ माँगता है, वे उसका अभीष्ट अवश्य पूर्ण कर देते हैं, किन्तु वे उतना ही देकर नही रह जाते जिसके भोग के अनन्तर उसे पुनः मांगना पड़े। जो निष्काम होकर उन्हें भजता है उसे तो वे अपना पदकमल विना मांगे ही दे देते हैं, जिससे उसकी सारी कामनाये निवृत्त हो जाती है ॥ ४३ ॥

**अथवा**—इसमें सन्देह नही कि भक्तों के प्रार्थना करने पर भगवान् उन्हें मुँहमाँगी चीज़ दे देते है। बारंबार प्रार्थना करने पर भी विषयसुख नहीं देते, क्योंकि वे अर्थ ( अपवर्ग ) देने वाले हैं; विषय अर्थ नही है, किन्तु अनर्थ है। वे भक्तों के न चाहने पर भी उन्हें सर्वकामनानिवर्तक अपना चरणकमल दे देते हैं। जिस प्रकार स्नेहमयी माँ अपने बच्चों के मुख से मिट्टी फेंककर उनके रोने और इनकार करने पर भी उन्हें मिठाई खिला देती है उसी प्रकार दयालु भगवान् न चाहने पर भी भक्तों को अपना चरणकमल दे ही देते हैं, जिससे वह विषयों से निवृत्त होकर भगवान् के चरणकमल में अधिक अनुरक्त हो जाता है।

**अथवा**—भगवान् प्रार्थना करने पर भजनानन्दी पुरुषों को अभिलषित वस्तु अवश्य देते हैं, किन्तु जिस प्रकार भोग के बाद पुनः माँगना पड़े वैसे दाता वे नहीं हैं, क्योंकि वे अपने भक्तों को न चाहने पर भी सम्पूर्ण कामनाओं का निवर्तक अपना चरणकमल कृपापूर्वक अवश्य दे देते हैं ॥४३॥

—x—

**तत्साधु मन्येऽसुरवर्य देहिनां**
**सदा समुद्विग्नधियामसद्ग्रहात्।**
**हित्वात्मपातं गृहमन्धकूपं**
**वनं गतो यद्धरिमाश्रयेत ॥४४॥**

**( ७।५।५ प्रह्लादः )**

ननु महान्तोऽपि कामभोगार्थं भजन्ते[1], सत्यं न ते महान्तः, किन्तु विषयभोगत्यागेनैतत्साधुकारित्वमित्यत्र प्रह्लादवचनमुदाहरति—तत्साधु मन्ये इति। हे असुरवर्य! असद्ग्रहाद् अहं ममेति मिथ्याभिनिवेशाद्धेतोः सम्यग् उद्विग्ना धीर्येषाम्, वनं गतः सन् हरिमाश्रयेतेति यत् तदेवं

१–यतन्ते इति पाठान्तरम्।

साधु मन्ये । कथं भूतम्? गृहं हित्वा आत्मनः पातम्, अधःपाते निमित्तम्; कुतः? अन्धकूपवद् मोहावहं वनं गतो गृहादावनासक्तः सन् हरिमाश्रयेत भजेतेति यत्साधु मन्ये, यो हरिमाश्रयेत स एव वनं गतः । अनासङ्ग एव गृहपरित्यागः, न तु सर्वोपायत्वेन वनगमनं मुहुर्दृश्यम् । वस्तुतस्तु वनगमनं सङ्गपरित्यागो बोद्धव्यः, तस्मात् साधूक्तम् "स वै पुंसाम्" इति ॥ ४४ ॥

प्रह्लाद अपने पिता हिरण्यकशिपु से कहते हैं—हे असुरराज ! 'यह मेरा है' इस मिथ्या भाव से जिनकी बुद्धि सदा उद्विग्न रहती है उन प्राणियों के लिए मैं यही उत्तम समझता हूँ कि वे अपने अधःपतन के कारण एवं अन्धकूप के समान दुःखदाई घर का त्याग कर एकान्त में हरि का भजन करें ॥ ४४ ॥

—×—

एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥४५॥
( ६।३।२२ यमः )

यतो भक्तिद्वारा तेषां परत्वमुत्कृष्टत्वम्, भक्तेस्तु स्वत एव परत्वमुत्कृष्टत्वमित्याह । परत्वं भक्तेषु स्वत एव परत्वमित्याह—एतावानिति । पर उत्कृष्टः, अक्षयफलत्वात्; एतावानेव यो भक्तियोगः ॥ ४५ ॥

यमराज अपने दूतों से कहते हैं—इस संसार में पुरुषों का यही प्रमुख धर्म है कि भगवन्नामस्मरणादि से उनकी भक्ति करें ॥ ४५ ॥

—×—

अविस्मितं तं परिपूर्णकामं
स्वेनैव लाभेन समं प्रशान्तम् ।
विनोपसर्पत्यपरं हि बालिशः
श्वलाङ्गूलेनातितितर्ति सिन्धुम्[1] ॥४६॥
( ६।९।२२ देवाः )

अत एव ये भगवत आश्रयं परित्यज्य आश्रयान्तरेण संसारं तर्तुमिच्छन्ति ते न तरन्तीत्याह—अविस्मितमिति । अविस्मितं तं निरहङ्कारम्, कुतः? शान्तं रागादिशून्यं तच्च कुतः? स्वेनैव लाभेन परिपूर्णकामं तच्च । कुतः? उपाधिपरिच्छेदशून्यम् । श्वलाङ्गूलेन समुद्रमतितर्तुमिच्छति यथा तेन समुद्रतरणं न भवति, तथा निरीश्वराश्रयेण व्यसनार्णवतरणं न भवतीति ॥ ४६ ॥

१—श्लोकोऽयं क्वचन न दृश्यते ।

देवता लोग भगवान् से प्रार्थना कर रहे हैं—हे प्रभो ! आपके लिए कोई न
बात न होने के कारण कुछ भी देखकर आप विस्मित नहीं होते। आप अपने स्वरूप
साक्षात्कार से ही सर्वथा पूर्णकाम हैं, सम एवं शान्त हैं। जो आपको छोड़कर दूसरे की शरण
लेता है वह मूर्ख है, मानों वह कुत्ते की पूँछ पकड़कर समुद्र पार करना चाहता है ॥ ४६ ।

—×—

नारायणपराः सर्वे न कुतश्चन बिभ्यति ।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ ४७ ॥
(६।१७।२८ रुद्रः)

नन्वेवं देवपित्रादिभ्योऽभजने भयं स्यान्नेत्याह—नारायणपरा इति। सर्वे स्त्रीशूद्रादयोऽपि
कुतश्चन कस्मादपि न बिभ्यति, न क्वाप्यनुरज्यन्ते वेति भावः; यतः स्वर्गादौ। एवं तुल्योऽर्थः
प्रयोजनमिति द्रष्टुं शीलं येषां ते तथा ॥ ४७ ॥

रुद्र पार्वती जी से कहते हैं—नारायण के भक्त किसी से भी नहीं डरते, क्योंकि वे
स्वर्ग, नरक और मोक्ष को समान समझते हैं ॥ ४७ ॥

—×—

वासुदेवे भगवति भक्तिमुद्वहतां नृणाम् ।
ज्ञानवैराग्यवीर्याणां नेह कश्चिद् व्यपाश्रयः ॥ ४८ ॥
(६।१७।३१ रुद्रः)

अतो भागवतानां निःस्पृहत्वमुचितमेवेत्याह—वासुदेवेति। ज्ञानवैराग्ययोर्वीर्यं बलं येषां
तेषां विशिष्टबुद्धया आश्रयणीयोऽर्थो नास्ति ॥ ४८ ॥

जो मनुष्य भगवान् वासुदेव की भक्ति करनेवाले हैं और ज्ञान तथा वैराग्य में
बल रखते हैं, उनको ऐसा कोई दूसरा नहीं है जिसका वे आश्रय करें ॥ ४८ ॥

—×—

मतिर्न कृष्णे परतः स्वतो वा
मिथोऽभिपद्येत गृहव्रतानाम् ।
अदान्तगोभिर्विशतां तमिस्रं
पुनः पुनश्चर्वितचर्वणानाम् ॥ ४९ ॥
(७।५।३० प्रह्लादः)

तर्हि सर्वैर्भगवानेव किमति न सेव्यते तत्राह—मतिर्न कृष्णेति। परतः स्वतो वा अन्योऽन्यतो वा नाभिपद्येत न सम्पद्येत। केषां गृह एव व्रतं संकल्प इति कृत्यचिन्ता येषाम्, अत एवादान्तैरनुपरतैर्गोभिरिन्द्रियैर्हेतुभूतैः, तमिस्रं संसारं विशताम्; तत्र चर्वितस्यैव चर्वणं येषां तस्माद्विषयसङ्गदोषात् सर्वे तं भजन्त इति भावः ॥ ४६ ॥

प्रह्लाद अपने पिता से कहते हैं :—जो घर में आसक्त हैं उनकी मति न अपनी ओर से और न दूसरों के कहने से भगवान् श्रीकृष्ण में लगती है। विषयलोलुप इन्द्रियों द्वारा संसार में अधिकाधिक प्रवेश करते जाते हैं और अतीत जन्मों में बार-बार अनुभूत पदार्थों का भोग करते रहते हैं ॥ ४९ ॥

—X—

न ते विदुः स्वार्थगतिं हि विष्णुं
दुराशया ये बहिरर्थमानिनः।
अन्धा यथान्धैरुपनीयमाना
वागीशतन्त्यामुरुदाम्नि बद्धाः ॥ ५० ॥
( ७।५।३१ प्रह्लादः )

ननु श्रीकृष्णस्य परमानन्दरूपत्वात् तेऽपि तन्निष्ठा एव किन्न भवन्ति ! तदज्ञानादित्याह—न ते विदुरिति। ये दुराशयाः विषयवासितान्तःकरणास्ते हि न विदुः। तत्र हेतुः—स्वस्मिन्नेवार्थः पुरुषार्थो येषां तेषां गतिं गम्यम्। ननु तेऽपि गुरूपदेशाद्विष्णुं ज्ञास्यन्ति, तत्राह—बहिर्विषयेष्वर्थो येषां ते बहिर्थास्तानेव गुरुत्वेन मन्तुं शीलं येषां ते नित्यं विषयासक्तचरितश्रद्धालव इत्यर्थः। अतोऽन्धैरुपनीयमानाः। अन्धा यथा पन्थानं न विदुः, किन्तु गर्ते पतन्ति, तथा तेऽपीशस्य तन्त्यां दीर्घरज्ज्वां वेदलक्षणायामुरूणि दामानि ब्राह्मणादिनामानि यस्यां तस्यां काम्यैः कर्मभिर्बद्धा एव भवन्तीत्यर्थः। तदुक्तम्—'विषयाविष्टचित्तानां विष्ण्वावेशः सुदूरतः। वारुणीदिगन्तं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात्।" तस्माद् यावद्विषयवासना नाक्रमन्ति तावदारभ्य सर्वास्ववस्थासु भगवानेव भजनीय इति समुदायार्थः ॥ ५० ॥

सांसारिक पुरुषों को गुरु माननेवाले विषयासक्त लोग भगवान् को, जो एकान्त भगवद्भक्तों की गति हैं, निश्चय रूप से नहीं जान पाते। जैसे अन्धे, अन्धे मार्गप्रदर्शक द्वारा मार्ग नहीं पाते, किन्तु गड्ढे में गिर जाते हैं, वैसे ही वे लोग भी वेदवाणी (वैदिक कर्मकाण्ड) रूप दीर्घबन्धन में बँध जाते हैं ॥ ५० ॥

—x—

कौमार आचरेत् प्राज्ञो धर्मान् भागवतानिह ।
दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ ५१ ॥
( ७।६।१ प्रह्लादः )

तदेवाह—कौमार इति । इहैव मानुषजन्मनि धर्मान् आचेरत्, यत अर्थदमेतत् । तत्र च कौमार एव, यतस्तदप्यध्रुवम् । न चैवंभूतं जन्मान्तरम्, यतस्तद्दुर्लभम् । तत्र धर्मानेवाचरेत्, न सुखार्थे प्रयासान् । तत्रापि भागवतानेव, न काम्यान् । कौमार एव कौमारमारभ्येत्यर्थः ॥ ५१ ॥

प्रह्लाद असुर बालकों से कहते हैं—बुद्धिमान् मनुष्य को इसी जन्म में, तत्रापि बाल्यावस्था में ही भक्तिधर्म का अनुष्ठान करना चाहिए; क्योंकि मनुष्य-जन्म दुर्लभ और साथ ही पुरुषार्थप्रद है । अतः पुरुषार्थसाधक, दुर्लभ एवं क्षणिक इस मनुष्य-जन्म से स्थायी पुरुषार्थ सिद्धकर लेना चाहिए ॥ ५१ ॥

—×—

न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः ।
आत्मत्वात् सर्वभूतानां सिद्धत्वादिह सर्वतः ॥ ५२ ॥
( ७।६।१९ प्रह्लादः )

न च बालवृद्धानां तद्भजनमशक्यमित्यत्र प्रह्लादवचनमाह—न ह्यच्युतमिति । हे असुरात्मजाः ! न ह्यात्मभजने प्रयासो भवति, न च दुर्लभ इत्याह—सिद्धेति ॥ ५२ ॥

हे असुरबालको ! भगवान् को प्रसन्न करने में अधिक परिश्रम नहीं है; क्योंकि वे सभी की आत्मा हैं और सदा सर्वत्र विराजमान हैं ॥ ५२ ॥

—×—

कोऽतिप्रयासोऽसुरबालका हरे-
रुपासने स्वे हृदि छिद्रवत् सतः ।
स्वस्यात्मनः सख्युरशेषदेहिनां
सामान्यतः किं विषयोपपादनैः ॥ ५३ ॥
( ७।७।३८ )

तथा हेत्वन्तरमप्याह—कोऽतीति । छिद्रवद् आकाशवत् सदा वर्तमानस्य विषयाणामुपपादनैः, अर्जनैः किम् ? तत्र हेतुः—सर्वदेहिनां सामान्यतः साम्यम् ॥ ५३ ॥

हे असुरबालको ! अपने हृदय में आकाश के समान सर्वदा वर्तमान अपने स्वरूप एवं सखा के समान हितैषी हरि की उपासना में कोई परिश्रम नहीं है । सभी जीव

समानरूप से विषयाभिलाषा करेंगे, तो उनमें और शूकरों में भेद ही क्या रह जायगा ? अतः विषयों के उपार्जन से क्या प्रयोजन ? ॥ ५३ ॥

—x—

रायः कलत्रं पशवः सुतादयो
गृहा महीकुञ्जरकोशभूमयः ।
सर्वेऽर्थकामाः क्षणभङ्गुरायुषः
कुर्वन्ति मर्त्यस्य कियत् प्रियं बलाः ॥ ५४ ॥
( ७।७।३९ )

तस्माद्विषयाणां शूकरादिसाधारणत्वात् तन्निष्ठत्वे तैरपि विशेषापत्तेः, निष्फलं च विषयार्जनमित्याह—राय इति । रायः = अर्थाः । क्षणं भङ्गुरमायुर्यस्य येषामर्थादीनां वा, अत एव बालाः, तदुक्तमितिहासे—"धनं हि पुरुषो लोके पुरुषं धनमेव च । अवश्यमेकं त्यजति तस्मात् किं धनतृष्णया" ॥ ५४ ॥

धन-दौलत, स्त्री-पुत्र, कुटुम्बी, गौ, घोड़े, पशु, घर, जमीन, जायदाद, हाथी, भोग के सामान और खजाना ये सभी अस्थिर एवं क्षणभंगुर है, ये मनुष्य का कितना कल्याण कर करते हैं ? ॥ ५४ ॥

—x—

एवं हि लोकाः क्रतुभिः कृता अमी
क्षयिष्णवः सातिशया न निर्मलाः ।
तस्माददृष्टश्रुतदूषणं परं
भक्त्यैकयेशं भजतात्मलब्धये ॥ ५५ ॥
( ७।७।४० )

अक्षय्यं हि चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिना श्रुताः स्वर्गादयोऽपि न सेवार्हा इत्याह—एवं हीति । अमी लोकाः स्वर्गादयः । क्षयिष्णुत्वे हेतुः क्रतुभिः कृता इति । तद्यथेह कर्मचितो लोकः क्षीयते । एवमेवामुत्र पुण्यजितो लोकः क्षीयत इति श्रुतेश्च । अत एव पुण्यतारतम्येन सातिशयाः, न्यूनाधिकभावापन्नाः, तस्माद् न च निर्म्मलाः, स्पर्द्धादिमत्त्वात् । न विद्यते दृष्टं श्रुतं च दूषणं यस्मिन् तमीशं भक्त्या उक्तया नवविधया भजत आश्रयत ॥ ५५ ॥

जिस प्रकार ऐहिक पदार्थ नश्वर हैं उसी प्रकार यज्ञों द्वारा संपादित स्वर्गादि लोक भी नश्वर हैं और वहाँ पर पुण्यों के न्यून एवं अधिक होने के कारण ऊँच-नीच का

भेदभाव भी है, तथा स्पर्धा आदि दोषों से युक्त होने के कारण वे निर्मल भी नहीं हैं। अतः परमात्मा की प्राप्ति के लिए एकनिष्ठ भक्ति से तुम लोग उनका भजन करो जिनका दोष न तो कभी देखा ही गया है न सुना ही गया है ॥ ५५ ॥

—×—

तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः।
भजतानीहयात्मानमनीहं हरिमीश्वरम् ॥ ५६ ॥
(७।७।४८ प्रह्लादः)

तस्माद्भक्त्यर्थमेव भजेत, न च धर्माद्यर्थमपि पृथग् यतेतेत्याह —तस्मादिति। यदपाश्रयाः, यदधीनाः। अनीहया भोगानिच्छया ॥ ५६ ॥

इसलिए निष्काम होकर निरपेक्ष परमेश्वर का भजन करो, जिनके अधीन धर्म, अर्थ एवं काम हैं ॥ ५६ ॥

—×—

नालं द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः।
प्रीणनाय मुकुन्दस्य न वित्तं न बहुज्ञता ॥ ५७ ॥
न दानं न तपो नेज्या न शौचं न व्रतानि च।
प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥ ५८ ॥
(७।७।५१, ५२ प्रह्लादः)

नन्वेवं दैत्यानामस्माकं कथं ब्राह्मणादिकृत्यै भगवद्भजनेऽधिकार इति चेन्न; भगवद्भक्तावधिकारिनियमाभावादित्याह नालमित्याभ्याम्। अमलया निष्कामया। विडम्बनं नटनमात्रम् ॥ ५७-५८ ॥

हे असुरबालको ! भगवत्प्राप्ति के लिए ब्राह्मणत्व, देवत्व, ऋषित्व, शील, और बहुत शास्त्रों का ज्ञान पर्याप्त नहीं है ॥ ५७ ॥

इसी प्रकार भगवान् न दान से, न तप से, न यज्ञ से, न शौच से, और न व्रत से प्रसन्न होते हैं; किन्तु वे केवल निर्मल भक्ति से ही प्रसन्न होते हैं। अतः भक्ति को छोड़कर अन्य सब उपाय व्यर्थ हैं ॥ ५८ ॥

मन्ये धनाभिजनरूपतपःश्रुतौज-
स्तेजःप्रभावबलपौरुषबुद्धियोगाः ।
नाराधनाय हि भवन्ति परस्य पुंसो
भक्त्या तुतोष भगवान् गजयूथपाय ॥ ५९ ॥
( ७।९।९ प्रह्लादः )

इममेवार्थं सदृष्टान्तमाह—मन्य इति। धनं वित्तम्, अभिजनः सत्कुले जन्म, रूपं सौन्दर्यम्, श्रुतं पाण्डित्यम्, ओज इन्द्रियनैपुण्यम्, तेजः कान्तिः, प्रभावः प्रतापः, बलं शारीरम्, पौरुषमुद्यमः, बुद्धिः प्रज्ञा, योगोऽष्टाङ्गः—एते धनादयो द्वादशापि गुणाः परस्य पुंसः श्रीकृष्णस्य आराधनाय न भवन्ति, हि यतः केवलया भक्त्यैव गजेन्द्राय उक्तधर्महीनायापि भगवांस्तुष्टोऽभवत्, तस्मात् साधूक्तं कौमार इत्यादि ॥ ५६ ॥

प्रह्लाद नृसिंह भगवान् की विशेषता बतला रहे हैं—मैं समझता हूँ कि भगवान् धन, सत्कुल में जन्म, सुन्दर स्वरूप, तप, विद्या, ओज, तेज, प्रभाव, बल, पौरुष, बुद्धि और योगसिद्धि इन बारह गुणों से उतने प्रसन्न नहीं होते जितने कि एक निष्काम भक्ति से प्रसन्न होते है; क्योंकि धनादि से रहित गजेन्द्र[1] पर भगवान् केवल निर्मल भक्ति से ही प्रसन्न हुए थे ॥ ५९ ॥

—×—

चित्रं तवेहितमहोऽमितयोगमाया-
लीलाविसृष्टभुवनस्य विशारदस्य ।

---

१—इसकी कथा पुराणों में प्रसिद्ध है—एक सरोवर में हाथी स्नान कर रहा था। दैवात् मगर ने उसे पकड़ लिया। बहुत खींचा-तानी हुई। अन्त में हाथी थक गया, मगर उसे पकड़कर जल में खींचने लगा। आत्मबलविहीन होकर जब हाथी ने भगवान् को पुकारा तब अशरण-शरण भक्तवत्सल भगवान् विष्णु ने तत्काल उपस्थित होकर अपने चक्र से मगर को मारकर हाथी का उद्धार कर दिया। देखिए श्रीमद्भागवत अष्टम स्कन्ध—

तं वीक्ष्य पीडितमजः सहसावतीर्य
सग्राहमाशु सरसः कृपयोज्जहार ।
ग्राहाद्विपाटितमुखादरिणा गजेन्द्रं
सम्पश्यतां हरिरमूमुचदुस्रियाणम् ॥ (८।३।३३)

सर्वात्मनः समदृशो विषमस्वभावो
भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ६० ॥
(८।२७।८ प्रह्लादः)

नन्वभिजनाभिमतो योग्यान् नो विहाय तद्रहितभक्तमात्रे गजेन्द्रे तोषः कथमिति चेत्, भक्तिमात्रग्राह्यस्वभावत्वाद् भगवत इत्यत्र वामनं प्रति प्रह्लादवचनमाह—चित्रमिति । तवेहितम्, अहो चित्रं किं तत् सर्वात्मनः समदृशो विषमस्वभाव इति यत् सर्वात्मतत्त्वे विचित्रचरितत्वे हेतुः, अमिता अचिन्त्या या योगमाया तस्या लीला तया विसृष्टानि भुवनानि येन तस्य । अहो इत्यत्र सन्धिरार्षः । समदृक्त्वे हेतुः, विशारदस्य सर्वज्ञस्य, अथवा भक्तिप्रियत्वेऽपि तव वैषम्यं नास्त्येव; यतः कल्पतरुस्वभावः सन् भक्तिप्रियोऽसि न हि कल्पतरुराश्रितानामेव कामान् पूरयन् विषमो भवतीत्यर्थः । तस्माद्भक्तौ सर्वेऽधिकारिणः, तत्प्रसादने भक्तिरेव कारणम्, न त्वभिजनादि इति सिद्धम् ॥ ६० ॥

प्रह्लाद भगवान् वामन से कहते हैं—आपकी लीला अति विचित्र है। आपने अपनी अपार योगमाया की लीला से इस विचित्र विश्व को रचा है। यद्यपि आप सर्वज्ञ, सर्वान्तर्यामी और समदर्शी हैं, फिर भी आप विषम स्वभाववाले हैं; क्योंकि आप अपने भक्तों पर ही प्रेम करते हैं और उन्हीं के लिए कल्पवृक्ष हैं, दूसरों के लिये नहीं। जिस प्रकार कल्पवृक्ष के आश्रित लोग ही अपनी कामना के अनुसार फल पाते हैं, दूसरे नहीं, उसीप्रकार आप भी केवल अपने भक्तों की ही मनोकामना पूर्ण करते हैं दूसरों की नहीं। जिससे आपकी समदर्शिता में कोई दोष नहीं पड़ता[1] ॥ ६० ॥

—×—

१—इसका अभिप्राय यह है कि यद्यपि कल्पवृक्ष सभी लोगों की अभिलाषाओं की पूर्ति का सामर्थ्य रखता है फिर भी जो लोग उसके समीप जाते हैं वह उन्हीं की कामनाओं को पूर्ण करता है, दूसरों की नहीं। वैसे ही समदर्शी होने पर भी भगवान्—जो उनकी उपासना करता है उसी की कामना पूरी करते हैं, दूसरों की नहीं। अतः भगवान् में विषमता का दोष नहीं आता। सर्वफलद कल्पवृक्ष के समान समदर्शी और सर्वाश्रयदाता होने पर भी भगवान् उपासकों की ही अभिलाषा की पूर्ति करते है। इसीलिए युधिष्ठिर ने राजसूय यज्ञ के उपक्रम के अवसर पर भगवान् श्रीकृष्ण से कहा है—

न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्
सर्वात्मनः समदृशः स्वसुखानुभूतेः ।
संसेवतां सुरतरोरिव ते प्रसादः
सेवानुरूपमुदयो न विपर्ययोऽत्र ॥
(१०।७२।६)

**स्वमातुः स्विन्नगात्राया विस्रस्तकवरस्रजः।**
**दृष्ट्वा परिश्रमं कृष्णः कृपयाऽऽसीत् स्वबन्धने ॥ ६१ ॥**
**( १०।९।१८ शुकः )**

न केवलं भक्तिप्रियो भगवान् भक्तवश्योऽपीति शुकवाक्येनाह चतुर्भिः स्वमातुरित्यादिभिः। स्वमातुर्यशोदाया रज्जुसन्धानेन स्विन्नगात्रायाः, अत एव विस्रस्ताः कवरेभ्यः स्रजो यस्याः कवरस्रजो विस्रस्ता वा मदर्थं विश्राम्यतीति कृपया स्वबन्धनार्थमासीत्, उलूखले बन्धनं कारयामासेत्यर्थः ॥ ६१ ॥

शुकदेवजी राजा परीक्षित् से कहते हैं—अपनी माँ यशोदाजी के, जो बन्धन-प्रयास के श्रम से पसीने में तर थीं, जिनका केशबन्धन खुलकर बिखर गया था और केशपाश से पुष्पमालायें गिर गईं थीं, क्लेश को देखकर श्रीकृष्णजी कृपा कर आप ही आप बन्धन में आ गये[1] ॥ ६१ ॥

—×—

**एवं संदर्शिता ह्यङ्ग हरिणा भक्तवश्यता।**
**स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥ ६२ ॥**
**( १०।९।१९ शुकः )**

अङ्गेति राजपरीक्षित् सम्बोधनम्। स्ववशेन स्वतन्त्रेण। इदं जगत्, संसारः ॥ ६२ ॥

हे राजन्! देवताओं के सहित समस्त विश्व जिसके अधीन है और जो स्वयं स्वाधीन है उस भगवान् श्रीकृष्ण ने इस प्रकार बँधकर अपनी भक्तवत्सलता का नमूना दिखलाया था ॥ ६२ ॥

—×—

**नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया।**
**प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदात् ॥ ६३ ॥**
**( १०।९।२० शुकः )**

---

अक्रूर जी ने भी इसी सिद्धान्त का स्पष्टी करण किया है—

न तस्य कश्चिद्दयितः सुहृत्तमो
न वा प्रियो द्वेष्य उपेक्ष्य एव वा।
तथापि भक्तान् भजते यथा तथा
सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥ (१०।३८।२२)

१—तभी से भगवान् कृष्ण का एक नाम 'दामोदर' भी हो गया।

भगवत्प्रसादमन्येऽपि लभन्त इदं त्वतिचित्रमित्याह—नेममिति। विरिञ्चः पुत्रोऽपि, भवः स्वात्मापि, श्रीर्जायाप्येतं न लेभिरे। गोपी यशोदा यत्प्रसादरूपं तत्पूर्वोक्तं बन्धनम्, ततः कृष्णाद्वा॥ ६३॥

मुक्ति देनेवाले भगवान् श्रीकृष्णजी से यशोदाजी ने जैसा अनुग्रह पाया वैसा अनुग्रह न तो ब्रह्माजी ने पाया, न शिवजी ने पाया, न अर्धाङ्गिनी लक्ष्मीजी ने ही पाया॥ ६३॥

—×—

**नायं सुखापो भगवान् देहिनां गोपिकासुतः।**
**ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह॥ ६४॥**

(१०।९।२१ शुकः)

ननु कथमेवं भक्तवश्यत्वादेवेत्याह—नायमिति। देहिनां देहाभिमानिनां तापसादीनां ज्ञानिनाम्, निवृत्ताभिमानानामपि सुखापो ज्ञानेनैव तेषामुद्धारः स्यात्॥ ६४॥

यशोदाजी के पुत्र भगवान् श्रीकृष्ण भक्तों को जैसे सहज में मिल जाते हैं वैसे देहाभिमानी तपस्वियों, ज्ञानियों, ब्रह्मा, शिव एवं लक्ष्मीजी को भी नहीं मिलते॥ ६४॥

—×—

**श्रेयःस्रुतिं भक्तिमुदस्य ते विभो**
**क्लिश्यन्ति ये केवलबोधसिद्धये।**
**तेषामसौ क्लेशल एव शिष्यते**
**नान्यद्यथा स्थूलतुषावघातिनाम्॥ ६५॥**

(१०।१४।४ ब्रह्मा)

भक्तिं विना ज्ञानमपि न सिद्ध्येदित्याह ब्रह्मवाक्येन—श्रेयःस्रुतिमिति। श्रेयसां अभ्युदयापवर्गलक्षणानां स्रुतिः शरणं प्रभावो यस्याः सरस इव निर्झराणां तां ते तव भक्तिमुदस्य त्यक्त्वा श्रेयसां मार्गभूतामिति वा तेषां क्लेशलः क्लेश एवावशिष्यते, नान्यत्। यथा स्थूलतुषावघातिनाम्। अयं भावः—यथा अल्पप्रमाणं धान्यं परित्यज्य अन्तःकरणहीनान् स्थूलधान्याभासान् तुषान् येऽवघ्नन्ति तेषां न किञ्चित् फलम्। एवं भक्तिं तुच्छीकृत्य ये केवलं बोधाय यतन्ते तेषामपीति॥ ६५॥

ब्रह्माजी भगवान् श्रीकृष्ण की स्तुति करते हैं:—हे भगवन्! धर्म, अर्थ, काम एवं मोक्ष देनेवाली आपकी भक्ति को छोड़कर जो लोग केवल ब्रह्मज्ञान की प्राप्ति के लिए

कठोर तपस्या करते हैं उनको भूसी कूटनेवालों के समान केवल क्लेश ही मिलता है, अन्य कुछ हाथ नहीं लगता। तात्पर्य यह है कि जिस प्रकार भूसा कूटनेवालों को केवल परिश्रम ही मिलता है कुछ दूसरा फल हाथ नहीं लगता उसी प्रकार भक्ति को त्यागकर केवल ज्ञानार्जन करनेवालों को कष्टमात्र ही होता है, कुछ फल नहीं होता ॥ ६५ ॥

—×—

पुरेह भूमन् बहवोऽपि योगिन-
स्त्वदर्पितेहा निजकर्मलब्धया।
विबुध्य भक्त्यैव कथोपनीतया
प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम् ॥ ६६ ॥
(१०।१४।५ ब्रह्मा)

अत्र सदाचारं प्रमाणयति—पुरेति। इह लोके ये पूर्वं योगिनोऽपि सन्तः, योगैर्ज्ञानमप्राप्य पश्चात्त्वदर्पितेहाः, त्वयि अर्पिता इहा लौकिक्यपि चेष्टा यैस्ते निजकर्मलब्धया त्वदर्पितैर्निजैः कर्मभिर्लब्धया त्वय्यर्पिता ईहा च निजानि कर्माणि च तैर्लब्धयेत्यन्तमेकं पदं वा कथोपनीतया कथया त्वत्समीपं प्रापितया त्वत्कथाश्रवणप्रसादादुत्पन्नया भक्त्यैव विबुध्य आत्मानं ज्ञात्वा अञ्जः सुखेनैव ते परां गतिं प्राप्ताः ॥ ६६ ॥

हे विश्वव्यापक भगवन्! पूर्वकाल में ऐसे अनेक योगी हो गये है, जिन्होंने योगमार्ग से सफलता न पाकर अपने कर्मों को समर्पण कर आपकी कथा के श्रवण और कीर्तन से भक्ति प्राप्त कर ज्ञान लाभ किया और सुख से आपकी परम गति पाई ॥ ६६ ॥

—×—

तस्मिन् भवन्तावखिलात्महेतौ
नारायणे कारणमर्त्यमूर्तौ।
भावं विधत्तो नितरां महात्मन्
किं वावशिष्टं युवयोस्तु कृत्यम् ॥ ६७ ॥
(१०।४६।३३ उद्धवः)

एवं भक्तस्य न किञ्चित् कृत्यमवशिष्यत इत्यत्र नन्दं प्रत्युद्धववाक्यमुदाहरति—तस्मिन्निति। अखिलानामात्मा हेतुश्च। हे महात्मन् नन्द युवयोर्यशोदायास्तव च ॥ ६७ ॥

गोकुल में उद्धवजी नन्द-यशोदा से कहते है—आप लोग सबके अन्तर्यामी और कारण, मायामानव, सर्वकारण, परिपूर्ण भगवान् श्रीकृष्ण में निरतिशय अनुराग (भक्ति) करते हैं। अब आप लोगों के लिए और कौन-सा शुभकर्म बाकी रह गया है ? ॥ ६७ ॥

—×—

दानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥ ६८ ॥
(१०।४७।२४ उद्धवः)

अत्र हेतुमाह—दान इति। भक्तौ सिद्धायां किं तत्कारणानुष्ठानेन ? तस्मात् साधूक्तम्—स वै पुंसामिति भावः ॥ ६८ ॥

उद्धवजी गोपियों के महत्त्व का वर्णन करते हैं—दान, व्रत, तप, होम, जप, स्वाध्याय, इन्द्रिय-संयम और अन्य मंगल कर्मों के अनुष्ठान से भगवान् श्रीकृष्ण में स्वाभाविक भक्ति उत्पन्न होती है ॥ ६८ ॥

—×—

क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः[१]
कृष्णे क्व चैष परात्मनि रूढभावः।
नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षा-
च्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥ ६९ ॥
(१०।४७।५९ उद्धवः)

एवं जातिव्यापारनैरपेक्ष्येण भगवदनुग्रहेऽविद्वद्विहितापि भक्तिरेव कारणमाह उद्धववाक्येन—क्वेमा इति। वनचर्यो गोप्यः कृष्णेऽधिकरणे एष गोपीविषयः कृष्णस्य तासु स्नेह इत्यर्थः। यद्वा कृष्णे तासां स्नेह इत्यर्थः। ननु कथमेवम् ! तत्राह—साक्षाद्भजतः पुंसः, नु अहो उपयुक्तः सेवितः, अगदराजोऽमृतं यथेति ॥ ६९ ॥

कहाँ वन में रहनेवाली गंवार गोपियां जो लौकिक आचरण से उन्मनी हैं, और कहाँ पुरुषोत्तम श्रीकृष्ण में इनका इतना अटल प्रेम, इन दोनों में महान् अन्तर है।

---

१—यद्यपि स्वपतिं त्यक्त्वा श्रीकृष्णरमणमनभिज्ञजननिन्दनीयम्, तथाप्यभिज्ञजन-शास्त्रयोः परमार्हणीयमिति न व्यभिचारः। अथापि व्यभिचारसाधर्म्याद् व्यभिचार उक्तः।

से अमृत के गुण को न जानने पर भी अमृत के सेवन से उसके सेवन का गुण होता ही है से ही प्रभु अपना प्रभाव न जाननेवाले भजनानन्दी भक्तों का कल्याण करते ही है।

**सारांश**—इसमें सन्देह नहीं कि जिस प्रकार अच्छा औषध ऊँच-नीच रोगी का चार न करके सेवन से लाभ ही करता है उसी प्रकार प्रभु विज्ञ और अविज्ञ का विचार न रके अपने सेवकों का कल्याण कर ही देते हैं ॥ ६९ ॥

—×—

नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः
स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ।
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठ-
लब्धाशिषां य उदगाद् व्रजवल्लवीनाम् ॥ ७० ॥
( १०।४७।६० उद्धवः )

ईश्वरो भक्तान् भजत इत्युक्तम्, तदेवाह—नायमिति। अङ्गे वक्षसि नितान्तरतेः श्रियोऽपि यं प्रसादोऽनुग्रहोऽस्ति नलिनस्येव गन्धः, रुक् कान्तिश्च यासां तासां स्वर्योषितामपि नास्ति; न्याः पुनस्तादृशप्रसादयोग्याः कुतः ? अस्य कृष्णस्य भुजदण्डाभ्यां गृहीत आलिङ्गितः कण्ठ-तेन लब्धा आशिषो याभिस्तासां गोपीनां य उदगाद् आविर्बभूव तस्मात्। प्रेमैकलभ्यो गवानित्यर्थः ॥ ७० ॥

रासलीला के समय भगवान् श्रीकृष्ण द्वारा गले में दोनों भुजाओं के लगने से नकी मनोकामनाएँ पूर्ण हो गईं, उन व्रजवनिताओं पर भगवान् श्रीकृष्ण का जो नुराग प्रगट हुआ, वह अनुराग लक्ष्मीजी पर भी नहीं प्रगट हुआ, जो भगवान् विष्णु निरन्तर अनुराग करती रहती है, तो पद्म की सुगन्ध और सौन्दर्य से मोहनेवाली प्सराओं की बात ही क्या है ? ॥ ७० ॥

—×—

आसामहो चरणरेणुजुषामहं स्यां
वृन्दावने किमपि गुल्मलतौषधीनाम्।
या दुस्त्यजं स्वजनमार्यपथं च हित्वा
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥ ७१ ॥
( १०।४७।५९।६१ उद्धवः )

किञ्च भगवत्प्राप्त्युपाये दोषोऽपि गुण एवेति दर्शयन्नेव, आस्तां तावद् गोपीनां भाग्यं ममत्वे तावत्प्रार्थ्यमित्याह—आसामिति। आसां गोपीनां यश्चरणरेणुस्तं भजतां गुल्मादीनां मध्ये अहं किमपि स्यामित्याशास्ते। आसां कासामित्याह—आर्याणां मार्गं धर्ममपि हित्वा ॥ ७१ ॥

अहा, मेरी ऐसी इच्छा होती है कि अगले जन्म में वृन्दावन के इन निकुञ्ज, लता, और झाड़ों में एक मैं भी बन जाता, जिनपर गोपियों का चरणरज लगा रहता है। वे गोपियाँ धन्य हैं जिन्होंने पति, पुत्र आदि स्वजन एवं आर्यमर्यादा—जिनका त्याग सहज नहीं—त्यागकर भगवान् श्रीकृष्ण के चरणों को पकड़ा, जिसे वेद भी ढूँढ़ता रहता है ॥ ७१ ॥

—×—

**न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्**
**सर्वात्मनः समदृशः स्वसुखानुभूतेः।**
**संसेवतां सुरतरोरिव ते प्रसादः**
**सेवानुरूपमुदयो न विपर्ययोऽत्र ॥ ७२ ॥**

**( १०।७२।६ युधिष्ठिरः )**

अत्र भक्तिमात्रग्राह्यत्वे विपर्ययशङ्कां निरसितुं युधिष्ठिरवाक्यमाह—न ब्रह्मण इति। स्वः पर इति भेदबुद्धिः, अयमनुग्राह्योऽयं नानुग्राह्य इति तव नास्ति, कुतः? ब्रह्मणो निरुपाधेः। किञ्च, सर्वात्मनः। अत एव समदृशः। किञ्च, स्वसुखानुभूतेः। अत एव रागाद्यभावादिति भावः। परन्तु भजनां ते प्रसादो नान्येषाम्। तत्रापि सेवानुरूपमुदयः फलम्, न त्वत्र भक्तेषु सेवानुरूपे प्रसादः, विपर्ययोऽन्यथाभावः। यथा कल्पद्रुमस्य रागादिराहित्ये सेवकेष्वेव फलजनकत्वम्, नान्येषु ॥ ७२ ॥

धर्मराज युधिष्ठिर भगवान् श्रीकृष्ण से कहते हैं—निरुपाधिक, सर्वान्तर्यामी, सर्वात्मा, समदर्शी एवं आत्मानन्द से तृप्त आपकी यद्यपि—यह मेरा है, यह पराया है—ऐसी भेद-बुद्धि नहीं है, तो भी, जो आपकी तन-मन से सेवा करता है उसी पर कल्पवृक्ष के समान आपका अनुग्रह होता है, औरों पर नहीं। ऐसा होने पर भी आप पर विषमता एवं निर्दयता आदि दोष नहीं लग सकते; क्योंकि जो जैसी सेवा करता है उसे वैसा ही फल मिलता है। सारांश यह है कि जैसे कल्पवृक्ष किसी के गुण दोषों पर दृष्टिपात नहीं करता, फिर भी जो उसकी सेवा करता है उसी को वह फल देता है, औरों को नहीं। वैसे ही आप में किसी प्रकार की विषमता नहीं, जो आपकी जैसी सेवा करता है उसे वैसा ही फल प्राप्त होता है ॥ ७२ ॥

—×—

मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ।
दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः ॥७३॥

( १०।८२।४५ श्रीकृष्णः )

किञ्च, भक्तिमात्रग्राह्यत्वे भगवद्वचनमेव प्रमाणमिति बुद्ध्या भगवद्वचनमाह—मयीति । मयि भक्तिर्हि भक्तिमात्रमेव तावदमृतत्वाय कल्पते । यत्तु भवतीनां मयि स्नेह आसीत्, दिष्ट्या अतिभद्रम्, कुतः ? मदापनः, मत्प्रमाण इति ॥ ७३ ॥

भगवान् कृष्ण गोपियों से कह रहे है—मेरी भक्ति से प्राणियों को मोक्ष प्राप्त होता है, इसमें किसी प्रकार का सन्देह नहीं है । बड़े सौभाग्य की बात है कि आप लोगों ने मुझ पर वह स्नेह किया है, जो आपलोगों को मेरे पास लायेगा ॥ ७३ ॥

—×—

ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये ।
अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान् ॥ ७४ ॥

( ११।२।३४ कविः )

ननु ज्ञानशास्त्रं विना न ज्ञानम्, न च तेन विना अमृतत्त्वम्, सत्यं ज्ञानस्य भक्तेरीषत्कर-त्वात् । इत्यत्र चतुर्भिः कविवचनमाह—ये वै भगवतेति । मन्वादिमुखेन वर्णाश्रमादिधर्मानुक्त्वा अतिरहस्यतया स्वमुखेनैव भागवता इति । शास्त्रेऽविदुषामपि पुंसाम् अञ्जः सुखेनैवात्मलब्धये ये वै उपायाः प्रोक्तास्तान् भागवतान् धर्मान् विद्धि ॥ ७४ ॥

कवि राजा विदेह से कहते है—भगवान् ने भगवत्प्राप्ति के लिए जिन-जिन उपायों को बतलाया है जिनसे अपढ़ लोग भी सहज में ही उनके पास पहुँच जाते हैं, उनको भागवत धर्म कहते है ॥ ७४ ॥

—×—

यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित् ।
धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥ ७५ ॥

( ११।२।३५ कविः )

अञ्जस्त्वं विवृणोति—यानास्थायेति । यानास्थाय आश्रित्य योगादिष्विव न माद्येत, विघ्नैर्न विहन्येत । किञ्च, निमील्य नेत्रे धावन्नपीह एषु भागवतधर्मेषु न स्खलेत् । निमीलनं नामाज्ञानम्, यथाहुः—"श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते । एकेन विकलः काणो द्वाभ्यामन्धः प्रकीर्तितः ॥" इति । अज्ञात्वापीत्यर्थः । तथा पादन्यासस्थानमतिक्रम्य परतः

पादन्यासेन गतिर्धावनम्, तद्वदत्रापि किञ्चिदतिक्रम्य शीघ्रमाचरणं धावनम्, तथा चरन्नपि न स्खलेद् न प्रत्यवायी स्यात्, तथा न पतेत् तत्फलाद् न भ्रश्येत् ॥ ७५ ॥

हे राजन्! जिन उपायों का अवलम्बन कर मनुष्य कभी भी नहीं चूकता। आँख मूँदकर दौड़े तो भी न फिसलेगा न गिरेगा। अर्थात् भागवत धर्मों का आचरण कर मनुष्य न तो कभी उपद्रवों से दुःखी होता है, न फल से ही वञ्चित रहता है ॥ ७५ ॥

—×—

कायेन वाचा मनसेन्द्रियैर्वा
　　बुद्ध्यात्मना वानुसृतस्वभावात्।
करोति यद्यत् सकलं परस्मै
　　नारायणायेति समर्पयेत्तत् ॥७६॥
(११।२।३६ कविः)

ननु के ते भागवता धर्म्माः? ईश्वरार्पितानि सर्वाणि कर्माणीत्याहुः—कायेनेति। आत्मना चित्तेनाहङ्कारेण वाऽनुसृतो यः स्वभावस्तस्मात्। अयमर्थः—न केवलं विधित एव कृतमिति नियमः, स्वभावानुसारि लौकिकमपि कृतम्। तथा चोक्तं भगवद्गीतासु यत्करोषीत्यनेन। यद्वा कायादीनामेव नात्मन इत्याशङ्क्याह—अध्यासेनानुसृताद् ब्राह्मणत्वादिस्वभावाद् यत्करोषीत्यर्थः, तत्सर्वं परस्मै परमेश्वराय नारायणायेति समर्पयेत्। तथा सति सकलमपि भागवतो धर्मो भवतीत्यर्थः ॥ ७६ ॥

मनुष्य को चाहिए कि शरीर, वचन, मन, इन्द्रिय, बुद्धि, चित्त और स्वभाव से जो भी कुछ करे उसे परमात्मा को समर्पण कर दे ॥ ७६ ॥

—×—

इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम्।
दारान् गृहान् सुतान् प्राणान् यत् परस्मै निवेदनम् ॥ ७७ ॥
(११।३।२८ प्रबुद्धः)

एतदेव प्रपञ्चयति—इष्टमिति। इष्टं यागः, दत्तमित्यादि भावे निष्ठा। वृत्तं सदाचारः। आत्मनः प्रियं गन्धपुष्पादिदारादीनप्यालक्ष्य परस्मै परमेश्वराय निवेदनं तत्सेवकतया समर्पणं यत् तच्छिक्षेदिति शेषः। तस्मादेवंभूतया भक्त्या ज्ञानं स्यादेवेति न किञ्चिदनुपपन्नमिति भावः ॥ ७७ ॥

प्रबुद्धजी विदेह से कहते है—यज्ञ, दान, तप, जप, सदाचार, आत्मप्रिय वस्तु, स्त्री, पुत्र, घर और प्राण भी भगवान् को सेवकरूप से समर्पण कर देना चाहिए ॥ ७७ ॥

—×—

भयं द्वितीयाभिनिवेशतः स्या-
दीशादपेतस्य विपर्ययोऽस्मृतिः ।
तन्माययातो बुध आभजेत्तं
भक्त्यैकयेशं गुरुदेवतात्मा ॥ ७८ ॥
( ११।२।३७ कविः )

अत्र युक्तिमाह—भयमिति । यतो भयं संसाररूपं तन्मायातो न भवेत्, अतो बुद्धो बुद्धिमान् तमेव भजेत । ननु भयं देहाभिनिवेशतो भवति, स च देहोऽहङ्कारतः, स च स्वरूपास्मरणात् । किमत्र तस्य माया करोति । अत आह—ईशादपेतस्येति । ईशविमुखस्य तन्माया अस्मृतिः, भगवतः स्वरूपास्फूर्तिः । ततो विपर्ययो देहोऽस्मीति, ततो द्वितीयाभिनिवेशाद् भयं भवति । एवं हि प्रसिद्धं लौकिकीष्वपि मायासु । तदुक्तं भगवता—"**दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥**" इत्येकया भक्त्या अव्यभिचारिण्या भजेत । किञ्च, गुरुदेवतात्मा ईश्वरश्च आत्मा प्रेष्ठश्च यस्य, यथा दृष्टिः तन्नित्यर्थः । तस्मात् साधूक्तं ये वै भागवता इति भावः ॥ ७८ ॥

कवि विदेह से कहते हैं—जो भगवान् से विमुख है उसे भगवान् की माया से अपने यथार्थ स्वरूप की विस्मृति हो जाती है । अपने वास्तविक स्वरूप की विस्मृति हो जाने से देह में आत्मबुद्धि होती है जिससे अद्वितीय ब्रह्म में भेदबुद्धि उत्पन्न हो जाती है, तब उससे भय उत्पन्न होने लगता है । इसलिए विचारशील मनुष्य को चाहिए कि वह भगवान् को आराध्यदेव एवं आत्मस्वरूप समझकर एकाग्रभक्ति से उनका खूब भजन करे[1] ॥ ७८ ॥

—×—

**त्वां सेवतां सुरकृता बह्वोऽन्तरायाः
स्वौको विलङ्घ्य परमं व्रजतां पदं ते ।
नान्यस्य बर्हिषि बलीन् ददतः स्वभागान्
धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥७९॥
( ११।४।१० कामादयः )**

१—इस श्लोक में 'द्वितीयाद्वै भयं भवति' इस बृहदारण्यकश्रुति की छाया है । वेदान्त में इस भय का औषध अद्वैतज्ञान है, किन्तु श्रीमद्भागवत के अनुसार वह भय भक्ति से ही निवृत्त हो जाता है ।

यदुक्तं न प्रमाद्येत तदुपलक्षणम्, भक्तास्तु विघ्नहेतूनेवाभिभवन्तीत्यत्र कामादिवचन-मुदाहरति—त्वामिति। त्वां सेवतां सेवमानानां सुरैरिन्द्रादिभिः कृता बहवोऽन्तराया॰विघ्ना भवन्ति। कुतः? स्वौकः स्थानं स्वर्गमतिक्रम्य परमं तव स्थानमनुव्रजताम्, नान्यस्य त्वामसेवमानस्य यज्ञादिपरस्य विघ्ना न भवन्तीत्यर्थः। कुतः? बर्हिषि यज्ञे स्वभागान् करान् कृषिकरा इव राज्ञे इन्द्रादिभ्यो ददतःप्रयच्छतः। तर्हि तत्किं मद्भक्तो विघ्नैर्भ्रश्येत? न यदि त्वमविता, तदा विघ्नमूर्ध्नि पदं धत्ते। यदीति निश्चये। यतस्त्वं सर्वस्याधीश्वरोऽविता रक्षकः, अतोऽसौ विघ्नानां मूर्ध्नि पदमङ्घ्रिं धत्ते। मोक्षार्थेऽन्यो मार्गो विघ्नदूषित एव, भक्तिस्त्वप्रतिहता ॥ ७९ ॥

कामदेव और अप्सरागण भगवान् नारायण से कह रहे है—जो लोग आपकी सेवा करते हुए देवताओं के स्थान स्वर्ग का अतिक्रमणकर आपके परमधाम को जाते है, उनके मार्ग में देवता लोग अनेक विघ्न डालते हैं और जो लोग आपकी सेवा नहीं करते और यज्ञ में देवताओं को भागरूप कर देते हैं उनके मार्ग में विघ्न नहीं करते, परन्तु आपके भक्त विघ्नों के सिर पर पैर रखकर सिद्धि प्राप्त कर लेते हैं, क्योंकि आप उनके रक्षक है। जैसे कृषक राजा को कर देते हैं वैसे ही जो व्यक्ति इन्द्रादि देवताओं को यज्ञभाग समर्पण करते हैं उनके मार्ग में वे विघ्न नहीं डालते, किन्तु परमधाम जानेवाले भगवद्भक्तों के मार्गों में वे अनेक विघ्न-बाधायें उपस्थित कर देते हैं, फिर भी उनका कुछ नहीं बिगड़ता, क्योंकि सबके अधीश्वर स्वयं भगवान् उनके रक्षक हैं। अतः भक्ति में कोई बाधा नहीं ॥ ७९ ॥

—×—

**मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह।**
**चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥८०॥**
**य एवं पुरुषं साक्षादात्मप्रभवमीश्वरम्।**
**न भजन्त्यवजानन्ति स्थानभ्रष्टाः पतन्त्यधः ॥ ८१ ॥**

**( ११।५।२, ३ चमसः )**

एवं भक्तानामभितः प्राप्तिमुक्त्वा अभक्तानामधोगतिमाह द्वाभ्याम्, मुखेत्यनेन। गुणैः सत्त्वेन विप्रः, सत्त्वरजोभ्यां क्षत्रियः, रजस्तमोभ्यां वैश्यः, तमसा शूद्र इति। एषां मध्येऽज्ञात्वा न भजन्ति ये, ये च ज्ञात्वाऽप्यवजानन्ति तेऽधःपतन्ति। अत्राज्ञानात् संसारनिवृत्तिर्नास्तीत्ये-वाधःपातः, अवजानतां तु महानरकपात इति। आत्मनः प्रभवो जन्म यस्मादभक्ता गुरुद्रोहिण इति भावः। ईश्वरं पोषकं स्वामिनं तदभक्ताः कृतघ्ना इति भावः। स्थानाद् वर्णाश्रमाद् भ्रष्टाः स्वधर्मस्था अपि अभक्ता एवेति भावः ॥ ८०–८१ ॥

चमस विदेह से कह रहे हैं—परमपुरुष परमात्मा के मुख, बाहु, जंघा और पैर से अपने-अपने गुणों की वासना के अनुसार ब्राह्मण, क्षत्रिय वैश्य और शूद्र ये चारों वर्ण और ब्रह्मचर्य, गार्हस्थ्य, वानप्रस्थ एवं सन्यास ये चारों आश्रम अलग-अलग उत्पन्न हुए ॥८०॥

इनमे जो लोग अपने स्रष्टा पितारूप परमात्मा को नही भजते और उनका तिरस्कार करते हैं, वे अपने वर्ण एवं आश्रम से भ्रष्ट होकर दुर्गति को प्राप्त होते है ॥ ८१ ॥

—×—

घोरे कलियुगे प्राप्ते सर्वधर्मविवर्जिते ।
वासुदेवपरा मर्त्यास्ते कृतार्था न संशयः ॥८२॥
संसारकूपपतितं विषयैर्मुषितेक्षणम् ।
ग्रस्तं कालाहिनात्मानं कोऽन्यस्त्रातुमिहेश्वरः ॥८३॥

( ११।८।४१–४२ पिङ्गला )

विशेषतस्तु कलौ भागवता एव कृतार्था इत्याह—घोर इति । कालवशेन सर्वे स्वधर्मभ्रष्टा अपि यदि केचन वासुदेवपराः । एतदेव स्पष्टयति—संसारेति । आत्मानं जीवमन्यो भगवत इह कलौ ईश्वरः प्रभुः । ननु विषयाणां दुर्जयत्वात् कथं तन्मुषितेक्षणो रक्षणीय उत्तरोत्तरभक्त्येत्यत्र भगवद्वचनमाह ॥ ८२–८३ ॥

विरक्त होकर पिङ्गला वेश्या स्वयं कहती है—इसमें सन्देह नहीं कि घोर कलियुग आने पर जो लोग सभी धर्मो को छोड़कर केवल भगवान् वासुदेव की भक्ति करते है, वे निःसन्देह कृतार्थ हैं ॥ ८२ ॥

इस संसार रूप कूप में गिरे हुए, रूप, रस आदि विषयों द्वारा बुद्धिहीन और कालरूप सर्प से डसे गये जीव की रक्षा भगवान् विष्णु के अतिरिक्त कौन कर सकता है ? ॥ ८३ ॥

—×—

बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ।
प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥८४॥

( ११।१४।१८ श्रीकृष्णः )

बाध्यमानोऽपीति । प्रगल्भया समर्थया भक्त्या बाध्यमानोऽपि आकृष्यमाणोऽपि; यतोऽजितेन्द्रियः, अजितेन्द्रियोऽपि मद्भक्तस्तरति, किं पुनः परमभक्त इति भावः ॥ ८४ ।

भगवान् कृष्ण उद्धव से कहते हैं—हे उद्धवजी ! अपनी इन्द्रियों को वश में न कर सकने वाले मेरे भक्त विषय-वासना से बार-बार आकृष्ट होने पर भी सामर्थ्यशाली भक्ति के प्रभाव से विषयों से पराजित नहीं होते । तात्पर्य यह है कि यदि मेरा भक्त विषयों से आकृष्ट होकर इन्द्रियों के वश में आ जाता है तो भी मेरी दृढ भक्ति उसे गिरने नहीं देती, बचा लेती है, उसे विषयों में आसक्त नहीं होने देती ॥ ८४ ॥

—×—

**पुंश्चल्यापहृतं चित्तं कोऽन्यो मोचयितुं क्षमः ।**
**आत्मारामेश्वरमृते भगवन्तमधोक्षजम् ॥८५॥**

( ११।२६।१५ ऐलः )

यः स्त्रैणमपि मोचयति तस्य विषयान्तरलुब्धमोचनमीषत्करमित्याह पुरुरवोवाक्येन—पुंश्चल्येति । पुंश्चल्या असाध्वेकरूपया स्त्रिया । यदाह—"**स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः । तेन नारद नारीणां सतीत्वमुपजायते ॥**" भगवन्तं विना कोऽन्यः क्षम इत्यर्थः । यतऽधोऽक्षजम्, अधः कृतम् अक्षजम्, इन्द्रियविषयसुखं येन, जितेन्द्रियमिति यावत् । एतत् कुतः ? यत आत्मारामः । योगिभ्यो विशेषमाह—ईश्वरं सर्वनियन्तारम् ॥ ८५ ॥

उर्वशी के चले जाने पर राजा पुरुरवा ने खेदपूर्वक कहा है—उर्वशी अप्सरा द्वारा उसकी ओर आकृष्ट मेरे मन को श्री सच्चिदानन्दपरमात्मा के अतिरिक्त दूसरा कौन बचा सकता है ? ॥ ८५ ॥

—×—

**भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ।**
**सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ ८६ ॥**

( ११।१८।४५ श्रीकृष्णः )

तस्माद्भगवद्भक्तिरेव भगवत्प्राप्त्युपाय इत्यत्र भगवद्वचनमाह—भक्त्योद्धवेति । अनपायिन्या अव्यभिचारिण्या । सर्वलोकमहेश्वरमिति नियन्तृत्वेन स्थितिकारणत्वं दर्शितम् । सर्वेषमुत्पत्तिरप्ययो विनाशश्च यस्मात् । कुतः ? ब्रह्मणोऽपि कारणं वेदस्य वा मां माम् । अत एव तत्कारणं मां ब्रह्मस्वरूपं वैकुण्ठनिवासिनम् यद्वा ब्रह्मणो वेदस्य कारणं मामुपयाति सामीप्येन प्राप्नोति ॥ ८६ ॥

भगवान् कृष्ण उद्धवजी से कहते हैं—हे उद्धव ! अटूट भक्ति से मनुष्य सृष्टि, स्थिति और संहार के कारण तथा सारे लोकों के स्वामी मुझ परमेश्वर को प्राप्त होता है ॥८६॥

—×—

**यथाग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् ।**
**तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥ ८७ ॥**

**( ११।१४।१९ श्रीकृष्णः )**

किञ्च, भक्तस्य प्रायश्चित्तान्तरापेक्षापि नास्तीत्याह—यथेति । पाकाद्यर्थं प्रज्वलितो वह्नि-र्यथा काष्ठानि भस्मीकरोति, तथा रागादिवासनापि कथञ्चिद् मद्विषया सती भक्तिः समस्तपापा-नीति । भगवानपि स्वभक्तिमहिमैश्वर्येण सम्बोधयति—भक्तयोद्धवेति ॥ ८७ ॥

हे उद्धव ! जैसे प्रज्वलित अग्नि इन्धन को भस्म कर देती है वैसे ही मेरी भक्ति सभी पापों को विनष्ट कर देती है ॥ ८७ ॥

—×—

**न साधयति मां योगो न सांख्यं धर्म उद्धव ।**
**न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ ८८ ॥**

**( ११।१४।२० श्रीकृष्णः )**

अत एवंभूतं श्रेयो नास्त्यन्यदित्याह—न साधयतीति । न साधयति न वशीकरोति, यथा भक्तिः साधयति । अत एवोर्जिता योगादिभ्य उत्कृष्टा ॥ ८८ ॥

हे उद्धव ! जैसे मेरी एकनिष्ठा दृढभक्ति मुझको मेरे भक्तों के वश में कर देती है वैसे योग, सांख्य, धर्म, वेदपाठ, व्रत, तप या दान मुझे वश में नहीं कर पाते ॥ ८८ ॥

—×—

**भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम् ।**
**भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात् ॥ ८९ ॥**

**( ११।१४।२१ श्रीकृष्णः )**

सर्वपावनत्वाच्चोर्जितेत्याह–भक्त्येति । श्रद्धया भक्त्या । सम्भवाद् जातिदोषादपि यत्र मद्भक्तो जातिचाण्डालत्वं जहाति, तत्र कर्मचाण्डालत्वं जहातीति वाच्यम् ॥ ८९ ॥

मैं सज्जनों का प्यारा प्राण हूँ । मै एकमात्र श्रद्धा से उत्पन्न निरवच्छिन्न भक्ति से ही वश में होता हूँ । मेरी भक्ति कुत्ते के मांस को खानेवाले चाण्डाल को भी उनके जन्म एवं कर्म के दोषों से शुद्ध कर देती है ॥ ८९ ॥

—×—

धर्मः सत्यदयोपेतो विद्या वा तपसान्विता ।
मद्भक्त्या पेतमात्मानं न सम्यक् प्रपुनाति हि ॥ ९० ॥
( ११।१४।२२ श्रीकृष्णः )

भक्त्यभावेऽन्यत्साधनं स्वानुष्ठितमपि व्यर्थमित्याह द्वाभ्याम्—धर्म इति । विद्या उपासना, आत्मविद्या वा । आत्मानमन्तःकरणं पुनाति, न तु सम्यक् सावशेषमित्यर्थः ॥ ९० ॥

सत्य एवं दया से युक्त, धर्म तथा तपश्चर्या से सम्पन्न शास्त्राभ्यास भी मेरी भक्ति से विहीन अन्तःकरणवाले व्यक्ति को कदापि शुद्ध नहीं कर सकते ॥ ९० ॥

—×—

कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाशयः ॥ ९१ ॥
( ११।१४।२३ श्रीकृष्णः )

प्रसङ्गाद्भक्तेर्लिङ्गं दर्शयन्नेतदेव निर्द्धारयितुमाह—कथमिति । रोमहर्षादिकं विना कथं भक्तिर्गम्यते ? भक्त्या च विना कथमाशयः शुद्धयेत् ? ॥ ९१ ॥

भगवान् के ध्यान से सारे शरीर में रोमाञ्च हुए विना, चित्त के द्रवीभूत हुए विना, आँखों में आनन्दाश्रु के उद्भव विना भक्ति का सद्भाव प्रगट नही होता और भक्ति प्रगट हुए विना हृदय की शुद्धि नही होती ॥ ९१ ॥

—×—

वाग्गद्गदा द्रवते यस्य चित्तं हसत्यभीक्ष्णं रुदति क्वचिच्च ।
विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥ ९२ ॥
( ११।१४।२३-२४ श्रीकृष्णः )

एतादृशी मद्भक्तिस्त्वाशयं पुनातीति किं वाच्यम्, यतो गद्गदवागादिलक्षणो मद्भक्ति-युक्तः सर्वलोकं पुनातीत्याह—वाग्गद्गदेति । वाग्गद्गदा प्रेमभरेण चित्ताद्रवस्तत्तन्महामहिमश्रवणेन स्वतन्त्रोऽपि भक्तिपराधीन इति हसति । एतावन्तं कालं तत्सेवां विना वञ्चितोऽस्मीति रोदिति, अथ जितं जितमिति गायति, नृत्यति च । विलज्जत्वं सर्वत्र बोद्धव्यम् ॥ ९२ ॥

भगवत्प्रेम से जिसकी वाणी गद्‌गद् हो जाती है, चित्त भाव से पिघल जाता है, जो मेरी लीलाओं के रहस्य का स्मरण कर खूब हँसता है और कभी रो भी देता है, लाज छोड़कर जोर से मेरे चरितों को गाता है और नाचता है—ऐसा भक्तियुक्त मेरा भक्त सारे जगत् को पवित्र करता है ॥ ९२ ॥

—×—

यथाग्निना हेम मलं जहाति
　　ध्मातं पुनः स्वं भजते च रूपम् ।
आत्मा तु कर्मानुशयं विधूय
　　मद्भक्तियोगेन भजत्यथो माम् ॥ ९३ ॥
　　　　( ११।१४।२५ श्रीकृष्णः )

अपि च भक्त्यैवात्मशुद्धिः, नान्यत इति सदृष्टान्तमाह—यथाग्निनेति । यथाग्निना ध्मातं तापितमेव हेम सुवर्णमन्तर्मलं जहाति, न क्षालनादिभिः स्वं निजं रूपं च भजते । कर्मानुशयं कर्मवासनाम् । मां भजते मद्रूपतामापद्यते ॥ ९३ ॥

जिस प्रकार आग में तपा हुआ सोना मैल को छोड़ देता है और पुनः अपने असली स्वरूप में आ जाता है, उसी प्रकार जीवात्मा भक्तियोग के द्वारा चित्त की कर्मवासना-रूप मलिनता का त्याग कर मेरे स्वरूप को पा जाता है ॥ ९३ ॥

—×—

वरमेकं वृणेथापि पूर्णात् कामाभिवर्षणात् ।
भगवत्युत्तमा भक्तिस्तत्परेषु तथा त्वयि ॥ ९४ ॥
　　　　( १२।१०।३४ मार्कण्डेयः )

एवं भगवद्वचनमुपसंहृत्य विज्ञैर्भक्तिरेव प्रार्थ्यते इत्यत्र मार्कण्डेयवचनमुदाहरति विश्वेशं प्रति—वरमेकमिति । पूर्णात् कामाभिवर्षणात् सर्वदातुः त्वत्तो विश्वेश्वरात् त्वयि च वैष्णवत्वात् । तत्परेषु भगवद्भक्तेषु साक्षात्परम्परया वा भगवत्सम्बन्धिवरत्वेनैकवरत्वं द्रष्टव्यम् । यद्वा भगवत्युत्तमा भक्तिरित्येको वरः, तद्भक्तेषु त्वयि चेति वरद्वयम् । तस्मात् साधूक्तम्—"सर्वसाधनश्रेष्ठा भक्तिः" इति ॥ ९४ ॥

मार्कण्डेय मुनि भगवान् शिव से कहते है—मैं एक वरदान आपसे माँगता हूँ, क्योंकि आप पूर्ण हैं और सभी वरों को बरसाने वाले हैं । वह वर यह है कि भगवान् में भगवद्भक्तों में तथा आप मे मेरी अटूट भक्ति सदा बनी रहे ॥ ९४ ॥

—×—

तथापरे चात्मसमाधियोग-
　　बलेन जित्वा प्रकृतिं बलिष्ठाम् ।

त्वामेव धीराः पुरुषं विशन्ति
तेषां श्रमः स्यान्न तु सेवया ते ॥ ९५ ॥
( ३।५।४५ देवाः )

ननु बहुषु मोक्षोपायेषु सत्सु कथं भक्तिरेव गरीयसीत्याशङ्क्य महदादिदेववाक्यमुदाहरति—तथेति । तथा परे योगिनोऽपि त्वामेव विशन्ति । आत्मनो मनसः समाधिः संयमः, स एव योगः; तद्बलेन तन्निष्ठया प्रकृतिं मायां जित्वा, बलिष्ठां दुर्जयाम् । तर्हि को विशेष इत्यत्र आह—तेषां योगिनां भक्त्या विना निष्फलो योगाभ्यासः । उभयकरणे च गौरवम् । भक्तिस्तु निरपेक्षसाधनमिति भावः ॥ ९५ ॥

देवता लोग हरि की स्तुति कर रहे हैं—वैसे ही अन्य धीर साधक अपने समाधियोग के बल से अति दुस्तर माया को जीतकर आपको ही प्राप्त होते हैं। उनको परिश्रम अवश्य होता है, किन्तु जो लोग आपकी सेवा करते है उनको श्रम के विना ही आप प्राप्त हो जाते हैं ॥ ९५ ॥

—×—

अह्न्यापृतार्तकरणा निशि निःशयाना
नानामनोरथधिया क्षणभग्ननिद्राः ।
दैवाहतार्थरचना मुनयोऽपि देव
युष्मत्प्रसङ्गविमुखा इह संसरन्ति ॥९६॥
( ३।९।१० ब्रह्मा )

तर्हि सर्वे भगवद्भक्तिमेव किमिति न कुर्वन्तीत्याशङ्क्य विषयिणामभजनकारणं वक्तुं ब्रह्मवचनमाह—अह्न्येति । अह्नि आपृतानि व्यापृतानि चार्तानि निष्क्लिष्टानि करणानीन्द्रियाणि येषाम्, रात्रौ विषयसुखलवोऽपि नास्ति; यतो निःशयाना नानामनोरथधिया स्वप्नदर्शनेन च क्षणे क्षणे भग्ननिद्रा दैवेनाहताः सर्वतः प्रतिहता अर्थरचना अर्थोद्यमो येषाम्, अत एव युष्मद्भजनविमुखाः । अत एव संसारिणो भवन्ति मुनयोऽपि बहुशास्त्रमननशीला अपि ॥ ९६ ॥

ब्रह्माजी भगवान् विष्णु की स्तुति करते हैं—हे देव ! ऋषि लोग भी यदि आपके भजन से विमुख हों तो वे भी संसार के आवागमन में पड़े रहते हैं। दिन में तो वे हर प्रकार के व्यापार में उलझे रहते हैं। अतः दिन में उन्हें सुख नहीं, रात में स्वप्नों से क्षण-क्षण

उनकी नींद खुल जाती है, जो मनोरथ रचते रहते हैं, वह दैवदुर्विपाक से नष्ट हो जाता है। अतः रात में भी उन्हें सुख नहीं। इस प्रकार जो आपसे विमुख हैं, उनको कभी सुख सम्भव नहीं है ॥ ९६ ॥

—×—

येभ्यर्थितामपि च नो नृगतिं प्रपन्ना
ज्ञानं च तत्त्वविषयं सहधर्म यत्र।
नाराधनं भगवतो वितरन्त्यमुष्य
संमोहिता विततया वत मायया ते ॥ ९७ ॥
( ३।१५।२४ ब्रह्मा )

अथ मुमुक्षुसाधरणहेतुं वक्तुं देववचनमाह—येऽभ्यर्थितामिति। नोऽस्माभिः, ब्रह्मादिभिरर्थितां नृगतिं मनुष्यजातिं प्रपन्नाः प्राप्ताः सन्तो हरेराराधनं भक्तिं न कुर्वन्ति। कीदृशीं नृगतिम्? यत्र यस्यां धर्मसहितं तत्त्वज्ञानं भवति। तदुभयसाधकत्वात् ते अमुष्य भवतो विस्तृतया मायया सम्मोहिता वतेति खेदे ॥ ९७ ॥

उस मनुष्यजन्म को पाकर, जिसकी प्राप्ति के लिए देवता भी प्रार्थना किया करते हैं और जिससे धर्म तथा तत्त्वज्ञान की प्राप्ति हो सकती है, जो मनुष्य भगवान् का भजन नहीं करते वे भगवान् की माया से मोहित हैं, इसमें किसी प्रकार का सन्देह नहीं ॥ ९७ ॥

—×—

विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो
योगेश्वरैरपि दुरत्यययोगमायः।
क्षेमं विधास्यति स नो भगवांस्त्र्यधीश-
स्तत्रास्मदीयविमृशेन कियानिहार्थः ॥ ९८ ॥
( ३।१६।३७ ब्रह्मा )

नन्वेवं भक्त्या विना माया न जीयते, तया मुग्धानां भक्तिर्दुर्लभेति कथं निस्तारः? भगवत्कृपयेत्यत्र ब्रह्मवचनमाह—विश्वस्येति। अधीशः = त्रयाणां गुणानामधीशः, विमृशेन विचारेण ॥ ९८ ॥

जो संसार की सृष्टि, स्थिति और संहार का आदिकारण है तथा जिसकी योगमाया का योगेश्वर लोग भी पार नहीं पाते, वही भगवान् त्रिलोकपति हमारा कल्याण करेंगे। उसके लिए चिन्ता करने की हमें कोई आवश्यकता नहीं ॥ ९८ ॥

—×—

**यदा यस्यानुगृह्णाति भगवानात्मभावितः ।**
**स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥ ९९ ॥**

**( ४।२९।४६ नारदः )**

एवं भगवदनुग्रहं प्रार्थयमानं त्यक्ताभिमानं भगवान् कदाचिदनुगृह्णाति, यतो भक्तिर्भवतीत्याह—यदेति। यस्यायमनुगृह्णाति, अनुग्रहे हेतुः। आत्मनि मनसि सर्वकर्तृत्वेन भावितः सन्, तदा लोके लोकव्यवहारे वेदे च कर्मव्यवहारे निष्ठितां मतिं त्यजति। एवंविधस्तत्कृपया सर्वं विहाय श्रवणादिना तं भजत इति भावः ॥ ९९ ॥

नारदजी प्राचीन बर्हि से कहते हैं—सबके सृजनहार के रूप में एकनिष्ठ भाव से, ध्यान करने पर भगवान् जब भक्त पर अनुग्रह करते हैं तब वह भक्त लौकिक-व्यवहार, वैदिक अनुष्ठानादि कर्म की आसक्ति को त्याग देता है ॥ ९९ ॥

—×—

**श्रियमनुचरतीं तदर्थिनश्च**
**द्विपदपतीन् विबुधांश्च यः स्वपूर्णः ।**
**न भजति निजभृत्यवर्गतन्त्रः**
**कथममुमुद्विसृजेत् पुमान् कृतज्ञः ॥ १०० ॥**

**( ४।३१।२२ नारदः )**

एवं प्रसङ्गमुपसंहृत्य भगवतो भक्तवश्यतां दर्शयन्नवश्यभजनीयतामाह—श्रियमिति। अनुचरतीमनुवर्तमानां श्रियम्, तदर्थिनः सकामान् द्विपदपतीन् नरेन्द्रान् विबुधान् देवानपि यो न भजति नानुवर्तते, यतः स्वेनैव पूर्णः; तथापि निजभृत्यवर्गतन्त्रः = स्वभक्तगोष्ठ्यधीनो यस्तममुम्। अयंभावः—पत्नीत्वेन श्रियम्, राजत्वेन राज्ञः, देवत्वेन देवान् न, भजते अनुचरत्वेन तु सर्वानेव भजत इति भावः ॥ १०० ॥

नारदजी प्रचेतसों से कहते हैं—स्वयं परिपूर्णकाम भगवान् अनुगामिनी लक्ष्मी के याचक राजाओं एवं देवों की परवाह नहीं करते, परन्तु अपने भक्तों के अधीन हो जाते हैं। कोई कृतज्ञ मनुष्य थोड़ी देर के लिए भी ऐसे भगवान् का त्याग कैसे कर सकता है ?॥ १००॥

—×—

राजन् पतिर्गुरुरलं भवतां यदूनां
दैवं प्रियः कुलपतिः क्व च किङ्करो वः।
अस्त्वेवमङ्ग भजतां भगवान् मुकुन्दो
मुक्तिं ददाति कर्हिचिद् नहि भक्तियोगम् ॥१०१॥
(५।६।१८ शुकः)

भगवतो भक्तवश्यतां प्रपञ्चयन्नेवैतादृशभक्तेर्दुर्लभत्वं दर्शयितुं श्रीशुकवचनमाह—राजन्निति। राजन् परीक्षित्, पतिः प्रभुः, गुरुर्हितोपदेष्टा भवतां पाण्डवानां यदूनां दैवमाराध्यः, मुक्तिं ददाति, परन्तु प्रेमसहितं भक्तियोगं न ददाति। तत्कृपां विना साधनान्तरैरपि भक्तिर्दुर्लभेति भावः॥ १०१ ॥

शुकदेवजी राजा परीक्षित् से कहते हैं—हे राजन्! भगवान् श्रीकृष्ण आप पाण्डवों और यादवों के प्रियपति, प्रभु, गुरू एवं इष्टदेव हैं, यहाँ तक कि वे कभी-कभी आज्ञाकारी सेवक भी बन जाते है। ये सब होते हुए भी भजन करनेवालों को मुक्ति दे देते हैं, किन्तु प्रेमभक्ति सहज में किसी को नहीं देते। प्रेमभक्ति प्राप्त करना वास्तव में बड़ा ही कठिन है ॥ १०१ ॥

—×—

सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः।
सुशीलाः साधवो यत्र नारायणपरायणाः ॥ १०२ ॥
(६।१।१७ शुकः)

तस्मात् पर्यवसितमाह—सध्रीचीन इति। अयं पन्था विष्णुभक्तिमार्गः। सध्रीचीनत्वे हेतुः—क्षेमो नाशरहितः, यतः—अकुतोभयः। यत्र यस्मिन् पथि वर्तंत इति शेषः। नारायणपरायणाः, न तु सकामाः ॥ १०२ ॥

इस लोक में यह भक्तिमार्ग सर्वश्रेष्ठ है, क्योंकि यह मार्ग कल्याण मय है, इसमें किसी प्रकार का भय नहीं है। इस पर सुशील साधु एवं नारायणानुरक्त भक्त चलते है ॥ १०२ ॥

—×—

ते देवसिद्धपरिगीतपवित्रगाथा
ये साधवः समदृशो भगवत्प्रपन्नाः ।
तन्नोपसीदत हरेर्गदयाऽभिगुप्तान्
नैषां वयं न च वयः प्रभवाम दण्डे ॥ १०३ ॥
( ६।३।२७ यमः )

अकुतोभयत्वमेव दर्शयितुं यमवाक्यमाह–ते देवेति। ये भगवन्तं प्रपन्नास्ते देवैः सिद्धैश्च परिगीतपवित्रगाथाः वर्णितपवित्रगाथाः। अतस्तन्नोपसीदत तत्समीपमपि न गच्छत। वयः कालोऽपि न प्रभवति। यत्र यमकालाभ्यामपि न भयम्, तत्र कुतोऽन्यस्मादित्यकुतोभयत्वम् ॥ १०३ ॥

यमराज अपने दूतों से कहते हैं—जो साधु लोग समदर्शी और भगवान् के शरणागत हैं, उनका पवित्र यश देवता और सिद्ध लोग गाते हैं। उनकी रक्षा भगवान् की गदा करती है। तुम लोग ऐसे पुरुषों के समीप भी मत जाना, क्योंकि उनको दण्ड देने के लिए न तो मेरा अधिकार है, न काल का ही अधिकार है ॥ १०३ ॥

—×—

न तस्य कश्चिद् दयितः सुहृत्तमो
न वा प्रियो द्वेष्य उपेक्ष्य एव वा ।
तथापि भक्तान् भजते यथा तथा
सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥ १०४ ॥
( १०।३८।२२ अक्रूरः )

ननु भक्तानेव रक्षतीति भगवतो वैषम्यं नेत्याह—न तस्येति। दयितो वल्लभः, सुहृद् निरपेक्षोपकारकः, प्रियः सखा, द्वेष्यः शत्रुः, उपेक्ष्य उदासीनश्च यद्यपि तस्य कोऽपि नास्ति, समत्वात्; तथापि स्वभावाद् यद्वत्सुरद्रुम उपासितस्यैवार्थं ददाति तथा भक्तान् भजते अनुगृह्णाति यथा यथावत् ॥ १०४ ॥

अक्रूरजी भगवान् की विशेषता बतला रहे हैं—भगवान् श्रीकृष्ण का न तो कोई प्रिय है, न हितकारी मित्र है, न कोई अप्रिय शत्रु है, न कोई द्वेषी है और न भगवान् किसी के प्रति उदासीन हैं, फिर भी जैसे जो लोग कल्पवृक्ष की सेवा करते हैं और वह उनकी कामना सिद्ध करता है, वैसे ही जो जैसे भगवान् को भजता है, वे भी उस पर वैसे ही कृपा करते हैं ॥ १०४ ॥

—×—

**केवलेन हि भावेन गोप्यो गावो नगा मृगाः ।**
**येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥ १०५ ॥**

**( ११।१२।८ श्रीकृष्णः )**

भक्तान् भजत इत्यत्र भगवद्वचनं प्रमाणयति–केवलेनेति । सत्सङ्गलब्धेन केवलेनैव भावेन प्रीत्या नगाः = यमलार्जुनादयः, नागाः कालिया इति । यद्वा तदानीं तृणतरुलतागुल्मादीनामपि भगवति भावो गम्यते । तदुक्तं भगवतैव–**अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनः फलार्हणम् । नमन्त्युपादाय शिखाभिरात्मनस्तमोपहत्यै तनुजन्म यत्कृते ॥ (भा० १०।१५।५ )** । अहो अमीत्यनेन सिद्धाः कृतार्थाः सन्त ईयुः प्रापुः ॥ १०५ ॥

भगवान् श्रीकृष्ण उद्धवजी से कहते हैं—गोपियाँ, गायें, वृक्ष (यमलार्जुन), मृग, कालिय आदि नाग[1] और इनके अतिरिक्त अन्यान्य मूढ जीव, वृंदावन की लता, निकुञ्ज, और पेड़-पौधे भी केवल भाव से कृतार्थ होकर विना परिश्रम मुझको प्राप्त करते हैं ॥ १०५ ॥

—×—

**भजन्ति ये विष्णुमनन्यचेतसस्तथैव तत्कर्मपरायणा नराः ।**
**विनष्टरागादिविमत्सरा नरास्तरन्ति संसारसमुद्रमाश्रमम् ॥ १०६ ॥**

**(हृ० भ० सु० १।५)**

तस्मात् साधूक्तं तेषां श्रमः स्यात्, न तु सेवया इत्याह—भजन्ति य इति । तथैवानन्यचेतसः । तेनैव तदर्पणार्थं श्रौतं स्मार्तं च कर्म कुर्वन्तीति तत्कर्मपरायणाः । अत एव विनष्टरागादिदोषाः । अत एव विमत्सराः । आश्रमं संन्यासयोगादिपरिश्रमं विनापि ॥ १०६ ॥

जो लोग एकाग्र चित्त से भगवान् विष्णु का भजन करते हैं और उनके यज्ञादि कर्मों में लगे रहते हैं, उनका राग द्वेष दूर हो जाता है । वे विना परिश्रम संसाररूपी समुद्र को पार कर जाते हैं ॥ १०६ ॥

—×—

१—इनकी कथाएँ श्रीमद्भागवत के दशम स्कन्ध में प्रसिद्ध है ।

नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ॥ १०७ ॥
( १।५।१२ नारदः )

किञ्च भक्तिहीनं कर्म बन्धनमेवेति कैमुतिकन्यायेनाह–नैष्कर्म्यमपीति । निष्कर्म ब्रह्म, तदेककरणत्वात् । निष्कर्मतारूपं नैष्कर्म्यम् । अज्यतेऽनेनेत्यञ्जनम् = उपाधिः, तन्निवर्तकं निरञ्जनम् । एवं भूतमपि ज्ञानम्, अच्युते भावो भक्तिः, तद्वर्जितं चेदलमत्यर्थं न शोभते, सम्यगपरोक्षाय न कल्पत इत्यर्थः । यद्वा ज्ञानमलं तन्नैष्कर्म्यम्, अथवा अलं महदज्ञानम् । तथा शश्वत् साधनकाले फलपाके अभद्रं दुःखरूपं च यत् काम्यं कर्म यदप्यकारणमकाम्यं तच्चेति चकारस्यान्वयः । तदपि कर्म ईश्वरे नार्पितं चेत्, कुतः पुनः शोभते बहिर्मुखत्वेन, सत्त्वशोधकत्वाभावात् । एतावता निरपेक्षसाधनत्वादिना भक्तिर्गरीयसीत्युक्तम् ॥ १०७ ॥

देवर्षि नारद महर्षि व्यासजी से कह रहे हैं—उपाधिनिवर्तक एवं कर्मफल की वासना से रहित ब्रह्मज्ञान भी यदि भगवद्भक्ति से विहीन हो तो उसकी शोभा नही होती । भला वह कर्म कैसे शोभायमान हो सकता है ? जो केवल अपने सुखों के लिये किया जाय ? सारांश यह है कि भगवान् विष्णु की भक्ति के विना ब्रह्मज्ञान बेकार है ॥ १०७ ॥

—×—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥ १०८ ॥
( १।७।१० सूतः )

भक्तेर्मोक्षादपि गरीयस्त्वं द्रढयति—आत्मारामेति । निर्ग्रन्थाः = ग्रन्थेभ्यो निर्गताः । तदुक्तं गीतासु–"यदा ते मोहकलिलम्" इत्यनेन । यद्वा ग्रन्थिरेव ग्रन्थः, निवृत्तहृदयग्रन्थय इत्यर्थः । ननु मुक्तानां किं भक्त्येत्यादिसर्वाक्षेपपरिहारार्थमाह—इत्थंभूतगुण इति । वस्तुस्वभाव एव, तथा तद्विवेकी तव भक्तिमेवाश्रयतीति भावः ॥ १०८ ॥

सूतजी शौनक से भगवान् की विशेषता बतला रहे हैं—ब्रह्मानन्द में निमग्न और संसार के बन्धन से मुक्त मुनि लोग भी सर्व शक्तिशाली भगवान् श्रीकृष्ण में निष्काम भक्ति करते हैं, क्योंकि उनके गुण ही ऐसे हैं कि भक्ति किये विना रहा नहीं जाता ॥ १०८ ॥

—×—

**न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम्।**
**न योगसिद्धिरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे ॥ १०९ ॥**

**( ६।११।२५ वृत्रः )**

एवं पुरुषार्थेभ्यो भक्तिरुत्तमेत्याशयेन वृत्रासुरवचनमुदाहरति—न नाकपृष्ठमिति। नाकपृष्ठं ध्रुवपदं ब्रह्मलोकादिकं च। हे समञ्जस! निखिलसौभाग्यनिधे! त्वा त्वां विरहय्य पृथक् कृत्वा भक्तिं हित्वा अन्यद् नेच्छामि ॥ १०६ ॥

वृत्रासुर भगवान् से प्रार्थना करता है—हे सर्वसौभाग्यनिधि! मैं आपको छोड़कर न स्वर्गलोक की, न ब्रह्मलोक की, न पृथ्वी की, न चक्रवर्ती राज्य की, न पातालपुरी के राज्य की, न अणिमादि योगसिद्धि की और न मोक्ष की ही आकाङ्क्षा करता हूँ ॥ १०९ ॥

—×—

**तस्माद् मद्भक्तियुक्तस्य योगिनो वै मदात्मनः।**
**न ज्ञानं न च वैराग्यं प्रायः श्रेयो भविष्यति ॥ ११० ॥**

**( ११।२०।३१ श्रीकृष्णः )**

तदत्र प्रकरणार्थे भवगवद्वचनं प्रमाणयन्नुपसंहरत्यासमाप्तेः—तस्मादिति। तदात्मनो मयि आत्मा चित्तं यस्य तस्य श्रेयः, श्रेयः साधनं वा ॥ ११० ॥

भगवान् श्रीकृष्ण उद्धव से कह रहे हैं—इसलिए मुझमें मन लगाकर मेरी भक्ति करनेवाले योगी को न ज्ञान से मतलब है और न वैराग्य से, अपितु भक्तियोग ही उसके कल्याण का साधन है ॥ ११० ॥

—×—

**यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्।**
**योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ १११ ॥**
**सर्वं [1]मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा।**
**स्वर्गापवर्गौ मद्धाम कथञ्चिद्यदि वाञ्छति ॥ ११२ ॥**

**( ११।२०।३२,३३ श्रीकृष्णः )**

तत्र हेतुः—यत्कर्मभिरिति। इतरैस्तीर्थयात्राव्रतादिभिः श्रेयोभिः श्रेयःसाधनैर्यद् यद्भाव्यं सत्त्वशुद्ध्यादि तत्सर्वमिति ॥ १११ ॥

अञ्जसा अनायासेनैव। स्वर्गमपवर्गं च मद्धाम वैकुण्ठं लभत एव, वाञ्छा तु नैवास्तीत्युक्तम्—यदि वाञ्छति ॥ ११२ ॥

---

१–तत्सर्वमिति पाठान्तरम्।

नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ।। १०७ ।।
( १।५।१२ नारदः )

किञ्च भक्तिहीनं कर्म बन्धनमेवेति कैमुतिकन्यायेनाह–नैष्कर्म्यमपीति । निष्कर्म ब्रह्म, तदेककरणत्वात् । निष्कर्मतारूपं नैष्कर्म्यम् । अज्यतेऽनेनेत्यञ्जनम् = उपाधिः, तन्निवर्तकं निरञ्जनम् । एवं भूतमपि ज्ञानम्, अच्युते भावो भक्तिः, तद्वर्जितं चेदलमत्यर्थं न शोभते, सम्यगपरोक्षाय न कल्पत इत्यर्थः । यद्वा ज्ञानमलं तन्नैष्कर्म्यम्, अथवा अलं महदज्ञानम् । तथा शश्वत् साधनकाले फलपाके अभद्रं दुःखरूपं च यत् काम्यं कर्म यदप्यकारणमकाम्यं तच्चेति चकारस्यान्वयः । तदपि कर्म ईश्वरे नार्पितं चेत्, कुतः पुनः शोभते बहिर्मुखत्वेन, सत्त्वशोधकत्वाभावात् । एतावता निरपेक्षसाधनत्वादिना भक्तिर्गरीयसीत्युक्तम् ।। १०७ ।।

देवर्षि नारद महर्षि व्यासजी से कह रहे हैं—उपाधिनिवर्तक एवं कर्मफल की वासना से रहित ब्रह्मज्ञान भी यदि भगवद्भक्ति से विहीन हो तो उसकी शोभा नहीं होती । भला वह कर्म कैसे शोभायमान हो सकता है ? जो केवल अपने सुखों के लिये किया जाय ? सारांश यह है कि भगवान् विष्णु की भक्ति के विना ब्रह्मज्ञान बेकार है ।। १०७ ।।

—×—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ।। १०८ ।।
( १।७।१० सूतः )

भक्तेर्मोक्षादपि गरीयस्त्वं द्रढयति—आत्मारामेति । निर्ग्रन्थाः = ग्रन्थेभ्यो निर्गताः । तदुक्तं गीतासु–"यदा ते मोहकलिलम्" इत्यनेन । यद्वा ग्रन्थिरेव ग्रन्थः, निवृत्तहृदयग्रन्थय इत्यर्थः । ननु मुक्तानां किं भक्त्येत्यादिसर्वाक्षेपपरिहारार्थमाह—इत्थंभूतगुण इति । वस्तुस्वभाव एव, तथा तद्विवेकी तव भक्तिमेवाश्रयतीति भावः ।। १०८ ।।

सूतजी शौनक से भगवान् की विशेषता बतला रहे हैं—ब्रह्मानन्द में निमग्न और संसार के बन्धन से मुक्त मुनि लोग भी सर्व शक्तिशाली भगवान् श्रीकृष्ण में निष्काम भक्ति करते हैं, क्योंकि उनके गुण ही ऐसे हैं कि भक्ति किये विना रहा नहीं जाता ।। १०८ ।।

—×—

न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम्।
न योगसिद्धिरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे ॥ १०९ ॥
( ६।११।२५ वृत्रः )

एवं पुरुषार्थेभ्यो भक्तिरुत्तमेत्याशयेन वृत्रासुरवचनमुदाहरति—न नाकपृष्ठमिति । नाकपृष्ठं ध्रुवपदं ब्रह्मलोकादिकं च । हे समञ्जस ! निखिलसौभाग्यनिधे ! त्वा त्वां विरहय्य पृथक् कृत्वा भक्तिं हित्वा अन्यद् नेच्छामि ॥ १०६ ॥

वृत्रासुर भगवान् से प्रार्थना करता है—हे सर्वसौभाग्यनिधि ! मैं आपको छोड़कर न स्वर्गलोक की, न ब्रह्मलोक की, न पृथ्वी की, न चक्रवर्ती राज्य की, न पातालपुरी के राज्य की, न अणिमादि योगसिद्धि की और न मोक्ष की ही आकाङ्क्षा करता हूँ ॥ १०९ ॥

—×—

तस्माद् मद्भक्तियुक्तस्य योगिनो वै मदात्मनः।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भविष्यति ॥ ११० ॥
( ११।२०।३१ श्रीकृष्णः )

तदत्र प्रकरणार्थे भवगवद्वचनं प्रमाणयन्नुपसंहरत्यासमाप्तेः—तस्मादिति । तदात्मनो मयि आत्मा चित्तं यस्य तस्य श्रेयः, श्रेयः साधनं वा ॥ ११० ॥

भगवान् श्रीकृष्ण उद्धव से कह रहे हैं—इसलिए मुझमें मन लगाकर मेरी भक्ति करनेवाले योगी को न ज्ञान से मतलब है और न वैराग्य से, अपितु भक्तियोग ही उसके कल्याण का साधन है ॥ ११० ॥

—×—

यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ १११ ॥
सर्वं [1]मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा।
स्वर्गापवर्गौ मद्धाम कथञ्चिद्यदि वाञ्छति ॥ ११२ ॥
( ११।२०।३२,३३ श्रीकृष्णः )

तत्र हेतुः—यत्कर्मभिरिति । इतरैस्तीर्थयात्राव्रतादिभिः श्रेयोभिः श्रेयःसाधनैर्यद् यद्भाव्यं सत्त्वशुद्ध्यादि तत्सर्वमिति ॥ १११ ॥

अञ्जसा अनायासेनैव । स्वर्गमपवर्गं च मद्धाम वैकुण्ठं लभत एव, वाञ्छा तु नैवास्तीत्युक्तम्—यदि वाञ्छति ॥ ११२ ॥

---

१–तत्सर्वमिति पाठान्तरम्।

इसी प्रकार भगवान् श्रीकृष्ण उद्धवजी से कह रहे हैं कि कर्मकाण्ड से तपश्चर्या से ज्ञान से, वैराग्य से, योग से, दान से, धर्म से और अन्य प्रकार के सुकृत से जो कुछ फल प्राप्त हो सकता है, वह सब मेरे भक्त को मेरी भक्ति के प्रभाव से अनायास प्राप्त हो जाता है। यदि वह चाहता है तो उसको स्वर्ग, मोक्ष और मेरा वैकुण्ठधाम भी प्राप्त हो जाता है ॥ १११-११२ ॥

—×—

**न किञ्चित् साधवो धीरा भक्त्या ह्येकान्तिनो मम ।**
**वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ११३ ॥**
**( ११।२०।३४ श्रीकृष्णः )**

एतत्सहेतुकं स्पष्टयति—न किञ्चिदिति। धीमन्तो यतो मम एकान्तिनो मय्येव प्रीतिर्युक्ताः, अतो मया दत्तमपि न गृह्णन्ति। किञ्च, वक्तुं न वाञ्छन्तीत्यर्थः। अपुनर्भवं यत्कैवल्यम् ॥११३॥

मेरे एकान्त भक्त धीर साधु लोग मुझे ही प्रेम करते हैं। अतः वे मेरे द्वारा दिये गये आत्यन्तिक मोक्ष को भी नहीं चाहते ॥ ११३ ॥

—×—

**नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।**
**तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥ ११४ ॥**
**( ११।२०।३५ श्रीकृष्णः )**

आत्यन्तिकमपि कैवल्यम्, तदुपपादयति—नैरपेक्ष्यमिति। नैरपेक्ष्यमेव परमुत्कृष्टम् अनल्पकं महद् निःश्रेयसं फलम्। तत्साधनं वा प्राहुः, मे भक्तिर्निराशिषः प्रार्थना कारणभूतापेक्षारहितस्य पुंसो भवेत्, यद्वा मे निरपेक्षस्य या भक्तिः सा निराशिषो भवेदित्यर्थः ॥ ११४ ॥

निरपेक्ष होना ही सर्वोत्तम सौभाग्य है। इसीलिए निरपेक्ष एवं निष्काम भक्त को मेरी भक्ति प्राप्त होती है ॥ ११४ ॥

—×—

**न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।**
**साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥ ११५ ॥**
**( ११।२०।३६ श्रीकृष्णः )**

अनेन च प्रकारेण सिद्धानां न गुणदोषा इति विरोधपरिहारमुपसंहरति—न मयीति। गुणदोषैर्विहितप्रतिषिद्धैरुद्भवो येषां ते गुणाः पुण्यपापादयः। साधूनां निरस्तरागादिनाम्। अतः समचित्तानाम्। अत एव परमीश्वरं प्राप्तानां बुद्धेः परमुपेयुषाम् ॥ ११५ ॥

जिन सज्जनों का अन्तःकरण समभाव को प्राप्त हो गया है और जो बुद्धि से परे परमात्मा को प्राप्त हो गये हैं, ऐसे मेरे अनन्य भक्तों को धर्माधर्म से होनेवाले पुण्य-पाप आदि कुछ भी नहीं लगते ॥ ११५ ॥

—×—

**एवमेतान् मयादिष्टान् नु तिष्ठन्ति मे पथः ।**
**क्षेमं विन्दन्ति मत्स्थानं यद् ब्रह्म परमं विदुः ॥ ११६ ॥**

( ११।२०।३७ श्रीकृष्णः )

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलद्विवेक-
तैरभुक्तपरमहंसविष्णुपुरीग्रथितायां भागवतामृताब्धिलब्ध-
**श्रीभगवद्भक्तिरत्नावल्यां प्रथमं विरचनम् ॥**

तदेवमुपसंहरति भगवान् एवमिति । मे पथः मत्प्राप्त्युपायाननुतिष्ठन्ति ये ते क्षेमं काल-मायादिरहितं मम लोकं विन्दन्ति यत् परमं ब्रह्म तच्च विदुः ॥ ११६ ॥

**॥ इति श्रीभक्तिरत्नावल्याः टीकायां कान्तिमालायां प्रथमं विरचनम् ॥**

जो मनुष्य मेरे द्वारा इस प्रकार कहे गये मेरी प्राप्ति के साधनों का आचरण करता है, वह काल-माया से रहित मेरे लोक को प्राप्त होता है और साक्षात् परब्रह्म को भी प्राप्त कर लेता है ॥ ११६ ॥



# अथ द्वितीयं विरचनम्

सतां प्रसङ्गान्मम वीर्यसंविदो
भवन्ति हृत्कर्णरसायनाः कथाः ।
तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥ १ ॥
( ३।२५।२४ कपिलः )

अथ भगवद्भक्तिकारणं निरूप्यते । तत्र परमकृपालुश्रीनारायणकल्पवल्लीफलं सत्सङ्गः प्रधानमिति भागवताभिप्रायः । अतस्तमेव दर्शयितुं प्रथमं तावत् श्रीकपिलवचनमाह—सतामिति । वीर्यस्य सम्यग् वेदनं यासु ता वीर्यसंविदः । हृत्कर्णयो रसायनाः सुखदाः, तासां जोषणात् सेवनात् । अपवर्गः अविद्यानिवृत्तिर्वर्त्म यस्मिन् । अविद्यानिवृत्या यः प्राप्यते इत्यर्थः । यद्वा मोक्षदो यस्तस्मिन् हरौ प्रथमं श्रद्धा, ततो रतिः, ततो भक्तिः । अनुक्रमिष्यति क्रमेण भविष्यतीत्यर्थः ॥ १ ॥

कपिलजी अपनी माता देवहूति से कहते हैं—सत्पुरुषों के संग से हृदय और कानों को सुख देनेवाली तथा मेरे पराक्रमों का ज्ञान करानेवाली कथाएं सुनने में आती हैं । कथाओं के सुनने से अपवर्ग रूप भगवान् में क्रमशः श्रद्धा, प्रीति और भक्ति प्रगट होती है ॥ १ ॥

—×—

सत्सेवया दीर्घयाऽपि जाता मयि दृढा मतिः ।
हित्वाऽवद्यमिमं लोकं गन्ता मज्जनतामसि ॥ २ ॥
( १।६।२४ श्रीकृष्णः )

न केवलं प्रकृष्ट एव तथा, किन्तु स्वल्पोऽपि सत्सङ्गः कर्तव्यः । भक्तिं दत्वा नारदं प्रति भगवदाकाशवाणीं दर्शयति—सत्सेवयेति । अदीर्घयाऽपि सतां सेवया अवद्यं निन्द्यं दासीप्रसूतत्वाल्लोकं देहं हित्वा मज्जनतां मत्पार्षदतां गन्तासि मद्भक्तो भविष्यस्येव, मत्पार्षदस्तु दिव्येन नारदरूपेण भविष्यसीति भावः ॥ २ ॥

भगवान् ने नारद के प्रति आकाशवाणी की—तुमने जो थोड़े समय तक सत्पुरुषों की सेवा की है उससे मुझमें तुम्हारी दृढ भक्ति हो गई है। अब तुम दासी से उत्पन्न होने के कारण निन्द्य अपने इस शरीर का त्यागकर मेरे भक्तों के बीच मेरा पार्षद बनकर रहोगे[1] ॥ २ ॥

—×—

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम्।
भगवत्सङ्गिसङ्गस्य[2] मर्त्यानां किमुताशिषः ॥ ३ ॥
(१।१८।१३ सूतः; ४।३०।२४ प्रचेतसः)

अत एव सत्सङ्गः स्वर्गादिभ्योऽपि श्रेयानिति शौनकवाक्येनाह—तुलयामेति। भगवत्सङ्गिनो विष्णुभक्ताः, तेषां सङ्गस्य यो लवः अत्यल्पकालस्तेनापि स्वर्ग्यं स्वर्गसुखं न तुलयाम, न समं पश्यामः, न चापवर्गम्। सम्भावनायां लोट्। मर्त्यानां तुच्छा आशिषो राज्याद्या न तुलयामेति किमु वक्तव्यम्? तस्मात् सर्वतः सत्सङ्गः श्रेयानिति भावः ॥ ३ ॥

ऋषियों ने सूत से कहा है कि—हमलोग भगवद्भक्तों के क्षणभर के सत्सङ्ग के बराबर न तो स्वर्ग को मानते हैं, न मोक्ष को गिनते हैं। तब मनुष्यों के राज्यादिकों की क्या बात है? अर्थात् भगवद्भक्तों का सत्सङ्ग सबसे बढ़कर मंगलकारी है ॥ ३ ॥

—×—

यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः।
सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥ ४ ॥
(१।१।१५ ऋषयः)

अत्र तद्वाक्येनैव हेतुमाह—यत्पादसंश्रया इति। यत्पादः यस्य भगवतश्चरणः संश्रयो येषाम्, अत एव प्रशमः अयनो वर्त्म येषां ते मुनय उपस्पृष्टाः सन्निधिमात्रेण सेविताः सद्यः पुनन्ति। भक्तिप्रतिबन्धकं पापं नाशयन्तीत्यर्थः। स्वर्धुनी गङ्गा तस्या आपस्तत्पादान्निःसृता, न तु तत्रैव

१. नारदजी का जन्म एक बार दासी के गर्भ से हुआ था। देखिए श्रीमद्भागवत स्कन्ध १, अध्याय ५।

२. "भवत्प्रसङ्गिसङ्गस्य" इति क्वाचित्कः पाठः।

तिष्ठन्ति। अतस्तत्सम्बन्धेनैव पुनन्त्योऽप्यनुसेवया पुनन्ति। ननु सद्यः, यतः सतां हृदि सर्वात्मना भगवान् वर्तत इति सतामुत्कर्षः, तद्युक्तमुक्तम्—सत्सेवया, दीर्घयापीति भावः ॥ ४ ॥

हे सूत! गंगाजल देर तक सेवन करने से पवित्र करता है, किन्तु भगवान् के चरण-कमलों के आश्रित शान्तिपथ के पथिक मुनि लोग तो समीप पहुँच जाने पर तुरन्त ही पवित्र कर देते हैं। तात्पर्य यह है कि गंगाजल भगवान् के चरणों से ही निकला है, परन्तु उनके चरणों में स्थित नहीं रहता। अतः भगवत्सम्बन्ध से वह पवित्र तो करता है, किन्तु देर से। लेकिन सन्त तो केवल सन्निधिमात्र से ही पवित्र कर देते हैं, क्योंकि उनके हृदय में भगवान् निरन्तर विराजमान रहते हैं ॥ ४ ॥

—×—

नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया।
भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥ ५ ॥

(१।२।१८ सूतः)

सत्सङ्गस्तु महता पुण्येन लभ्यते। एवं सदा सत्सङ्गस्य विष्णुभक्तिप्रदत्वे व्यतिरेकशङ्काऽपि नास्तीत्याह सत्सङ्गो विष्णुभक्तिं ददाति—नष्टप्रायेष्विति। अभक्तस्य स्वभावान् म्लेच्छादिशरीरारम्भकं विद्यमानमप्यभद्रं पापं सत्सङ्गे सति। भक्तिप्रतिबन्धकमित्यभिप्रेत्य प्रायग्रहणम्। भक्तिप्रतिबन्धकेषु नष्टेष्वित्यर्थः। भागवतानां वैष्णवानां नित्यं सदा सेवया सङ्गेन नैष्ठिकी निश्चला, विक्षेपकाभावात् ॥ ५ ॥

सूतजी शौनक से कह रहे हैं—भगवद्भक्तों की सेवा से जब कर्मों की वासना नष्ट हो जाती है, तब भगवान् में दृढ भक्ति होती है ॥ ५ ॥

—×—

अहो वयं जन्मभृतोऽद्य हास्म
वृद्धानुवृत्यापि विलोमजाताः।
दौष्कुल्यमाधिं विधुनोति शीघ्रं
महत्तमानामभिधानयोगः ॥ ६ ॥

(१।१८।१८ सूतः)

सोऽयं सत्सङ्गोऽधमानप्युद्धरतीत्याह सूतवाक्येन—अहो वयमिति। अहो इत्याश्चर्ये, ह इति हर्षे, वयमिति श्लाघायां बहुवचनम्। प्रतिलोमजा अपि अद्यजन्मभृतः सफलजन्मानः

आत्मजाताः, वृद्धानां भवतामनुवृत्या आदरेण, ज्ञानवृद्धः शुकस्तस्य सेवयेति वा, यतो दुष्कुलत्वं तन्निमित्तमाधिं पीडां महत्तमानामभिधानयोगः, लौकिकोऽपि सम्भाषणलक्षणसम्बन्धो विधुनोति अपनयति ॥ ६ ॥

बड़े हर्ष की बात है कि आज मेरा मनुष्यजन्म सफल हुआ। यद्यपि मैं विलोमज[२] होने के नाते अकुलीन हूँ, फिर भी ज्ञानवृद्ध पुरुषों की सेवा से आज मेरा जन्म सफल हो गया, क्योंकि महापुरुषों के साथ सम्भाषण एवं सत्सङ्ग अकुलीनता से उत्पन्न मनोव्यथा को शीघ्र समाप्त कर देता है ॥ ६ ॥

—×—

**येषां संस्मरणात् पुंसां सद्यः शुद्ध्यन्ति वै गृहाः।**
**किं पुनर्दर्शन-स्पर्श-पाद-शौचासनादिभिः ॥ ७ ॥**

**( १।१९।३३ परीक्षित् )**

आस्तामभिधानादिसम्बन्धः, सतां स्मरणमपि शुद्धिहेतुरित्याह—येषामिति। कर्तृत्वेन विषयत्वेन च स्मरणसम्बन्धः, यान् साधवः स्मरन्ति, साधून् वा ये, तेषां पुंसा गृहाः, किं पुनः सन्निहितदेहेन्द्रियादिपादशौचं चरणक्षालनम् ॥ ७ ॥

राजा परीक्षित् श्रीशुकदेवजी से कह रहे है—जिन साधु पुरुषों के स्मरणमात्र से लोगों के घर तत्काल पवित्र हो जाते हैं, फिर उनके दर्शन, स्पर्शन, चरण-प्रक्षालन और आसन पर बैठाने से पवित्र हो इसमें कहना ही क्या है ? ॥ ७ ॥

—×—

---

२. शास्त्रों में असवर्ण विवाह दो प्रकार के माने गये है—एक अनुलोम दूसरा प्रतिलोम। उच्च वर्ण का वर एवं नीच वर्ण की कन्या का विवाह अनुलोम विवाह कहा जाता है, जैसे ब्राह्मण से क्षत्रिया का विवाह अनुलोम विवाह है और नीच वर्ण के वर से उच्च वर्ण की कन्या का विवाह प्रतिलोम विवाह कहा जाता है, जैसे क्षत्रिय से ब्राह्मणी का विवाह। अनुलोम विवाह की सन्तान पिता से नीच और माता से उच्च—मिश्र वर्ण में गिनी जाती है, तथा प्रतिलोम विवाह से उत्पन्न सन्तान माता-पिता दोनों से हीन मानी जाती है। क्षत्रिय पिता और ब्राह्मणी माता से सूतजी का जन्म हुआ था। अतः सूतजी ने इस श्लोक में अपनी इसी हीन जाति का परिचय दिया है। सूतजी विलोम ( प्रतिलोम ) जाति के होने पर भी अपनी पुराणाभिज्ञता के गुण के कारण ऋषियों में आदर के पात्र थे।

वर्तमान काल में भी कहीं-कहीं ऐसा विवाह देखा जाता है। अंग्रेज और काले लोगों का विवाह भी प्रायः ऐसा ही माना जाता है। यदि कोई साहब काले आदमी की औरत से विवाह कर लें तो वह ऐसा निकृष्ट नहीं माना जाता, जैसा कि कोई मेम किसी काले आदमी से विवाह कर लें।

दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु ।
यत्रोपगीयते नित्यं देवदेवो जनार्दनः ॥ ८ ॥
( ३।७।२० विदुरः )

ननु तर्हि सर्वे किमिति साधूनेव न भजन्त इत्यत आह—दुरापेति । अल्पतपसः भगवताऽननुगृहीतस्येत्यर्थः । दुर्लभा वैकुण्ठस्य विष्णोर्वर्त्मसु मार्गभूतेषु महत्सु यत्र येषु ॥ ८ ॥

विदुरजी मैत्रेय से कहते हैं—जिन महापुरुषों में देवदेव भगवान् जनार्दन के गुण पाये जाते हैं, वे साक्षात् भगवत्प्राप्ति के मार्ग हैं । उनकी सेवा का मिलना पुण्यहीन पुरुष के लिए अति दुर्लभ है ॥ ८ ॥

—×—

सत्सेवया भगवतः कूटस्थस्य मधुद्विषः ।
रतिरागो भवेत्तीव्रः पादयोर्व्यसनार्दनः ॥ ९ ॥
( ३।७।१९ विदुरः )

तत्फलमाह—सत्सेवयेति । सत्सेवा हरिकथाश्रवणादि । ततो मधुद्विषः पादयोः रतिरागः प्रेमोत्सवस्तीव्रो दुर्वारः स्वाभाविकं व्यसनं संसारम् अर्दयतीति तथा ॥ ९ ॥

आप जैसे महात्माओं की सेवा से मधुसूदन भगवान् श्रीकृष्ण के चरणों में तीव्र अनुराग उत्पन्न होता है जिससे सब पाप और दुःख दूर हो जाते हैं ॥ ९ ॥

—×—

प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ।
स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ १० ॥
(३।२५।२० कपिलः)

ननु सङ्गत्वाविशेषादसत्सङ्गवत् सत्सङ्गोऽपि श्रेयोऽर्थिभिर्हेय एव नेत्याह—प्रसङ्गमिति । अजरं दुश्छेद्यं पाशं बन्धनम्, आत्मनो जीवस्य स एव सङ्गः साधुविषयश्चेद् मोक्षद्वारमपावृतं निरावरणं स्यादेव । सत्सङ्गो भक्तिं दत्त्वा अनायासेन मोक्षप्रदमित्यर्थः ॥ १० ॥

कपिलजी माता देवहूति से कह रहे हैं—तत्त्वज्ञानी पुरुष कहते हैं कि स्त्री, पुत्र, मित्र आदि में आसक्ति दृढ बन्धन है, पर वही आसक्ति यदि सत्पुरुषों में की जाय तो वह मोक्ष का खुला दरवाजा है ॥ १० ॥

—×—

तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥ ११ ॥
मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ।
मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ १२ ॥
मदाश्रयाः कथामृष्टाः शृण्वन्ति कथयन्ति च ।
तपन्ति विविधास्तापा नैतान् मद्गतचेतसः ॥ १३ ॥
त एते साधवः साध्वि सर्वसङ्गविवर्जिताः ।
सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ १४ ॥

( ३।२५।२१–२४ कपिलः )

प्रसङ्गात् साधूनां लक्षणं दर्शयन्नमुमेवार्थं कपिलवचनेनाह चतुर्भिः—तितिक्षव इति । साधवः शास्त्रानुवर्तिनः; साधु सुशीलं भूषणं येषाम् ॥ ११ ॥

किञ्च, मय्यनन्येनेति । अनन्येन निष्कामेन दृढामव्यभिचारिणीम्, मत्कृते मत्प्रीत्यर्थम् ॥ १२ ॥

किञ्च, मदाश्रयेति । एतान् साधून् आध्यात्मिकादयस्तापा न तपन्ति न व्यथयन्ति, यतो मद्गतचित्तान्, यद्वा ये तापैर्नाभिभूयन्ते ते साधव इत्यर्थः ॥ १३ ॥

एवं साधून् लक्षयित्वा देवहूतिमुपदिशति—त एत इति । अन्तर्बहिः सङ्गशून्याः, अत एवाह—प्रार्थ्य इति । कारुणिकस्वभावत्वात् कृपयिष्यन्तीति भावः ॥ १४ ॥

सन्त उन्हें कहते हैं जो द्वन्द्वसहिष्णु हों, दयालु हों, जीवमात्र का हित चाहें, किसी से शत्रुता न रखते हों, शान्त स्वभाववाले हों, सुशीलरूपी आभूषण से विभूषित हों, जो अनन्य भाव से मेरी दृढभक्ति करते हों, मेरे निमित्त सकल कर्मो को छोड़ देते हों और जिसने अपने स्वजन एवं कुटुम्बियों तक का त्याग कर दिया हो । ११-१२ ।

सन्त मेरी पवित्र कथा कहते और सुनते हैं । इस प्रकार जिन सन्तों ने अपना मन मुझमें लगा दिया है उनको किसी प्रकार के ताप कष्ट नही पहुंचा पाते । १३ ।

हे मातः ! ऐसे साधु संगदोष से रहित होते हैं । तुम्हें ऐसे ही सत्पुरुषों की संगति करनी चाहिए, क्योंकि वे दूसरे के संगदोष को दूर करने वाले होते है ।। १४ ।।

—×—

भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो
भूयादनन्तमहतामलाशयानाम् ।
येनाञ्जसोल्वणमुरुव्यसनं भवाब्धि
नेष्ये भवद्गुणकथामृतपानमत्तः ॥ १५ ॥
( ४।९।११ ध्रुवः )

तस्मात् सङ्गत्वाविशेषादित्यपि वचः शून्यम् । एवं सत्सङ्गः प्रार्थ्य इत्युक्तमिति । प्रार्थितोऽपीति ध्रुववाक्येनाह—भक्तिमिति । भक्तिं त्वयि प्रवहतां सातत्येन कुर्वताम् । ननु मोक्षं किमिति न वाञ्छसीत्यत आह—येन सत्सङ्गेन अञ्जसा अयत्नत एव उरु व्यसनानि यस्मिन्, तं नेष्ये पारं गमिष्यामि । भगवद्गुणकथयैवामृतस्य पापेन मत्तः सन् मोक्षे त्वत्कथामृतपानं नास्तीति भावः ॥ १५ ॥

ध्रुवजी भगवान् से कह रहे हैं—हे अनन्त ! आप पर निरन्तर प्रेम रखनेवाले और निर्मल अन्त.करणवाले महापुरुषो का संग मुझे सदा प्राप्त हो, जिससे आपके गुणों की कथारूपी अमृत के पान से मस्त होकर मैं विविध दुःखों से पूर्ण भयंकर भवसागर को सहज में पार कर सकूं ॥ १५ ॥

—×—

ते न स्मरन्त्यतितरां प्रियमीश मर्त्यं
ये चान्वदः सुतसुहृद्गृहवित्तदाराः ।
ये त्वब्जनाभ भवदीयपदारविन्द-
सौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥ १६ ॥
( ४।९।१२ ध्रुवः )

कथामृतपानस्य मादकत्वमाह—ते न स्मरन्तीति । हे ईश ! अतितरां प्रियमपि मर्त्यं देहं न स्मरन्ति नानुसन्दधते, ये च सुतादयो मर्त्यम् अनुसम्बन्धास्तानपि । के ते न स्मरन्ति ? ये कृतप्रसङ्गाः । केषु ? भवदीयपदारविन्दसौगन्ध्ये लुब्धं हृदयं येषां तेषु । तत्प्रसङ्गेन हरिकथामृतं पीत्वा मत्ताः सन्तो न स्मरन्ति । तुशब्देन अन्येषां केवलं योगयागादिनिष्ठानां देहाभिमानिनां निवृत्तिं दर्शयति ॥ १६ ॥

हे कमलनयन प्रभो ! जिन मनुष्यों को आपके चरणारविन्द की सुगन्धि में लुब्ध हृदयवाले भक्त लोगों का उत्तम संग प्राप्त हो गया है, वे न तो अतिशय प्रिय अपने

शरीर की ओर न देह से संबन्ध रखनेवाले पुत्र, मित्र, कलत्र, घर, धन, धाम की ही कुछ परवाह करते हैं ॥ १६ ॥

—×—

तेषामहं पादसरोजरेणुमार्या वहेयाधिकिरीटमायुः।
यं नित्यदा[1] बिभ्रत आशु पापं नश्यत्यमुं सर्वगुणा भजन्ति ॥ १७ ॥
(४।२१।४३ पृथुः)

आस्तां सत्सङ्गः, तच्चरणरेणुरपि श्लाघ्य इति पृथुवचनेनाह—तेषामिति। हे आर्या आ आयुः यावज्जीवम्, अधिकिरीटं मुकुटस्योपरि वहेयेति प्रार्थनायां लिङ्। यद् यं रेणुं बिभ्रतः पुरुषस्य आशु पापं नश्यति, किं पुनर्नित्यदा बिभ्रतः। किञ्च, अमुं रेणुं सर्वे गुणा भजन्ति, यद्वा अमुं रेणुवाहकम्, रेणुवाहकः सर्वगुणाश्रयो भवतीत्यर्थः ॥ १७ ॥

राजा पृथु सभासदों से कहते हैं—हे आर्यों! मैं ब्राह्मणों के चरणरज को जीवनपर्यन्त अपने मस्तक के मुकुट में धारण करूँगा। जो ब्राह्मणों के पैर की धूलि को सदा सिर पर धारण करता है उसके पाप शीघ्र दूर हो जाते है और सभी अच्छे गुण उसके पास पहुंच जाते हैं ॥ १७ ॥

—×—

सङ्गमः खलु साधूनामुभयेषां च सम्मतः।
यत्सम्भाषणसंप्रश्नः सर्वेषां वितनोति शम् ॥ १८ ॥
(४।२२।१९ सनत्कुमारः)

तमिमं सत्सङ्गमभिनन्दति सनत्कुमारवचनेन—सङ्गमेति। उभयेषां पृच्छकानां वक्तॄणां च येषां सम्भाषणसहितः सम्प्रश्नः सर्वेषां श्रोतॄणामपि शं सुखं विस्तारयति, सोऽयं सत्सङ्गः प्रार्थ्य इत्युक्तम् ॥ १८ ॥

सनत्कुमार राजा पृथु से कहते हैं—सज्जन पुरुषों का समागम श्रोता एवं वक्ता दोनों के लिए लाभदायक है, क्योंकि उनके सम्भाषण एवं प्रश्नोत्तर से सबका कल्याण होता है ॥ १८ ॥

—×—

१. नित्यं यदा इति पाठान्तरम्।

अथानघाङ्घ्रेस्तव कीर्तितीर्थयो-
रन्तर्बहिः स्नानविधूतपाप्मनाम् ।
भूतेष्वनुक्रोशसुसत्त्वशीलिनां
स्यात् सङ्गमोऽनुग्रह एष नस्तव ॥ १९ ॥
( ४।२४।५८ रुद्रः )

परेभ्योऽपि सत्सङ्गप्रार्थनमुपदेष्टव्यमिति प्रचेतसः प्रति रुद्रोपदेशेनाह—अथेति । अथेत्युपदेशे । भवद्भिरेवं परमेश्वराच्च प्रार्थ्यमिति किं तद् अनघौ अघहरावङ्घ्री यस्य तव कीर्तिर्यशः तीर्थं गङ्गा तयोः क्रमेणान्तर्बहिः स्नानाभ्यां विधूताः पाप्मानो येषाम्. अत एव भूतेषु अनुक्रोशः कृपासु सत्त्वं च रागादिरहितं चित्तं शीलं चार्जवादि विद्यते येषां तेषां सङ्गमोऽस्माकं स्यात् । एष नस्त्वदनुग्रहः ॥ १६ ॥

भगवान् शंकर प्रचेताओं से कहते हैं—हे भगवन् ! आपके चरणारविन्द समस्त पापराशि को नाश कर देनेवाले हैं । आपका मेरे ऊपर यही अनुग्रह हो कि आपके यश के श्रवण से और गंगा जी में स्नान करने से जिन भक्तों के पाप धुल गये हों और जो प्राणियों पर दया करने वाले हों, ऐसे निर्मल अन्तःकरण वाले भक्तों से हमारा समागम हुआ करे ॥ १६ ॥

—×—

यत्रेड्यन्ते कथामृष्टास्तृष्णायाः प्रशमो यतः ।
निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ॥ २० ॥
यत्र नारायणः साक्षान्न्यासिनां परमा गतिः ।
प्रस्तूयते सत्कथासु मुक्तसङ्गैः पुनः पुनः ॥ २१ ॥
( ४०।३०।३५, ३६ प्रचेतसः )

तस्माद्युक्तमुक्तं सङ्गदोषहरः सत्सङ्गः प्रार्थनीय इति प्रचेतसां वाक्येन सप्रपञ्चमाह त्रिभिः । यत्र येषु, यतः=याभ्यः कथाभ्यः, निर्वैरं वैराभावः । स्वाभाविकमपि तृष्णाद्यसत्सङ्गाद्वर्द्धते सत्सङ्गादेव क्षीयते इति ॥ २० ॥

तथा यतैः साक्षात् प्रस्तूयते अत एव ताः सत्कथाः ॥ २१ ॥

प्रचेता भगवान् जनार्दन की स्तुति करते हैं—भगवद्भक्तों के समागम में परमानन्ददायक भगवत्कथाओं की चर्चा होती है, जिससे तृष्णा की निवृत्ति हो जाती है; प्राणिमात्र से भय का अभाव हुआ करता है तथा चित्त में किसी प्रकार का उद्वेग नहीं होता, और भक्त

समाज में मुक्तसंग लोग सन्यासियों के शरण साक्षात् नारायण की बारंबार स्तुति किया करते है ॥ २०-२१ ॥

—×—

तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया।
भीतस्य किन्न रोचेत तावकानां समागमः ॥ २२ ॥

(४।३०।३७ प्रचेतसः)

पद्भ्यां तीर्थानां पावनेच्छया सत्सङ्गात्तीर्थान्यपि शुध्यन्तीत्यर्थः। भीतस्य संसारात्, तस्मात् सङ्गं विना संसारनिस्तारो नेति भावः ॥ २२ ॥

आप के भक्त लोग तीर्थों को भी पवित्र करने की इच्छा से संसार मे चरणों से विचरा करते हैं। उनका समागम संसार से भयभीत पुरुषों को अच्छा क्यों न लगे ? ॥ २२ ॥

—×—

महत्सेवां द्वारमाहुर्विमुक्ते-
स्तमोद्वारं योषितां सङ्गिसङ्गम्।
महान्तस्ते समचित्ताः प्रशान्ता
विमन्यवः सुहृदः साधवो ये ॥ २३ ॥
ये वा मयीशे कृतसौहृदार्था
जनेषु देहम्भरवार्तिकेषु।
गृहेषु जायात्मजरातिमत्सु
न प्रीतियुक्ता यावदर्थाश्च लोके ॥ २४ ॥

(५।५।२३,२४ ऋषभः)

नन्वेवं सत्सङ्गः श्रेयानस्तु; असत्सङ्गेन किमपराद्धं येन स न प्रार्थ्य इत्यत्र सत्सङ्गस्य असत्सङ्गस्य च फलं दर्शयन् परिचयार्थं साधून् लक्षयति द्वाभ्यां महत्सेवां ये वा मयीशेत्याभ्याम्। तमसः संसारस्य द्वारं योषितां सङ्गिनः, तेषां सङ्गम्। महतां लक्षणमाह सार्द्धेन—महान्त इति साधवः सदाचाराः, मयीशे कृतं सौहार्दमेवार्थः पुरुषार्थो येषाम्। वा शब्देनान्यत्र निरपेक्षस्यैव अस्य लक्षणत्वं दर्शयति—देहं विभर्तीति। देहम्भरा विषयवार्तैव न स्वधर्मा विषया येषु जनेषु तेषु च गृहेषु रातिर्मित्रं धनं वा यावदर्थमेवार्थो येषामिति मध्यमपदलोपी समासः। देहनिर्वाहाधिक-स्पृहाशून्याः ॥ २३-२४ ॥

ऋषभदेवजी अपने पुत्रों से कहते है—विद्वानों ने महापुरुषों की सेवा को मुक्ति का द्वार तथा स्त्रीसंगी पुरुषों के संग को नरक का द्वार कहा है। महापुरुष वे हैं जो समदर्शी, शान्त, क्रोधशून्य, मैत्रीयुक्त और परहित साधक हों ॥ २३ ॥

जो मुझ परमेश्वर में सुहृद्भाव रखते हों, देह के भरण-पोषण मात्र में आसक्त स्त्री-पुत्र-धन से सम्पन्न घरों में जिनकी प्रीति न हो और शरीर निर्वाह के अतिरिक्त किसी वस्तु की जिनको चाह न हो, वे महापुरुष है ॥ २४ ॥

—×—

**गुरुर्न स स्यात्स्वजनो न स स्यात्**
**पिता न स स्याज्जननी न सा स्यात्।**
**दैवं न तत्स्यान्न पतिश्च स स्या-**
**न्न मोचयेद्यः समुपेतमृत्युम् ॥ २५ ॥**
**( ५।५।१८ ऋषभः )**

अत्र गृहादिषु अनुपकारकत्वमप्रीतिबीजमाह गुरुर्न स स्यादिति। समुपेतः सम्प्राप्तो मृत्युः संसारी येन तं ततो भक्तिमार्गोपदेशेन यो न मोचयेत् स गुर्वादिर्न भवतीत्यर्थः। यद्वा यस्त मोचयितुं न शक्नुयात् अतस्तस्य गुर्वादिर्न स्यात् इति निषेधः तेन गुरुणा न भाव्यमित्यादि ततश्च स पिता न स्यात् इति पुत्रोत्पत्तौ यत्नो न कार्य इत्यर्थः। दैवं देवता न स्यादिति तेन तस्य पूजा न ग्राह्येत्यर्थः। एवमन्यदपि द्रष्टव्यं भगवद्भक्त्यनुपयुक्तं गृहादि तु सुतरामनुपकारकमिति भावः ॥२५॥

जो संसारी जीवों को भक्तिमार्ग के उपदेश द्वारा संसार से मुक्त नहीं कर सकता है, वह गुरु कहलाने योग्य नहीं है। वह सज्जन नही, जो अपने बन्धुओं को संसार से मुक्त न कर सके, वे माता-पिता नहीं हैं, जो पुत्र को मुक्त नहीं कर सकते। वह देवता नहीं, जो अपने दास को मुक्त नहीं कर सके। वह पति नहीं है, जो अपनी स्त्री को संसार-सागर से पार न सके, अर्थात् भगवद्भक्ति में लगा देने वाला ही सच्चा आत्मीय है ॥ २५ ॥

**मागारदारात्मजवित्तबन्धुषु**
**सङ्गो यदि स्याद्भगवत्प्रियेषु नः।**
**यः प्राणवृत्त्या परितुष्ट आत्मवान्**
**सिद्धत्यदूरान्न तथेन्द्रियप्रियः ॥ २६ ॥**
**( ५।१८।१० प्रह्लादः )**

अत्रैवार्थे प्रह्लादवचनमाह—मागारेति। यदि भाग्ययोगाद्भगवत्प्रियेष्वेव सङ्गः स्यान्नान्यत्र, यतो भगवत्प्रियसङ्गी प्राणधारणमात्रेण परितुष्टो यथा दूरात् शीघ्रं सिध्यति न तथेन्द्रियप्रियो गृहाद्यासक्तः सन् सिद्धयत्येवेति भावः ॥ २६ ॥

प्रह्लादजी सत्संग की महिमा बताते है—स्त्री, पुत्र, धन, धाम और बन्धुजनों में मेरी आसक्ति न हो, यदि हो तो भगवद्भक्तों में हो, क्योंकि शरीरधारण योग्य आहार-मात्र से संतोष करनेवाला भगवद्भक्तसंगी पुरुष जैसे शीघ्र सिद्ध हो जाता है, वैसे इन्द्रियों को प्रसन्न करने वाला कदापि नही होता ॥ २६ ॥

—×—

अहो नृजन्माखिलजन्मशोभनं
किं जन्मभिस्त्वपरैरप्यमुष्मिन् ।
न यद्धृषीकेशयशःकृतात्मनां
महात्मनां वः प्रचुरः समागमः ॥ २७ ॥
( ५।१३।२१ रहूगणः )

नन्वसम्भावनादिकुतर्कशतसङ्कुले मनसि कथं सत्सङ्गः प्रभविष्यतीत्याशङ्क्य किं बहुना स्वल्पोऽपि सत्सङ्गः श्रेयानिति रहूगणवचनेनाह द्वाभ्याम्-अहो नृजन्मेति । अखिलजन्म शोभनं नृजन्मैव न परं श्रेष्ठं येभ्यो देवादिजन्मभ्यः तैरपि किम् ? अमुष्मिन् स्वर्गेऽपि जन्मभिः किम् ? न किञ्चित्; यतो येषु जन्मसु यत्र स्वर्गे वा महात्मनां समागमः प्रचुरो न भवति, हृषीकेशस्य यशसा कृतः शोधितो आत्मा यैस्तेषां व जडभरतादीनां युष्माकम् ॥ २७ ॥

राजा रहूगण जडभरत से कहते हैं—अहो मनुष्यजन्म दूसरे जन्मों से बड़ा ही अच्छा है, जिन जन्मों में भगवान् के यश से चित्त को शुद्ध करनेवाले आप जैसे महात्मा लोगों का समागम बारम्बार नही होता उन देवादि जन्मों से क्या लाभ है ? अर्थात् मनुष्य जन्म धन्य है ॥ २७ ॥

—×—

नैवाद्भुतं त्वच्चरणाब्जरेणुभि-
र्हतांहसो भक्तिरधोक्षजेऽमला ।
मौहूर्तिकाद्यस्य समागमान्मे
दुस्तर्कमूलोपगतोऽविवेकः ॥ २८ ॥
( ५।१३।२१-२२ रहूगणः )

सङ्गफलमाह—सततमुपासितैस्त्वत्पदरेणुभिर्हतमंहो यस्य; अधोक्षजे निर्मला भक्तिर्भवतीति नैवाद्भुतं यस्य तव मुहूर्तमात्रभवात् समागममात्रादपि दुस्तर्केण बद्धमूलोऽपि ममाविवेको नष्टः ॥ २८ ॥

आपके चरणारविन्द की रज का निरन्तर सेवन करने से जिसके पाप नष्ट हो गये हैं, उसको यदि भगवान् की निर्मल भक्ति प्राप्त हो जाय, तो इसमें कोई आश्चर्य की बात नहीं; क्योंकि आपके क्षणमात्र के समागम से मेरा अज्ञान दूर हो गया जिसकी जड़ कुतर्क पर जमी थी ॥ २८ ॥

—×—

नैषां मतिस्तावदुरुक्रमाङ्घ्रिं
स्पृशत्यनर्थापगमो यदर्थः ।
महीयसां पादरजोऽभिषेकं
निष्किञ्चनानां न वृणीत यावत् ॥ २९ ॥
( ७।५।३२ प्रह्लादः )

तस्मात् चरणरेणुप्रसादादेव भक्तिः, नान्यथेत्याह–नैषामिति। एषां भगवद्भक्तिमभीप्सिताम्, अनर्थापगमःदुःखनिवृत्तिः, यदर्थःयस्य भगवच्चरणस्पर्शस्य अर्थः, न वृणीत न आशास्ते ॥ २९ ॥

प्रह्लाद अपने पिता से कहते हैं—सब प्रकार के अहंकार से रहित महापुरुषों के चरणारविन्द की रज में जब तक स्नान न करे तब तक मनुष्य की बुद्धि भगवान् के चरणों में नहीं पहुँच सकती। भगवान् के चरणों में बुद्धि के पहुँचने से ही संसार रूप अनर्थ निवृत्त होता है ॥ २९ ॥

—×—

तस्मादमूस्तनुभृतामहमाशिषो ज्ञ
आयुः श्रियं विभवमैन्द्रियमाविरिञ्च्यात् ।
नेच्छामि ते विलुलितानुरुविक्रमेण
कालात्मनोपनय मां निजभृत्यपार्श्वम् ॥ ३० ॥
( ७।९।२४ प्रह्लादः )

एवं प्रकरणार्थं सविशेषं प्रह्लादवचनेनोपसंहरति द्वाभ्याम्—तस्मादिति। यस्मादेवं तस्माद् आशिषो भोगान् ज्ञः = तत्परिपाकं विद्वान् अहम्, ऐन्द्रियम् = इन्द्रियभोग्यं ब्रह्मणो भोगमभिव्याप्य किमपि नेच्छामि। ते कालात्मना उरुविक्रमेण विलुलितान् विध्वस्तान्, अणिमादीनपीत्यर्थः ॥३०॥

प्रह्लादजी ने स्तुति की है—अत एव अनित्य पदार्थों के परिणाम को जानने वाला मैं ब्रह्मा से लेकर सब जीवों के अभिलषित आयु, धन, सम्पदादि विषय सुखों की अभिलाषा नहीं करता; कालरूप प्रबल पराक्रम वाले आपसे विनष्ट होनेवाली अणिमादि सिद्धियों को भी नहीं चाहता। हे प्रभो ! मुझे तो आप अपने दास लोगों के पास पहुँचा दीजिये ॥३०॥

—×—

रहूगणैतत्तपसा न याति
न चेज्यया निर्वपणाद् गृहाद्वा ।
न च्छन्दसा नैव जलाग्निसूर्यै-
र्विना महत् पादरजोऽभिषेकम्[१] ॥

(५।१२।१२ जडभरतः)

तदेव जडभरतवाक्येनाह—रहूगणैतदिति । महत्सङ्गं विना अन्योपायैर्न समर्थः । अतो महत्सङ्गः परमः फलरूपः ॥

जडभरतजी राजा रहूगण से कहते हैं—हे रहूगण ! इस परब्रह्म की प्राप्ति महापुरुषों के चरणरज की सेवा किये विना, न केवल तप करने से होती है, न वेदोक्त कर्म करने से, न अन्नादि का दान करने से, न परोपकार से, न वेदाभ्यास से और न जल, अग्नि एवं सूर्य इनकी उपासना करने से ही होती है, अपितु ब्रह्म की प्राप्ति का उपाय केवल महापुरुषोंकी चरणधूलि की उपासना ही है ॥

एवं जनं निपतितं प्रभवाहिकूपे
कामाभिकाममनु यः प्रपतन् प्रसङ्गात् ।
कृत्वात्मसात् सुरर्षिणा भगवन् गृहीतः
सोऽहं कथं नु विसृजे तव भृत्यसेवाम् ॥ ३१ ॥

(७।९।२८ प्रह्लादः)

यथा त्वयाऽनुकम्पितोऽस्मि, एवं नारदेनात्मसात्कृत्वा पूर्वमनुगृहीतः । सोऽहं कथं नु त्वद्भक्तसेवां विसृजामि ? कथंभूतो गृहीतोऽस्मि । प्रभव एवाहियुक्तः कूपस्तस्मिन् कामानभितः कामयमानं जनं निपतितमनुप्रसङ्गात् प्रपतन् योऽहम् । तु देवं त्वद्भक्तस्य श्रीनारदस्यानुग्रहेण त्वयाऽत्यन्तमनुकम्पितोऽस्मि। अयमेव मे परमोऽनुग्रहः, न पुनरिदमतितुच्छं मत्प्राणरक्षादि ॥३१॥

---

१. श्लोकोऽयं न सर्वेषु पुस्तकेषु दृश्यतेऽतोऽत्र नाङ्कः कश्चन प्रदत्तः ।

हे भगवन् ! आपने जैसा मुझपर अनुग्रह किया और मुझको अपना लिया है वैसे ही पहले देवर्षि नारदजी ने मुझ कामी को अपना समझकर जन्ममरणरूप सर्पपूर्ण संसार-कूप में गिरने से बचा लिया। इस प्रकार आपके भक्तों द्वारा अनुगृहीत मैं आपके भक्तों की सेवा का त्याग कैसे कर सकता हूँ ? ॥ ३१ ॥

—×—

यत्सङ्गलब्धं निजवीर्यवैभवं
तीर्थं मुहुः संस्पृशतां हि मानसम्।
हरत्यजोऽन्तः श्रुतिभिर्गतोमलं
को वै न सेवेत मुकुन्दविक्रमम् ॥ ३२ ॥

(५।१८।११ प्रह्लादः)

तस्मात् फलितमाह—यत्सङ्गलब्धमिति। येषां भगवत्प्रियाणां सङ्गाल्लब्धं मुकुन्दस्य विक्रमम्, श्रुतिभिः श्रवणादिभिः, निजमसाधारणं वीर्यवैभवं प्रभावो यस्य; तीर्थं तु गङ्गादि मुहुः संस्पृशताम् अङ्गजं केवलं पापं हरति, तान् भागवतान् को वै न सेवेतेत्यन्वयः ॥ ३२ ॥

तीर्थों में बराबर स्नान करने से शरीर का ही मल दूर हो जाता है, उससे मन का मैल दूर नहीं होता; परन्तु भगवद्भक्तों के संग से भगवान् श्रीकृष्ण की कथाओं को कानों से सुनने वालों के हृदय में प्रवेश कर वे उनके मन के मैल को दूर कर देते हैं। फिर ऐसे भक्तों की सेवा कौन बुद्धिमान् न करेगा ? ॥ ३२ ॥

—×—

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज !
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ ३३ ॥

(९।४।६३ श्रीकृष्णः)

ननु किमन्तरा साधुसेवया, भगवानेव किमिति साक्षान्न सेव्यते ? स्वतन्त्रो हि स इति चेत्, न; तस्य भक्तपराधीनत्वाद् भक्तानुग्रहैकलभ्यत्वादित्यत्र श्रीवैकुण्ठनाथवचनमाह षड्भिः, अहमित्यादिभिः। हे द्विज दुर्वासः ! पराधीनः कायेन तदधीनक्रिय इति। वचसा अस्वतन्त्रः = तदधीनवरदानादिग्रस्तहृदयः, वशीकृतचित्तः। तदनुरुद्धसङ्कल्पादिभिः साधुभिर्भक्तैर्भक्तास्त एव साधव इत्यर्थः ॥ ३३ ॥

भगवान् महर्षि दुर्वासाजी से कह रहे हैं—हे ब्राह्मण ! मैं भक्तों के वश में रहने के कारण स्वाधीन होता हुआ भी स्वाधीन नहीं हूँ। मैं भक्त प्रेमी हूँ। इसलिए भक्तों ने मेरे मनपर कब्जा कर लिया है ।। ३३ ।।

—×—

नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना।
श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा ।। ३४ ।।
ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम्।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ।। ३५ ।।
( ९।४।६४-६५ श्रीकृष्णः )

अपने सज्जन भक्तों के विना मुझको आनन्द नहीं, लक्ष्मी से भी उतना आनन्द नहीं मिलता, जिनका अनुराग मेरे ऊपर सदा रहता है। भक्तजन मुझको अपनी परम गति मानते हैं ।। ३४ ।।

जो भक्त स्त्री, पुत्र, धन, धाम, बन्धु, इहलोक, परलोक और प्राण के भय को भी छोड़कर मेरे शरणागत हुए हैं, उन्हें मैं कैसे छोड़ सकता हूँ ? ।। ३५ ।।

—×—

मयि निर्बद्धहृदयाः साधवः समदर्शिनः।
वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ।। ३६ ।।
मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम्।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम् ।। ३७ ।।
साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्।
मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि ।। ३८ ।।
( ९।४।६६–६८ श्रीकृष्णः )

ननु स्वहितार्थं शरणमागतानां कथं त्वं वश्य इत्यत्र सदृष्टान्तमाह—मयीति। स्वार्थप्रवृत्ता अपि सत्स्त्रियः सत्पतिमिव। अन्यथा तस्यापि कुपतित्वप्रसङ्गादित्यर्थः ।। ३६ ।।

किञ्च, निष्कामा एव त इत्याह—मत्सेवयेति। प्रतीतं प्राप्तमपि अन्यत्स्वर्गादि ।। ३७ ।।

किं बहुना, साधवो हृदयमिति। मह्यं मम, तस्मात् साधूनामनुग्रहं विना भगवान् दुर्लभ इति समुदायार्थः ॥ ३८ ॥

जैसे पतिव्रता स्त्रियाँ अपने प्रेम और सेवा से अपने पति को वश में कर लेती हैं वैसे ही मुझमें आसक्त और समदर्शी मेरे भक्त अपनी प्रेमरूप भक्ति से मुझे अपने वश में कर लेते हैं ॥ ३६ ॥

मेरे भक्त मेरी सेवा से इतना तृप्त रहते हैं कि यदि सेवा के फलस्वरूप उन्हें चारों[1] प्रकार की मुक्तियाँ मिल जाँय तो भी वे उन्हें स्वीकार नहीं करते। अन्य नाशवान् स्वर्गादि वस्तुओं की तो बात ही क्या है? ॥ ३७ ॥

साधुजन मेरे हृदय हैं और मैं साधुओं का हृदय हूँ। वे मेरे अतिरिक्त और दूसरा कुछ नहीं जानते, और मैं भी उनके अतिरिक्त दूसरा नहीं जानता ॥ ३८ ॥

—×—

**भवद्विधा महाभागा निषेव्या अर्हसत्तमाः।**
**श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः ॥ ३९ ॥**

**( १०।४८।३० श्रीकृष्णः )**

ननु देवतान्तरमाराध्यैव भगवानेव प्राप्तव्यः, किं मनुष्यैरिति नेत्यत्राक्रूरं प्रति भगवद्वचनमाह—भवद्विधेति। श्रेयस्कामैर्मद्भक्तिकामैः स्वार्थाः स्वकार्यसाधनपरा देवाः, साधवस्तु केवलं परानुग्रहपराः। परमार्थतस्तु साधव एव सेव्याः, त एव देवा इति भावः ॥ ३६ ॥

भगवान् श्रीकृष्ण अक्रूरजी से कहते हैं—अपना कल्याण चाहनेवाले को चाहिए कि वे आप जैसे पुण्यतम सज्जन पुरुषों की सेवा करें, क्योंकि देवता लोग तो स्वार्थी होते हैं, पर साधुजन स्वार्थी नहीं होते ॥ ३९ ॥

—×—

१. मुक्ति चार प्रकार की मानी गई है—
[८] सालोक्य—भगवान् विष्णु के साथ उनके लोक में निवास करना।
[२] सामीप्य—सदा भगवान् के समीप उपस्थित रहना।
[३] सारूप्य—भगवान् का चतुर्भुजादि रूप प्राप्त करना।
[४] सायुज्य—भगवान् में मिल जाना। इसमें भक्त की पृथक् सत्ता नहीं रह जाती। उपासक और उपास्य दोनों एक हो जाते हैं। इस सायुज्य भक्ति को भी उच्चकोटि के वैष्णव भक्त नहीं चाहते। वे अपने इष्टदेव विष्णु से पृथक् रहकर सदा उनकी उपासना करना चाहते हैं। सेव्य-सेवक भाव का बना रहना ही उनका एकमात्र ध्येय है।

भवापवर्गो भ्रमतो यदा भवे-
ज्जनस्य तर्ह्यच्युत सत्समागमः ।
सत्सङ्गमो यर्हि तदैव सद्गतौ
परावरेशे त्वयि जायते मतिः ॥४०॥
(१०।५१।५३ मुचुकुन्दः)

नित्यं मद्भक्तौ प्राप्तायामपि देवताराधनापेक्षया सद्यः फलत्वाच्च सत्सङ्ग एव श्रेयानिति मुचुकुन्दवचनेनाह—भवापवर्ग इति। भो अच्युत! भ्रमतः संसरतो जनस्य त्वदनुग्रहेण यदा भवस्य बन्धस्य अपवर्गः = अन्तो भवेत्, प्राप्तकालीनः[1] स्यात्, तदा सतां सङ्गमो भवेत्, यदा च सत्सङ्गमो भवेत् तदैव, न तु विलम्बेन सर्वसङ्गनिवृत्त्या कार्यकारणनियन्तरि त्वयि भक्तिर्भवति, ततो मुमुक्षुर्मुच्यते। तस्मात् सत्सङ्गं विना न सद्यो भक्तिरिति तात्पर्यार्थः ॥ ४० ॥

राजा मुचुकुन्द श्रीकृष्ण भगवान् से कहते हैं—इस संसारमें घूमते-घूमते जब आपकी कृपा से मनुष्यों के बन्धन का अन्त हो जाता है तभी उन्हें सज्जनोंकी संगति मिलती है और जब सत्संग हो जाता है तभी आप में भक्ति होती है। आप छोटे-बड़ों के प्रभु हैं और सन्तों की गति हैं ॥ ४० ॥

—×—

नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ४१ ॥
(१०।४८।३१; १०।८४।११ श्रीकृष्णः)

एतदेव सद्यः फलत्वं स्पष्टयति—नह्यम्मयानीति। अम्मयानि तीर्थानि किं नहि, अपि तु भवन्त्येव, तथा देवा अपि, किन्तु विलम्बशीघ्रत्वे विशेष इत्यर्थः। पुनन्तीति। तथा च क्षीणपापस्य कृष्णभक्तिः सुलभैव ॥ ४१ ॥

भगवान् ऋषियों से कहते है—जलमय तीर्थ तथा मिट्टी एवं पत्थर से निर्मित देवताओं की अधिक दिनों तक सेवा करने से पुरुष पवित्र होता है, किन्तु साधु लोगों के दर्शनमात्र से ही मनुष्य पवित्र हो जाता है। अथवा क्या जलमय नद्यादि तीर्थ नही हैं? (अर्थात् हैं ही), क्या मिट्टी और पाषाण की मूर्तियाँ देवता नहीं है? (हाँ हैं), पर वे विलम्ब से पवित्र करते

१. प्राप्तकालः स्यादिति पाठान्तरम्।

हैं; साधु तो दर्शनमात्र से ही पवित्र कर देते हैं। अर्थात् जहाँ जलमय तीर्थ एवं पत्थर की देवप्रतिमाएँ देर से फल देती है वहाँ सज्जन दर्शनमात्र से फल दे देते हैं ॥ ४१ ॥[१]

—×—

अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम्।
देवानामपि दुष्प्रापं यद्योगेश्वरदर्शनम् ॥ ४२ ॥
किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम्।
दर्शन - स्पर्शन - प्रश्न-प्रह्व-पादार्चनादिकम् ॥ ४३ ॥
(१०।८४।९,१० श्रीकृष्णः)

किञ्च, अलं देवसत्सङ्गयोः कथमपि साम्यशङ्कयापि, यतो देवानामपि दुर्लभः सत्सङ्ग इति श्रीकृष्णवचनेनाह द्वाभ्याम्—अहो वयमिति। जन्मभृतः सफलजन्मानस्तत्फलं जन्मफलं किं तद् यद्योगेश्वराणां सतां युष्माकं दर्शनादिकम्, यतो युष्माकं दर्शनमेव तावद् देवानामपि दुष्प्रापम्, अस्माकं तु स्वल्पतपसां तीर्थस्नानादिमात्रेण तपो बुद्धिमतां तथा अर्चायां प्रतिमायां देवचक्षुषां तेषां योगेश्वरदर्शनादिकमपि घटितमित्यहोभाग्यम् ॥ ४२-४३ ॥

आज हमारा जन्म सफल हो गया और हमको जन्म लेने का सम्पूर्ण फल मिल गया, क्योंकि देवताओं को भी दुर्लभ आप जैसे योगेश्वरों के दर्शन हमें मिल गये। यह हमारा अहोभाग्य है ॥ ४२ ॥

अल्प तप करनेवाले लोगों के सौभाग्य में योगेश्वरों का दर्शन, स्पर्शन, प्रश्न, प्रणाम और पादार्चना कहाँ ? वे तो प्रतिमा को ही देवता मानकर पूजते रहते हैं। उन्हें योगेश्वरों का दर्शन सम्भव नहीं ॥ ४३ ॥

—×—

नाग्निर्न सूर्यो न च चन्द्रतारका
न भूर्जलं खं श्वसनोऽथ वाङ्मनः।
उपासिता भेदकृतो हरन्त्यघं
विपश्चितो घ्नन्ति मुहूर्तसेवया ॥४४॥

---

१. यह श्लोक सन्तों की प्रशंसा के लिए है, न कि तीर्थों की निन्दा के लिए। यह शास्त्रीय सिद्धान्त है कि जब एक की स्तुति से दूसरों की उपेक्षा की जाती है तब यह नहीं समझना चाहिए कि दूसरे की निन्दा की गई है, किन्तु वहाँ पहले की प्रशंसा का ही उद्देश्य रहता है।

ननु पापं भक्तिप्रतिबन्धकम्, पापनाशकाश्चाग्न्यादयो देवाः प्रसिद्धा इति तत्राह—नाग्निरिति। वाङ्मनसयोरुपासनादिविषयत्वं ब्रह्मत्वेन[1] श्रौतम्। अघं भक्तिप्रतिबन्धकं सर्वं वा पापम्। अत्र हेतुर्भेदकृतः स्वार्थपरत्वात् कालभेदकर्तारः स्वपदभेददर्शिनो वा विपश्चितस्तत्सर्वमात्मीयत्वेन पश्यन्तो निरस्तभेदा मुहूर्तमात्रसेवयैव पापं घ्नन्तीति। अतोऽपि त एव श्रेष्ठाः॥ ४४॥

अग्नि, सूर्य, चन्द्रमा, तारा, पृथ्वी, जल, आकाश, वायु वाणी और मन ये सभी भेदबुद्धिवाले पुरुषों के अज्ञान का नाश नहीं कर सकते, किन्तु तत्त्वज्ञानी विद्वान् क्षणभर की सेवा से ही अज्ञान को दूर कर देते हैं॥ ४४॥

यस्यात्मबुद्धिः कुणपे त्रिधातुके
स्वधीः कलत्रादिषु भौम इज्यधीः।
यत्तीर्थबुद्धिश्च जले न कर्हिचिद्
जनेष्वभिज्ञेषु स एव गोखरः॥ ४५॥
(१०।८४।१२-१३ श्रीकृष्णः)

किञ्च, तान् विहाय अन्यत्र आत्मादिबुद्ध्या सज्जमानोऽतिमन्द इत्याह—यस्यात्मबुद्धिरिति। आत्मबुद्धिरहमितिबुद्धिः, त्रयो धातवः वातपित्तश्लेष्माणः प्रकृतयो यस्य तस्मिन् कुणपे शरीरे स्वधीः स्वीय इति बुद्धिः, भौमे भूविकारे इज्यधीः देवताबुद्धिः। जले यस्य तीर्थबुद्धिः, अभिज्ञेषु महत्सु तत्त्ववित्सु यस्य ता बुद्धयो न सन्ति, स एव गोष्वपि खरः दारुणः, अत्यविवेकी, गवां तृणाधिभारवाहः खरो गर्दभ इति वा॥ ४५॥

जो लोग वात-पित्त-कफमय शरीर को ही आत्मा मानते हैं; स्त्री-पुत्रादि को ही आत्मीय समझते हैं; मिट्टी की मूर्ति को ही देवता मानकर पूजते हैं; जल को ही तीर्थ मानते हैं और तत्त्वज्ञानी पुरुषों को अपना आत्मा, आत्मीय, पूज्य एवं तीर्थ नहीं मानते हैं, वे लोग गौ से भी बढ़कर अविवेकी हैं, या गौओं के लिए घास ढोनेवाले गदहे हैं॥ ४५॥

—×—

साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः।
हरन्त्यघं तेऽङ्गसङ्गात् तेष्वास्ते ह्यघभिद्धरिः॥ ४६॥
(९।९।६ भगीरथः)

---

[1] यो वाचं ब्रह्मेत्युपास्ते (छा० ७।२।२); यो मनो ब्रह्मेत्युपास्ते (छा० ७।३।२) इति क्वचन अधिकः पाठः।

ननु सतां पापनाशकत्वे किं सामर्थ्यं तत्र गङ्गां प्रति भगीरथवचनेनाह—साधव इति। ते तव अघं हरन्ति, ते स्वाङ्गसङ्गाद् हरिष्यन्तीत्यर्थः। हि यतः, सत्सङ्गिनामपि अघभिद् हरिः, तेषु भक्त्या शुद्धान्तःकरणेषु प्रकट आस्ते ॥ ४६ ॥

राजा भगीरथ ने गंगाजी से कहा—हे देवि ! जिन्होंने आसक्ति का त्याग कर दिया है और जो शान्त तथा ब्रह्मवेत्ता हैं—ऐसे साधु लोग सारे संसार को पवित्र करते हैं। वे आपके जल में स्नान करके आपके देहस्पर्श से पाप का नाश कर देते हैं, क्योंकि उनके हृदय में पाप के नाश करने वाले श्रीहरि विराजते हैं ॥ ४६ ॥

—×—

भूतानां देवचरितं दुःखाय च सुखाय च।
सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ४७ ॥
( ११।२।५ वासुदेवः )

किञ्च, देवा दुःखहेतवोऽपि, साधवस्तु केवलं सुखहेतवः, अतो दुर्लभस्तत्सङ्ग इति नारदं प्रति वसुदेववचनेनाह—भूतानामिति। भूतानां प्राणिनां देवानां चरितं प्रवृत्तिः, त्वादृशां नारदादीनाम् ॥४७॥

वसुदेवजी देवर्षि नारदजी से कहते हैं—देवताओं का व्यवहार एवं आचरण प्राणियों को कभी सुख देता है तो कभी दुःख भी देता है, किन्तु आप जैसे भगवद्भक्त महात्माओं का आचरण तो निश्चयपूर्वक सुख ही देता है ॥ ४७ ॥

—×—

भजन्ति ये यथा देवान् देवा अपि तथैव तान्।
छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ ४८ ॥
( ११।२।५-६ वसुदेवः )

अत्र हेतुः—किञ्च, सुखं कुर्वन्तोऽपि देवा भजनानुसारेण कुर्वन्ति, न तथा साधव इत्याह—भजन्तीति। देवा अपि तथैव भजन्ति फलं प्रयच्छन्तीत्यर्थः। अनुकरणे दृष्टान्तः—छायेव। यतस्ते कर्मसचिवाः = तत्तत्कर्म्मानुरोधिनः, साधवस्तु दीनमात्रे वत्सलाः, दुःखं परिजिहीर्षवः ॥ ४८ ॥

जो मनुष्य देवताओं की जैसी सेवा करते हैं वैसे ही वे छाया के समान उनका अनुसरण करते हैं। जैसे छाया घटती बढ़ती रहती है वैसे ही देवताओं का अनुग्रह और निग्रह भी पूजकों के अनुसार घटता-बढ़ता रहता है, किन्तु आप जैसे साधुलोग दीन-दुःखी लोगों पर दया करते ही हैं चाहे वे आप की सेवा करें या न करें ॥ ४८ ॥

—×—

दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ ४९ ॥
( ११।२।२९ विदेहः )

तस्माज्जनकवचनेनोपसंहरति[1]—दुर्लभ इति। बहवो देहा भवन्ति येषां ते देहिनो जीवाः, तेषां क्षणभङ्गुरोऽपि मानुषो देहो दुर्ल्लभः, परमपुरुषार्थसाधनत्वात्। वैकुण्ठः प्रियो येषाम्, वैकुण्ठस्य वा प्रिया ये, तेषां दर्शनम्, तथा च यो मानुष्यं प्राप्य साधूपासनया भगवद्भक्तिं न साधयति स दुर्मतिरिति भावः ॥ ४६ ॥

विदेह कवि आदि योगीश्वरों से कहते हैं—पहले तो प्राणियों को क्षणभंगुर मानव देह बड़ा दुर्लभ है। मनुष्य जन्म में भी भगवद्भक्तों का दर्शन मिलना अति दुर्लभ है ॥ ४९ ॥

—x—

न रोधयति मां योगो न साङ्ख्यं धर्म एव च।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥ ५० ॥
व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः।
यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥ ५१ ॥
( ११।१२।१-२ श्रीकृष्णः )

अपि चाधिकारिनियमाभावात् सर्वसाधनेभ्यः श्रेयान् सत्सङ्ग इति सदृष्टान्तमुद्धवं प्रति भगवद्वचनेनाह सप्तभिः—न रोधयतीत्यादिभिः। न रोधयति न वशीकरोति। योग आसनादिः, साङ्ख्यं तत्त्वानां विवेकः, धर्मः सामान्यतोऽहिंसादिः, स्वाध्यायो वेदजपः, तपः कृच्छ्रादि, त्यागः सन्यासः, इष्टापूर्तम्, इष्टं च पूर्तं च तत्रेष्टम् अग्निहोत्रादि, पूर्तं कूपारामादिनिर्माणम्, दक्षिणाशब्देन च सामान्यतो दानं लक्ष्यते ॥ ५०-५१ ॥

भगवान् श्रीकृष्ण उद्धव से कहते हैं—सभी आसक्तियों का नाश करने वाला सत्संग जैसे मुझे वश में कर लेता है वैसे योगसाधन, सांख्यज्ञान, धर्माचरण, वेदाध्ययन, तपश्चर्या, त्याग, यज्ञ, तालाब, बावली, कुँआ आदि खुदवाना, सत्कर्म धर्मशाला आदि का निर्माण, बगीचा आदि का लगवाना, व्रत, उपवास, देवपूजा, मन्त्रजप, तीर्थयात्रा, यम और नियम ये सब मुझे वश में नहीं कर सकते हैं ॥५०-५१॥

—x—

१. तस्माद्देवभजनापेक्षया निरुपाधिककारुणिकत्वेनोपादेयत्वे साधुभजनं श्रेय इति जनकवचनेनोपसंहरतीति पाठान्तरम्।

सत्सङ्गेन हि दैतेया यातुधानाः खगा मृगाः ।
गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ ५२ ॥
विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ।
रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ ॥ ५३ ॥
बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः ।
वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ ५४ ॥
सुग्रीवो हनुमान् ऋक्षो गजो गृध्रो वणिक्पथः ।
व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे ॥ ५५ ॥
ते नाधीतश्रुतिगणा नोपासितमहत्तमाः ।
अव्रता तप्ततपसः सत्सङ्गाद् मामुपागताः ॥ ५६ ॥
( ११।१२।३-७ श्रीकृष्णः )

किञ्च, भगवतो वशीकरणे सत्सङ्ग एव श्रेष्ठ इत्याह—व्रतानीति । व्रतानि एकादश्यादीनि, यज्ञो देवपूजा, छन्दांसि रहस्यमन्त्राः, अवरुन्धे वशीकरोति ॥ ५२ ॥

तदेवाह—सत्सङ्गेति । यातुधाना राक्षसाः ॥ ५३ ॥

त्वाष्ट्रो वृत्रः, कायाधवः कयाधुपुत्रः प्रह्लादः ॥ ५४ ॥

ऋक्षो जाम्बवान्, गृध्रो जटायुः, वणिक्पथस्तुलाधरः, व्याधो धर्मव्याधः, यज्ञपत्न्यो दीक्षितभार्याः ॥ ५५ ॥

तेषां साधनान्तराभावमाह—तेनाधीतश्रुतिगणा इति । अनधीतः श्रुतिगणो यैस्तदर्थं न उपासिता महत्तमा अध्यापका यैस्ते तथा । किञ्च, अव्रता तप्ततपसो न व्रतानि येषाम्, न तप्तानि तपांसि यैस्ते च ते तथा । सत्सङ्गादिति । सद्भिः सङ्गो नाम ममैव इति सत्सङ्गादित्युक्तम्, सत्सङ्गस्तु तत्र तत्रान्तर्दृष्ट्यानुसन्धेयः ॥ ५६ ॥

हे निष्पाप उद्धव जी ! प्रत्येक युग में सत्संग के प्रभाव से रजोगुणी तथा तमोगुणी दैत्य, राक्षस, पशु, पक्षी, गन्धर्व, अप्सरा, नाग, सिद्ध चारण, यक्ष, विद्याधर, मनुष्यों में वैश्य, शूद्र, स्त्री, अन्त्यज, वृत्रासुर, प्रह्लाद, वृषपर्वा, बलि, बाणासुर, मयदानव, विभीषण, सुग्रीव, हनुमान्, जाम्बवान्, गजेन्द्र जटायु, तुलाधार वैश्य, धर्मव्याध, कुब्जा, व्रज की गोपियाँ, यज्ञ करने वाले ब्राह्मणों की स्त्रियाँ और दूसरे भी बहुत से लोग मेरे पद को प्राप्त हो गये, जिन्होंने न तो वेदाध्ययन किया था, न विद्वानों से विद्या ही पढ़ी थी, न व्रत उपवास ही किया, न तप ही कर पाये थे, तो भी ये सबकेसब सत्संग के प्रभाव से मेरे पास पहुँच गये ॥ ५२-५६॥

—×—

ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान।
सन्त एवास्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः ॥ ५७ ॥
( ११।२६।२६ श्रीकृष्णः )

एवं सत्सङ्गमभिष्टूय प्रसङ्गादसत्सङ्गं निन्दन्नुपसंहरति चतुर्भिः—तत इत्यादिभिः । मनोव्यासङ्गम्, भक्तिप्रतिबन्धिकां वासनाम्, उक्तिभिः = भक्तिमहिमप्रतिपादकैर्वचनैः ॥ ५७ ॥

इसलिए बुद्धिमान् मनुष्य को चाहिए कि बुरे संग का त्याग कर सज्जनों की संगति करे, क्योंकि सज्जन लोग अपने उपदेशरूप वचनों से मनुष्यों के मन में स्थित आसक्ति ( मोह ) का विनाश कर देते है ॥ ५७ ॥

—×—

यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः।
आस्थितो रमते जन्तुस्तमो विशति पूर्ववत् ॥ ५८ ॥
सत्यं शौचं दया मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा।
शमो दमो भगश्चेति यत्सङ्गाद्याति संक्षयम् ॥ ५९ ॥
तेष्वशान्तेषु मूढेषु योषित्क्रीडामृगेषु च।
सङ्गं न कुर्याच्छोच्येषु खण्डितात्मस्वसाधुषु ॥ ६० ॥
( ३।३१।३२–३४ )

असद्भिः सह तेषां पथि आस्थितो विषयेषु रमते, तमो विशति संसारम्। सत्यादियुक्तोऽपि नासत्सङ्गं कुर्यात् ॥ ५८ ॥

यतः, सत्यमिति । भगो भाग्यम् । येषामसतां सङ्गात् ॥ ५९ ॥

अशान्तेषु क्रोधादिवशेषु, योषित्क्रीडामृगेषु, शोच्येषु पापबुद्धिषु, खण्डितात्मसु देहाभिमानिषु सर्वं चैतत् प्रत्येकमसाधुलक्षणं तारतम्येन ज्ञेयम् ॥ ६० ॥

भगवान् कपिल देवहूति से कहते हैं—यदि कोई जीव वहाँ रमण एवं भोजन के लिये उपाय करने वाले असत्पुरुषों का संगी बनकर उन्हीं के मार्ग में चलता है तो उसके प्रभाव से वह पूर्ववत् नरक में पड़ता है ॥ ५८ ॥

जिनके संग से सत्य, शौच, दया, मौन, बुद्धि, लक्ष्मी, लज्जा, यश, क्षमा, शम, दम और सौभाग्य का नाश होता है ऐसे अशान्त, विवेकहीन, देह में आत्मबुद्धि रखनेवाले और

खिलौने के समान स्त्रियों के अधीन रहने वाले दुराचारी पुरुषों का संग नहीं करना चाहिए ॥ ५९–६० ॥

—×—

यथोपश्रयमाणस्य भगवन्तं विभावसुम् ।
शीताद्भयं[1] तमोऽप्येति साधून् संसेवतस्तथा ॥ ६१ ॥
( ११।२६।३१ )

एवं प्रसङ्गादसत्सङ्गं निन्दित्वा सतामुपदेशापेक्षापि तथा नास्ति, केवलं तत्सन्निधिरेव तारयतीत्याह—यथेति । विभावसुमग्निं सेवमानस्य अप्येति नश्यति, तथा कर्मादिजाड्यम् आगामिसंसारभयं तन्मूलमज्ञानं च भक्तिं प्राप्य नश्यतीत्यर्थः ॥ ६१ ॥

भगवान् श्रीकृष्ण उद्धवजी से कहते हैं—जैसे अग्नि के सेवन करने से शीत का भय और अन्धकार दूर हो जाता है वैसे ही साधुओं की सेवा करनेवालों को संसार का भय और उसके मूल कारण अज्ञान का नाश हो जाता है ॥ ६१ ॥

—×—

निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनम् ।
सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ ६२ ॥
( ११।२६।३२ )

किं बहुना, निमज्जोन्मज्जने सन्त एव दृढा नौरित्यत आह—निमज्जोन्मज्जतामिति । निमज्जोन्मज्जताम् उच्चावचयोनीर्गच्छतां परमायनम्, परमाश्रयम् ॥ ६२ ॥

जैसे पानी में डूबते हुए के लिए मजबूत नौका सहारा है वैसे ही ब्रह्मज्ञ धीर साधु लोग इस घोर संसार-सागर में डूबते हुए लोगों के लिए परम आश्रय ( सहारा ) होते हैं ॥ ६२ ॥

—×—

अन्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहम् ।
धर्मो वित्तं नृणां प्रेत्य सन्तोऽर्वाग्बिभ्यतोऽरणम् ॥ ६३ ॥
( ११।२६।३३ )

---

१. शीतं भयमिति पाठान्तरम् ।

एवमुक्तं प्रकरणार्थं भगवद्वचनेनोपसंहरति द्वाभ्याम्—अन्नमिति। यथा अन्नमेव प्राणो जीवनम्, अहमेव यथा शरणम्। धर्म एव यथा प्रेत्य परलोके वित्तं तथा सन्त एव अर्वाक् संसारे पतनाद्बिभ्यतः पुंसोऽरणं शरणम् ॥ ६३ ॥

जैसे अन्न ही जीवों का प्राण है वैसे मैं ही दीनों का शरण हूँ। जैसे मरने के बाद धर्म ही धन है वैसे ही संसार-सागर में डूबते हुए लोगों के लिए साधु शरण है ॥ ६३ ॥

—×—

सन्तो दिशन्ति चक्षूंपि वहिरर्कः समुत्थितः।
देवता वान्धवाः सन्तः सन्त आत्माहमेव च ॥ ६४ ॥
(११।२६।३४)

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलितविवेक-
तैरभुक्तपरमहंसविष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्ध-
श्रीभगवद्भक्तिरत्नावल्यां द्वितीयं विरचनम् ॥

किञ्च, सन्त इति। चक्षूंषि दुर्लभानि स्थूलसूक्ष्मभद्भक्तिकर्तव्यताज्ञानानि दिशन्ति उपदिशन्ति, मत्तोऽर्कः पुनः सम्यगुत्थितोऽपि बहिः स्थूलघटादिज्ञानं जनयतीत्यर्थः। तस्मात् तत्सेवैव भगवद्भक्तिप्राप्तौ मूलं कारणमिति ॥ ६४ ॥

॥ इति भक्तिरत्नावल्याः टीकायां कान्तिमालायां द्वितीयं विरचनम् ॥

सूर्य अच्छी तरह से उदय होने पर भी केवल बाहरी दृष्टि देते हैं, किन्तु सज्जन लोग ज्ञानरूप आन्तरिक दृष्टि देते हैं। अतः साधु लोग ही पुरुष के लिए देवता, वान्धव आत्मा और परमात्मा हैं ॥ ६४ ॥

—×—



# अथ तृतीयं विरचनम्

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ १ ॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २ ॥

( ७।५।२३–२४ प्रह्लादः )

अथ भक्तेर्विशेषान् वक्तुं तृतीयं विरचनमारभते । तत्र नवविधानां भक्तीनां प्राधान्यमभिप्रेत्य ता एव दर्शयितुं प्रथमं प्रह्लादवचनमाह द्वाभ्याम्—श्रवणमिति । श्रवणं तन्नामादिशब्दानां परोक्तानां वा श्रोत्रेण ग्रहणम्; कीर्तनं तेषां स्वयमुच्चारणम्; स्मरणं तन्नामरूपादीनां मनसा चिन्तनम्; पादसेवनं परिचर्या प्रतिमादौ साधारणम्; अर्चनं पूजा जलादिषु; वन्दनं दण्डवत्प्रणामादि सर्वाङ्गैरभिवादनं वा; दास्यं कर्मार्पणम्; सख्यं तद्विश्वासादि; आत्मनिवेदनं देहसमर्पणम्, यथा विक्रीतस्य गवाश्वादेर्भरणपालनादिचिन्ता न क्रियते तथा देहं तस्मै समर्प्य तच्चिन्तावर्जनमिति ॥ १ ॥

इति नवलक्षणानि यस्याः सा । अद्धा साक्षात्तेन चेद् भगवद्भक्तिः क्रियते सा[1] चार्पिता सती, न तु कृता पश्चादर्पिते तदुत्तममधीतं मन्ये, न त्वस्माद् गुरोरधीतं शिक्षितं वा तथाविधं किञ्चिदस्तीति भावः ॥ २ ॥

प्रह्लाद जी अपने पिता हिरण्यकशिपु से भक्ति की विशेषता बतला रहे हैं—भगवान् विष्णु के यश का श्रवण, कीर्तन, स्मरण, चरणसेवा, पूजन, बन्दन, दास्य, सख्य और आत्मसमर्पण, यह नव प्रकार की भक्ति यदि विष्णु में समर्पणपूर्वक की जाय तो मैं उसी को उत्तम अध्ययन समता हूँ ॥ १–२ ॥

—×—

स वै मनः कृष्णपदारविन्दयो-
र्वचांसि वैकुण्ठगुणानुवर्णने ।

---

१. अधीतेन चेद्भगवति भक्तिः क्रियते सा चार्पितैव सती यदि क्रियेत, न तु कृता सती पश्चादर्पेत इति पाठान्तरम् ।

करौ हरेर्मन्दिरमार्जनादिषु
श्रुतिं चकाराच्युतसत्कथोदये ॥ ३ ॥
मुकुन्दलिङ्गालयदर्शने दृशौ
तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ।
घ्राणं च तत्पादसरोजसौरभे
श्रीमत्तुलस्या रसनां तदर्पिते ॥ ४ ॥
पादौ हरेः क्षेत्रपदानुसर्पणे
शिरो हृषीकेशपदाभिवन्दने ।
कामं च दास्ये न तु कामकाम्यया
यथोत्तमश्लोकजनाश्रया रतिः ॥ ५ ॥
( ९।४।१८।२० शुकः )

अत्र शिष्टाचारोऽप्येवमिति शुकवचनेनाह त्रिभिः— स वै मन इत्यादिभिः । श्रुतिः श्रोत्रम्, अच्युतस्य सत्कथानामुदये श्रवणे चकारेति सर्वत्रान्वयः ॥ ३ ॥

तथा, मुकुन्देति। मुकुन्दस्य लिङ्गानामालयानि स्थानानि तेषां दर्शनम् । दृशौ नेत्रे श्रीमत्तुलस्यास्तत्पादरसाङ्गनेन[1] यत्सौरभं तस्मिन् । तदर्पिते तस्मै निवेदितान्नादौ ॥ ४ ॥

किञ्च, पादौ हरेरिति । कामं स्रक्चन्दनादिसेवां च दास्ये निमित्ते तत्प्रसादस्वीकाराय, न तु काम्यया विषयेच्छया । कथं चकार उत्तमश्लोकजनाश्रया मतिर्यथा भवेत् तथा । अनेन तद्भक्तेषु परमभावं प्राप्त इति स्फुटीकृतम् ।

अत्र मन्दिरमार्जनादिकं तस्योपेक्षानर्हत्वं प्रसङ्गादुक्तम् ॥ ५ ॥

श्री शुकदेव जी राजा अम्बरीष के गुण का वर्णन कर रहे है—राजा अम्बरीष ने निश्चयपूर्वक मन सदा भगवान् श्रीकृष्ण के चरणों में लगा रखा था। वाणी भगवान् के गुण-कथन में लगाई थी। हाथ भगवान् के मन्दिर में झाड़ू लगाने में, कान भगवान् की उत्तम कथा सुनने में, दोनों आँखे भगवान् की मूर्ति एवं मन्दिर के दर्शन मे, त्वचा भगवद्भक्तों के शरीर का स्पर्श करने में, नाक भगवान् के चरणकमल के सुगन्ध सूंघने में, जिह्वा भगवान् के प्रसाद की तुलसी के स्वाद में, अपने दोनों पैरों को भगवान् के क्षेत्र एवं मन्दिरों की यात्रा मे

---

१. तत्पादसरोजेनेति पाठान्तरम् ।

और शिर भगवान् के पादारविन्द के अभिवादन करने में लगा रखा था। चन्दन, पुष्प, माला आदि का धारण दास्यभाव से किया था, न कि भोगेच्छा से। वे ये सब काम ऐसे भाव से करते थे कि भगवद्भक्तों के समान उनकी भक्ति निष्काम हो ॥ ३—५ ॥

—×—

श्रवणं कीर्तनं चास्य स्मरणं महतां यतेः[1]।
सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ॥ ६ ॥
(७।११।११ नारदः)

श्रवणादिकमेव प्राधान्येन विवक्षितमित्यभिप्रेत्याह—श्रवणमिति। इज्या पूजा। एतत्सर्वं कर्तव्यमिति शेषः ॥ ६ ॥

नारदजी युधिष्ठिर से कह रहे है—महात्माओं की गति नारायण के गुणों का श्रवण, कीर्तन, स्मरण, सेवा ( पाद-संवाहन ), इज्या ( पूजा ), अवनति ( नमस्कार ), दास्यभाव, सखाभाव और आत्मसमर्पण यही मनुष्यों का परम धर्म है ॥ ६ ॥

—×—

श्रुतः संकीर्तितो ध्यातः पूजितश्चाहृतोऽपि वा।
नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥ ७ ॥
( १२।३।४६ शुकः )

एषां फलमाह—श्रुत इति। अयुतपदमुपलक्षणं द्रष्टव्यम्। वा शब्दात् श्रवणादीनां प्रत्येक पापनाशे सामर्थ्यं दर्शितम् ॥ ७ ॥

शुकदेव जी राजा परीक्षित् से कहते हैं—जो मनुष्य भगवान् के गुणो का श्रवण करते है, कीर्तन करते हैं, ध्यान करते है, पूजा करते है और सम्मान करते है, उनके हृदय मे जाकर भगवान् दश हजार जन्मो की पापराशि का नाश कर देते है ॥ ७ ॥

—×—

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः।
त एव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजम् ॥ ८ ॥
( १।८।३६ कुन्ती )

---

१. गतेः।

एवं पापे नष्टे यद्भवति तदाह—शृण्वन्तीति । ईहितं लीलां नन्दन्ति, अन्यैः कीर्त्यमान-मभिनन्दन्ति । ये जनास्तावकं त्वदीयं पदाम्बुजम्, त एव पश्यन्त्येव अचिरेणैवेति च सर्वत्राव-धारणम् । कीदृशम् ? भवप्रवाहस्य उपरमो यस्मात् तत् ॥ ८ ॥

कुन्ती भगवान् श्रीकृष्ण की स्तुति कर रही हैं—जो आपकी लीला को निरन्तर सुनते हैं, स्मरण करते है, गान करते है, कीर्तन करते हैं और दूसरे किसी के वर्णन करने पर एवं गान करने पर प्रशंसा करते है, वे शीघ्र ही संसार के आवागमन-प्रवाह को नष्टकर देनेवाले आपके चरणकमल का दर्शन पा जाते हैं ॥ ८ ॥

—×—

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ।
मनः स्मरेताऽसुपतेर्गुणानां[1] गृणीत वाक् कर्म करोतु कायः ॥ ९ ॥
( ६।११।२४ वृत्रः )

किञ्च, श्रवणपराणां संसारोऽपि न दुःखायेति वृत्रवाक्येनाह—अहमिति । तव पादावेवैकं मूलम् आश्रयो येषां दासानाम् अनुदासो दासदासः, भूयः पुनः पुनर्भवितास्मि भविष्यामि भवेय-मिति प्रार्थना । असुपतेः प्राणनाथस्य तव गुणानां गुणान् मम मनः स्मरतु वागपि तानेव कीर्तयतु, कायस्तवैव कर्म करोतु ॥ ९ ॥

वृत्रासुर भगवान् से अपना अभिप्राय व्यक्त कर रहा है—हे नारायण ! मैं आपके चरणकमल के सेवकों का दास बारम्बार होऊँ । आप प्राणनाथ हैं, मेरा मन आपके गुणों का स्मरण किया करे, मेरी वाणी आपका ही कीर्तन करती रहे और मेरा शरीर आपकी ही सेवा किया करे ॥ ९ ॥

—×—

अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः ।
कुतः पुनस्तच्चरणारविन्दपरागसेवारतिरात्मलब्धा ॥ १० ॥
( ३।७।१४ मैत्रेयः )

---

१. गुणांस्ते इति पाठान्तरम् ।

ननु सांसारिकं दुःखं तस्यापि सम्भाव्यत एव नेति कैमुतिकन्यायेनाह—अशेषेति । अशेषाणाम् ऐहिकामुष्मिकाणां क्लेशानां शमं नाशम् । आत्मनि लब्धा मनसि उत्पन्ना तत्सेवा रतिः क्लेशं हरतीति किं वक्तव्यम् ॥ १० ॥

मैत्रेयजी विदुर से भगवान् के गुणानुवाद की महिमा बता रहे है—भगवान् श्रीकृष्ण के गुणों के कीर्तन एवं श्रवण करने से सम्पूर्ण कष्टों का विनाश होता है, तो फिर अन्तःकरण में उनके चरणारविन्द की रज की सेवा में प्रेम होने से कैसे सब क्लेशों का नाश न होगा ? ॥ १० ॥

—×—

नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम् ।
स्यात् संभ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम् ॥ ११ ॥

( १।१८।४ सुतः )

अत्रापि कैमुतिकन्यायेनाह—नोत्तमश्लोकेति । उत्तमश्लोकस्य वार्ता कीर्तनं येषां तेषां संभ्रमो भयम् उद्वेगो वा अन्तकाले मरणकालेऽपि न भवति, किं पुनः स्वस्थतायाम् ॥ ११ ॥

सूत जी शौनक जी से कह रहे हैं—यह सही है कि जो लोग निरन्तर पुण्यश्लोक भगवान् की वार्ता किया करते हैं, उनके कथामृत को पीते रहते हैं और उनके पादपद्म का ध्यान करते रहते हैं, उन्हें मृत्यु के समय में भी भय नहीं होता ॥ ११ ॥

—×—

मर्त्यस्तयानुसवमेधितया[१] मुकुन्द-
श्रीमत्कथाश्रवणवर्णनचिन्तयैति ।
तद्धाम दुस्त्यजकृतान्तजवापवर्गं
ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥१२॥

( १०।९०।५० शुकः )

एवं जीवन्मुक्तिपरममुक्ती फले अभिधाय फलान्तरमप्याह—मर्त्य इति । श्रीमत्याः कथायाः श्रवणकीर्तनयुक्तया चिन्तया वर्धितया अनुवृत्त्या तन्निष्ठत्वेन तस्य धाम लोकमेति । लोकत्वेऽपि कालानाकलितत्वमित्याह—दुस्त्यजेति । दुर्लभपुरुषार्थत्वमाह—ग्रामादिति ॥ १२ ॥

---

१. मर्त्यस्तया ननु समेधितया इति पाठान्तरम् ।

शुकदेवजी राजा परीक्षित् से भगवान् के कथाश्रवण की विशेषता व्यक्त कर रहे हैं—जिस परमपद की प्राप्ति के निमित्त नृपति लोग राज्य का त्यागकर वन को चले जाते हैं। मनुष्य उन्हीं भगवान् श्रीकृष्ण की सुमधुर कथा के श्रवण और कीर्तन से उत्पन्न चिन्ता द्वारा प्रतिक्षण बढ़ती हुई भक्ति के बल से काल के दुर्दान्त वेग से सर्वथा शून्य वैकुण्ठधाम को प्राप्त होते हैं॥ १२॥

—×—

यानीह विश्वविलयोद्भववृत्तिहेतु-
कर्माण्यनन्तविषयाणि[1] हरिश्चकार।
यस्त्वङ्ग गायति शृणोत्यनुमोदते वा
भक्तिर्भवेद् भगवति ह्यपवर्गमार्गे॥ १३॥
(१०।६९।४५ शुकः)

किञ्चास्तु श्रवणादितदनुमोदनमपि तत्तुल्यमित्याह शुकवाक्येन—यानीहेति। वृत्तिः स्थितिर्विलयादिहेतूनि कर्माणि। अनन्तविषयाणि विचित्राणीत्यर्थः। अङ्ग हे परीक्षित्, तस्यैव भक्तिर्भवति अपवर्गस्य मार्गे प्रापके, तस्मात् साधूक्तं न तेषां संसारदुःखमिति॥ १३॥

हे राजन्! इस ब्रह्माण्ड की सृष्टि, स्थिति और प्रलय के कारण भगवान् श्रीकृष्ण ने इस लोक में जो अनेक दुष्कर कर्म किये हैं; उनका श्रवण, कीर्तन और अनुमोदन जो लोग करते हैं उनको मोक्ष देनेवाली भगवान् की भक्ति प्राप्त होती है॥१३॥

—×—

कामं भवः स्ववृजिनैर्निरयेषु नः स्या-
च्चेतोऽलिवद्यदि नु ते पदयो रमेत।
वाचस्तु नस्तुलसिवद्यदि तेऽङ्घ्रिशोभाः
पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः॥१४॥
(३।१५।४९ कुमारः)

एवं श्रवणादिपराणां निरयादियातनाऽपि नोद्वेगाय। अत एव ज्ञानिभिरपि प्रार्थ्यमानत्वाद् ज्ञानादिभ्योऽपि श्रवणादिकमुत्कृष्टमिति सनकादिवाक्येनाह—काममिति। हे भगवन्नितः पूर्वमस्माकं वृजिनं नाभवत्। इदानीं सर्वाण्यपि जातानि। यतस्त्वद्भक्तौ शप्तः। अतस्तैः स्ववृजिनैर्निरयतुल्येषु शूकरादिषु नरकेष्वेव वा कामं नोऽस्माकं भवो जन्म स्यात्। न्विति

---

[1]. अनन्यविषयाणीति पाठान्तरम्।

१२

वितर्के, यदि तु नः चेतस्ते पदयो रमेत । अलिर्यथा कण्टकैराविध्यमानोऽपि पुष्पेषु रमते तद्वद्विघ्नाननिगणय्य यदि रमेत अङ्घ्रिभ्यां शोभा यासाम्, यथा च तुलसी स्वगुणैरपेक्ष्येण त्वदङ्घ्रिसम्बन्धेनैव शोभते, तथा यदि नो वाचः शोभेरन्; यदि च ते गुणगणैः पूर्य्येत कर्णरन्ध्र इत्यल्पस्य पूरणमिव याचकरीत्या प्रार्थयन्ते । अयं गूढोऽभिप्रायः कर्णरन्ध्रस्याकाशत्वाद् गुणगणानां चामूर्तत्वान्न कदाचित् पूरणम् । अतो नित्यमेव श्रवणं फलिष्यतीति ।। १४ ।।

सनत्कुमार भगवान् विष्णु से कहते हैं—यदि हमारा मन भौंरे के समान आपके चरणों में रमता रहे ( अर्थात् जैसे भौंरा काँटों से बिंधता हुआ भी फूलों में रमता है, वैसे ही विविध संकटों की परवाह न कर मेरा मन आपके चरणों का स्मरण किया करे ), यदि मेरी वाणी की शोभा आपके गुणगान से वैसी बढ़े जैसे तुलसी की शोभा आपके चरणोंपर रखने से बढ़ती है और यदि हमारे कर्णकुहर आपकी गुणगाथाओं से पूर्ण रहें, तो अपने पापों से हमारा जन्म चाहे नरक में हो चाहे नीच योनि में हो, उसकी हमें कोई परवाह नहीं।। १४ ।।

—×—

मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः ।
वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ।। १५ ।।

( १०।४७।६६ नन्दादयः )

अत एव विज्ञैः श्रवणादिकमेव प्रार्थ्यत इति नन्दस्य वचनेनाह—मनस इति । नाम्नाम् अभिध्यायिनीः अभिध्यायिन्यस्तत्पराः ।। १५ ।।

नन्द आदि उद्धव जी से कह रहे हैं—हम लोगों के मन की वृत्तियाँ भगवान् श्रीकृष्ण के चरणकमल में लगी रहें । हमारी वाणी उनके नामों का कीर्तन करे और शरीर उनके वन्दन आदि कार्यों में लगा रहे ।। १५ ।।

—×—

गृणतां शृण्वतां वीर्याण्युद्दामानि हरेर्मुहुः ।
यथा सुजातया भक्त्या शुद्ध्येन्नात्मा व्रतादिभिः ।। १६ ।।

( ६।३।३२ यमः )

नन्वेवमपि भगवान् हृत्स्थो जन्माद्युताशुभं धुनोतु, तथापि न श्रवणादीनामसाधारणम् । व्रतादिनापि शुद्धिश्रवणान्नेत्याह—गृणतामिति । सुजातया शुद्धया भक्त्या कीर्तनादिरूपयैव यथा आत्मा मनः शुद्ध्यति तथा व्रतादिना न ।। १६ ।।

यमराज अपने दूतों से भगवान् के नाम की महिमा बता रहे हैं—भगवान् श्रीकृष्ण के गोवर्धन धारण आदि कठिन विक्रमों का सदा श्रवण और कीर्तन करने से अनायास जो दृढभक्ति उत्पन्न होती है उनसे जैसा हृदय शुद्ध होता है, वैसा व्रत आदि प्रायश्चित्तों से नहीं होता ॥ १६ ॥

—×—

यथा यथात्मा परिमृज्यतेऽसौ
मत्पुण्यगाथाश्रवणाभिधानैः ।
तथा तथा पश्यति तत्त्वसूक्ष्मं
चक्षुर्यथैवाञ्जनसंप्रयुक्तम् ॥ १७ ॥

( ११।१४।२६ श्रीकृष्णः )

मनःशुद्धिफलमाह भगवद्वाक्येन—यथा यथेति । आत्मा चित्तं परिमृज्यते शोध्यते, वस्तुमत् स्वरूपं दिव्याञ्जनेन संप्रयुक्तं चक्षुर्यथा सूक्ष्मं त्रसरेण्वादि पश्यति ॥ १७ ।

भगवान् श्रीकृष्ण उद्धव से कह रहे है—मेरी पवित्र कथाओं के श्रवण और कीर्तन से ज्यों-ज्यों मन की शुद्धि होती है, त्यों-त्यों मन अति सूक्ष्म आध्यात्मिक वस्तु देख सकता है। जैसे अञ्जन के लगाने से आँखें साफ हो जाती हैं और उनसे अति सूक्ष्म पदार्थ भी दिखाई पड़ने लगते है ॥ १७ ॥

—×—

शृण्वतः श्रद्धया नित्यं गृणतश्च विचेष्टितम् ।
कालेन नातिदीर्घेण भगवान् विशते हृदि ॥ १८ ॥

( २।८।४ परीक्षित् )

यथा यथा तथा तथेत्येवं फलाव्यभिचारं वदता सद्यः फलत्वमुक्तं स्पष्टयति परीक्षिद्-वचनेन—शृण्वत इति । नातिदीर्घेण स्वल्पेन । विशते प्रकाशत इत्यर्थः । एवं चोपायान्तरेभ्योऽप्येषामुत्कर्षः ॥ १८ ॥

राजा परीक्षित् शुकदेव जी से कह रहे हैं—जो पुरुष श्रद्धा से नित्य भगवान् के चरित्र का श्रवण और कीर्तन करता है भगवान् थोड़े ही समय में उसके हृदय में प्रवेश कर जाते हैं ॥ १८ ॥

—×—

संकीर्त्यमानो भगवाननन्तः
श्रुतानुभावो व्यसनं हि पुंसाम्।
प्रविश्य चित्तं विधुनोत्यशेषं
यथा तमोऽर्कोऽभ्रमिवातिवातः॥ १९ ॥
( १२।१२।४७ सूतः )

एतत्फलमाह—संकीर्त्यमान इति। सूतः शौनकं प्रति द्वादशे इत्यर्थः। चित्तं प्रविश्य अशेषं व्यसनं दुःखं तदपि सवासनं धुनोति नाशयति, यथोदितोऽर्कस्तमोऽन्धकारमिति प्रकाशसन्निधिमात्रे दृष्टान्तः, व्यापारे त्वतिवातः प्रबलो वायुरभ्रं मेघमिवेति॥ १६॥

सूतजी शौनकादि ऋषियों से कह रहे हैं—जैसे सूर्य अन्धकार को दूर कर देते हैं और प्रचण्ड पवन बादलों को छिन्न-भिन्न कर देता है, वैसे ही भगवान् के गुणगान करने से वे मनुष्य के हृदय में प्रवेश कर उसके सम्पूर्ण दुःख को दूर कर देते हैं॥ १९॥

—×—

तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयम्॥ २०॥
( २।१।५ शुकः )

अन्यथा तु व्यसनशान्तिर्नास्तीत्याशयेन पुरुषार्थान्तरे हेतुत्वमप्येषां शुकवाक्येनाह—तस्माद् भारतेति। हे भारत परीक्षित्! अभयं सर्वतो व्यसनशान्तिमिच्छता पुरुषेण॥ २०॥

शुकदेवजी राजा परीक्षित् से कहते हैं—अत एव हे राजन्! जो मनुष्य जन्ममरण के चक्र से अभय चाहता है उसको चाहिए कि सर्वान्तिर्यामी परमेश्वर के गुणों का श्रवण, कीर्तन और स्मरण करे॥ २०॥

—×—

या निर्वृतिस्तनुभृतां तव पादपद्म-
ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
किंत्वन्तकासिलुलितात्पततां विमानात्॥ २१॥
( ४।९।१० ध्रुवः )

वस्तुतस्तु मोक्षादपि श्रवणसुखं गरीय इति स्वतः पुरुषार्थत्वमेवैषां युक्तमित्याह—येति। निर्वृतिः सुखम्। भवज्जनैः कथ्यमानायास्तत्कथायाः श्रवणेन। स्वमहिमनि स्वरूपभूते ब्रह्मणि मोक्षावस्थायामपीत्यर्थः। सा निवृत्तिर्मा भूत्. न भवति यदि तदा अन्तकः काल एवासिः खड्गेन लुलिताद् उपद्रुताद् विमानाद् स्वर्गादेः पततां जनानां तत्सुखं न भवतीति किं वाच्यमिति ॥ २१ ॥

ध्रुव जी भगवान् से कह रहे हैं—आपके चरणकमल का ध्यान करने से और आपके भक्तों की कथा सुनने से मनुष्यों को जो आनन्द प्राप्त होता है वह आनन्द ब्रह्मज्ञान की दशा में भी नहीं होता। भला वह आनन्द उनको क्यों कर प्राप्त हो सकता है जो यम के खड्ग से काटे गये विमान पर से गिर जाते हैं[1] ॥ २१ ॥

—×—

शृण्वन् सुभद्राणि रथाङ्गपाणे-
र्जन्मानि कर्माणि च यानि लोके।
गीतानि नामानि तदर्थकानि
गायन् विलज्जो विचरेदसङ्गः ॥ २२ ॥
( ११।२।३९ कविः )

अत एवात्र लज्जादिकं न कर्तव्यमित्याह—शृण्वन्निति। सुभद्राणि यशांसि जन्मादीनि वा भद्राण्युत्कृष्टानि तदर्थकानि जन्मादिविषयाणि गीतानि नामानि तदर्थकानि जन्माद्यनुरुद्धानि वसुदेवकंसारीत्यादीनि गायन् शृण्वंश्च विचरेद् व्यवहरेत्, यथासुखं तिष्ठेदित्यर्थः। स च विलज्जोऽसङ्गः अभयश्च सन्नित्यादि द्रष्टव्यम् ॥ २२ ॥

कवि विदेह से भगवान् के भक्तों की विशेषता बतला रहे हैं—मनुष्य भगवान् के प्रसिद्ध मङ्गल जन्म, कर्म और नामों को सुनता और गाता रहे और उनका स्मरण करता हुआ इन कर्मों में लज्जा न करे तथा आसक्ति रहित होकर संसार में विचरे ॥ २२ ॥

—×—

[1] जो मनुष्य दान आदि पुण्य कर्मों से स्वर्ग में जाते है, उनका स्वर्गवास कुछ दिनों के ही लिए होता है, क्योकि पुण्य के क्षीण हो जाने पर उनको पुनः स्वर्ग से गिर जाना पड़ता है, पर भक्तों का वैकुण्ठवास सदा के लिए होता है।

न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु।
कुर्वन्ति सात्वतां भर्तुर्यातुधानश्च तत्र हि ॥ २३ ॥

( १०।६।३ शुकः

व्यतिरेके निन्दामाह—न यत्रेति। यत्र गृहे सात्वतां भर्तुः श्रवणादीनि न सन्ति, तत्र यातुधान्यो राक्षस्यः, चकारादन्येऽपि विघ्नहेतवः स्वकर्मसु कुर्वन्ति प्रभवन्तीत्यर्थः ॥ २३ ॥

शुकदेवजी राजा परीक्षित् से कहते हैं—हे राजन् परीक्षित् ! जो मनुष्य सात्वतपति भगवान् श्रीकृष्ण के नाम, गुण आदि का श्रवण, कीर्तन आदि नहीं करते जिनसे राक्षसों का नाश होता है, उनके ऐहिक और पारलौकिक कर्मों में वही विघ्नकारी राक्षस उपद्रव मचाते हैं ॥ २३ ॥

—×—

जिह्वा न वक्ति भगवद्गुणनामधेयं
चेतश्च न स्मरति तच्चरणारविन्दम्।
कृष्णाय नो नमति यच्छिर एकदापि
तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥ २४ ॥

( ६।३।२९ यमः )

एवं च न केवलमेतन्मात्रम्, किन्तु परलोकेऽपि भयमिति यमवचनेनाह—जिह्वेति। येषां जिह्वा, येषां मनः, येषां शिरश्चैकदापीति सर्वत्रान्वेति। अकृतानि विष्णुकृत्यानि पूजादीनि यैस्तानानयध्वं नरकायेति शेषः। कीर्तनादिपरास्तु न द्रष्टव्या इति भावः ॥ २४ ॥

यमराज अपने दूतों से कह रहे हैं—हे दूतगण ! दण्ड देने के लिये तुमलोग उन्हीं पापियों को मेरे पास लावो, जिनकी जिह्वा एक बार भी भगवान् श्रीकृष्ण के गुणों और नामों का कीर्तन नहीं करती; जिनका मन एक बार भी उनके चरणकमल का स्मरण नही करता; जिनका शिर एक बार भी श्रीकृष्ण के चरणकमलों पर नहीं नमता और जिन्होने कभी भी भगवत्सम्बन्धी कर्म नहीं किया हो ॥ २४ ॥

—×—

बिले बतोरुक्रमविक्रमान् ये
न शृण्वतः कर्णपुटे नरस्य।
जिह्वासती दार्दुरिकेव सूत
न चोपगायत्युरुगायगाथाः ॥ २५ ॥

भारः परं पट्टकिरीटजुष्ट-
मप्युत्तमाङ्गं न नमेन्मुकुन्दम् ।
शावौ करो नो कुरुतः सपर्यां
हरेर्लसत्काञ्चनकङ्कणौ वा ॥ २६ ॥
बर्हायिते ते नयने नराणां
लिङ्गानि विष्णोर्न निरीक्षतो ये ।
पादौ नृणां तौ द्रुमजन्मभाजौ
क्षेत्राणि नानुव्रजतो हरेर्यौ ॥ २७ ॥
जीवन् शवो भागवताङ्घ्रिरेणुं
न जातु मर्त्योऽभिलभेत यस्तु ।
श्रीविष्णुपद्यामनुजस्तुलस्याः
श्वसन् शवो यस्तु न वेद गन्धम् ॥ २८ ॥
( २।३।२०–२३ शौनकः )

किञ्च श्रवणादिविमुखस्य देहेन्द्रियादिसर्वं व्यर्थमित्याह शौनकवाक्येन चतुर्भिः—विले वतेति । वतेति खेदे । न शृण्वतः अशृण्वतो नरस्य कर्णपुटे ते विले वृथा रन्ध्रे न चेदुपगायति तस्य जिह्वा असती दुष्टा दर्दुरो भेकस्तज्जिह्वेव । यद्वा स्वार्थेऽण् दार्दुरिका भेकीवेत्यर्थः । यद्वा हृषीकेशं न वदतीत्यसती व्यभिचारिणी । उरुभिर्गीयत इत्युरुगायो भगवान् तस्य गाथा-लौकिक्यपि वार्ता ॥ २५ ॥

किञ्च, भारः परमिति । पट्टवस्त्रोष्णीषेण किरीटेन जुष्टमपि । शिर उत्तमाङ्गं यदि मुकुन्दं न नमेत्, तर्हि केवलं भार एव । शवो मृतकस्तत्करतुल्यौ । लसन्ती काञ्चनकङ्कणे ययोः । वा-शब्दोऽप्यर्थे ॥ २६ ॥

किञ्च, बर्हायितेति । ये नयने विष्णोर्लिङ्गानि श्रीजगन्नाथादिमूर्तीर्न निरीक्षतः, न निरीक्षेते ते बर्हायिते मयूरपिच्छतुल्ये । तौ पादौ द्रुमवज्जन्म भजेत इति तथा वृक्षमूलतुल्या-वित्यर्थः । अत एव शरीरकाण्डस्य वृक्षत्वारोपणेन वस्तुधिया काष्ठत्वं दर्शितम् ॥ २७ ॥

किञ्च, जीवन् शवेति । नाभिलभेत अभितानस्पृशेद् न धारयेत् श्रीविष्णुपदलग्नाया-स्तुलस्या मनुजो मनुष्यो गन्धो न वेद न जिघ्रति, प्रसङ्गाच्चावघ्राय नाभिनन्देदित्यर्थः । न केवल-मेतानि व्यर्थानि, किन्त्वसद्विषयत्वात् प्रतिकूलान्यपीति भावः ॥ २८ ॥

शौनक मुनि सूतजी से कहते हैं—हे सूत ! जो पुरुष हरि के पराक्रम की कथाओं को नहीं सुनता उसके दोनों कानों को केवल बिल समझना चाहिए और जो भगवान् की कथाओं का कीर्तन नहीं करता उसकी जिह्वा मेढ़क की जीभ के समान व्यर्थ कर्णकटु बोलने वाली और दुष्ट है ॥ २५ ॥

यदि रेशमी पगड़ी और मुकुट से विभूषित मस्तक आनन्दकन्द सच्चिदानन्द मुकुन्द को प्रणाम न करे तो उसे भाररूप समझना चाहिए और चमचमाते हुए सोने के कड़ों से अलंकृत हाथ भी यदि भगवान् की पूजा न करें तो उन हाथों को मुर्दे का हाथ समझना चाहिए ॥ २६ ॥

मनुष्य की जो आँखें कभी भगवान् की मूर्तियों का दर्शन नहीं करतीं उन्हें मोर के पंखों में चन्द्रमा सदृश धब्बों के तुल्य बेकार समझना चाहिए और जो पैर देवस्थान या तीर्थ-स्थान की यात्रा नहीं करते उनका जन्म वृक्ष के जन्म के समान है ॥ २७ ॥

जो मनुष्य कभी भी भगवद्भक्तों के चरणरज को अपने मस्तक पर धारण नहीं करता उसको जीते जी मुर्दा समझना चाहिए और जो विष्णु के चरण में चढ़ाई जाने के कारण विष्णुपदी के नाम से विख्यात तुलसी की सुगन्ध नहीं लेता, वह श्वास लेता हुआ भी मरे के समान है ॥ २८ ॥

—x—

सा वाग्यया तस्य गुणान् गृणीते
करौ च तत्कर्मकरौ मनश्च ।
स्मरेद् वसन्तं स्थिरजङ्गमेषु
शृणोति तत्पुण्यकथाः स कर्णः ॥ २९ ॥
शिरस्तु तस्योभयलिङ्गमान-
मेत्तदेव यत्पश्यति तद्धि चक्षुः ।
अङ्गानि विष्णोरथ तज्जनानां
पादोदकं यानि भजन्ति नित्यम् ॥ ३० ॥
( १०।८०।३–४ परीक्षित् )

कथं तर्हि सार्थकानीत्याह—सा वाग्ययेति । या वाक् तस्य कृष्णस्य गुणान् गृणीते, यौ तत्कर्मकरौ तौ करौ सार्थकाविति सर्वत्र बोद्धव्यम् । यन्मनः स्थिरजङ्गमेषु वसन्तं स्मरेत् तन्मनः । यस्तस्य पुण्यकथाः शृणोति स कर्ण इति ॥ २६ ॥

अपि च, शिर इति। यत्तु शिर उभयलिङ्गं भक्तरूपं प्रतिमादिरूपं चानमेत्, तदेवो-भयलिङ्गं यत् पश्यति तदेव चक्षुर्यानि अङ्गानि विष्णोः पादोदकम्, अथवा तज्जनानां पादोदकं नित्यमेव भजन्ति ॥ ३० ॥

राजा परीक्षित् शुकदेव जी से कह रहे हैं—वही वाणी है जिससे भगवान् श्रीकृष्ण का गुणगान होता हो; वे ही हाथ हैं जो भगवान् हरि की सेवा करें; वही मन है जो स्थावर, जंगम समस्त प्राणिमात्र में स्थित भगवान् का स्मरण करता हो; वही कान सफल है जो भगवान् श्रीकृष्ण की पवित्र कथायें सुनते है ॥ २९ ॥

वही शिर सफल है जो स्थावर जंगमात्मक श्रीहरि की मूर्ति को प्रणाम करे। आँख वही है जो भगवान् विष्णु का दर्शन करे और वही अंग सफल हैं जो भगवान् तथा उनके भक्तों के चरणामृत का सेवन करे ॥ ३० ॥

—×—

एकान्तलाभं वचसोऽनुपुंसां
सुश्लोकमौलेर्गुणवादमाहुः ।
श्रुतेश्च विद्वद्भिरुपाकृतायां
कथासुधायामभिसंप्रयोगम् ॥ ३१ ॥

( ३।६।३७ मैत्रेयः )

किञ्च, एकान्तलाभमिति। सुश्लोकमौलेः पुण्ययशसः शिरोभूतस्य मुकुटभूतस्य वा गुणानुवादं गुणादिकीर्तनं च स एकान्तलाभः परमं लाभमाहुः, तस्य कथासुधायामभिसंप्रयोगं विनियोगं श्रुतेश्च लाभमाहुः। उपाकृतायां कथ्यमानायाम् ॥ ३१ ॥

मैत्रेय विदुर जी से कहते हैं—विद्वान् पुरुष कहते हैं कि मनुष्यों की वाणी का मुख्य फल उत्तम कीर्तिवाले पुरुषों के शिरोमणि भगवान् के गुणों का वर्णन करना ही है और विद्वानों द्वारा वर्णित कथामृत में कान लगाकर उसे श्रद्धापूर्वक सुनना ही कानों का मुख्यफल है ॥ ३१ ॥

—×—

तस्माद् गोविन्दमाहात्म्यमानन्दरससुन्दरम् ।
शृणुयात् कीर्तयेन्नित्यं स कृतार्थो न संशयः ॥ ३२ ॥
( हरिभक्तिसुधोदये ८।६ नारदः )

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलितविवेक-
तैरभुक्तपरमहंसविष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्ध-
श्रीभगवद्भक्तिरत्नावल्यां तृतीयं विरचनम् ॥

एवं प्रकरणार्थमुपसंहरति तस्मादिति विधिः, यस्तु कीर्तयेदिति विधिः । यस्तु कीर्तये-च्छृणोति स कृतार्थ इत्यत्र न संशयोऽस्तीति ॥ ३२ ॥

॥ इति श्रीभक्तिरत्नावल्याः टीकायां कान्तिमाल्यां तृतीयं विरचनम् ॥

नारद जी भगवान् के माहात्म्य सुनने का उपदेश दे रहे हैं—इसलिए आनन्द रस से सुन्दर भगवान् की लीला-कथाओं को जो सुनता है और उनका कीर्तन करता है वह कृतार्थ हो जाता है । इसमें सन्देह नहीं ॥ ३२ ॥

# अथ चतुर्थं विरचनम्

श्रृण्वतां स्वकथाः कृष्णः पुण्यश्रवणकीर्तनः ।
हृद्यन्तस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ॥ १ ॥
( १।२।१७ सूतः )

अथ श्रवणं कीर्तनमित्युपदेशक्रमानुसारेणैकशो भक्तिनिरूपणाय विरचनमारभते । तत्र दुर्वासनामूल एव सर्वोऽप्यनर्थः । स च कृष्णकथाश्रवणेनैव निवर्तत इत्यभिप्रेत्याह—श्रृण्वतामिति । श्रृण्वतां जनानाम् । स्वस्य कृष्णस्यैव कथां वार्ताम् । पुण्ये श्रवणकीर्तने यस्य स श्रीकृष्णो हृदि स्थितानि अभद्राणि दुर्वासनारूपाणि विधुनोति नाशयति । यतोऽन्तस्थः सतां भक्तानां सुहृद् हितकारीत्यन्वयः ॥ १ ॥

सूत जी शौनक जी से कह रहे हैं—सर्वान्तिर्यामी और सन्तों के हितकारी भगवान् श्रीकृष्ण, जिनकी गुणगाथाओं का श्रवण और कीर्तन प्राणिमात्र को पवित्र कर देता है, अपनी कथा सुनने वालों के हृदय में वर्त्तमान अशुभों का विनाश कर देते है ॥ १ ॥

—×—

पिबन्ति ये भगवत आत्मनः सतां
कथामृतं श्रवणपुटेषु संभृतम् ।
पुनन्ति ते विषयविदूषिताशयं
व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥ २ ॥
( २।२।३७ शुकः )

अभद्रनाशफलमाह—पिबन्तीति । सताम् आत्मनः आत्मत्वेन प्रकाशमानस्य यद्वा आत्मनः सर्वस्वरूपस्य सतो मुखात् कथामेवामृतं ये पिबन्ति ते विषयैर्दूषितं तद्वासनामलिनीकृतम् आशयं मनः पुनन्ति शोधयन्ति । ततस्तस्य चरणपद्मान्तिकं विष्णुपदं व्रजन्ति ॥ २ ॥

शुकदेव जी राजा परीक्षित् से कहते है—जो भक्तों के प्राणस्वरूप प्रकाशमान भगवान् श्रीकृष्ण की अमृतमयी कथाओं को कान से बड़े चाव से सुनते हैं वे विषय-वासनाओं से मलिन अपने अन्तःकरण को शुद्ध करते है और हरिचरणकमल मे पहुंच जाते हैं ॥ २ ॥

—×—

धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः।
नोत्पादयेद् यदि रतिं श्रम एव हि केवलम्॥ ३॥
(१।२।८ सूतः)

ननु स्वधर्मेणाप्येतत्साध्यते, किं कथाभिः? सत्यम्; तदप्येतद्द्वारैव इत्याह-धर्म इति। यो धर्म इति प्रसिद्धः। स यदि विष्वक्सेनकथासु रतिं नोत्पादयेत् तर्हि स्वनुष्ठितोऽपि सन् श्रमो ज्ञेयः। ननु मोक्षार्थस्यापि धर्मस्य श्रमत्वमस्त्येवेति सोऽप्यश्लाघ्यः स्यादित्यतोऽवधारयति केवलं श्रमः। अयमर्थः—भगवत्कथारतिद्वारा मोक्षफलपर्यवसायित्वात् स्वधर्मः, न श्रमः; अयं तु न तथेति केवलं श्रमः। ननु तथापि स्वर्गादिसाधनधर्माणां सफलत्वं स्यादित्याशङ्क्य एवकारः, क्षयिष्णुधर्मत्वान्न तत्फलमित्यर्थः। ननु क्वाप्यक्षय्यं स्वर्गादि नोत्पाद्यत्वाद् हिशब्देन साधयति॥ ३॥

सूत जी शौनक से कहते है—यदि मनुष्यों द्वारा भली-भाँति अनुष्ठित धर्म भगवत्कथा सुनने और कहने में राग न उत्पन्न कर सका तो उसे केवल श्रम ही समझना चाहिए॥ ३॥

—×—

ज्ञाने प्रयासमुदपास्य नमन्त एव
जीवन्ति सन्मुखरितां भवदीयवार्ताम्।
स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभि-
र्ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम्॥४॥
(१०।१४।३ ब्रह्मा)

अत एवोत्पन्नभगवत्कथारतिना पुंसा ससाधनेऽपि ज्ञाने प्रयत्नमुत्सृज्य कथैव भगवद्वशीकरणं श्रोतव्येति ब्रह्मवाक्येनाह-ज्ञान इति। उदपास्य ईषदप्यकृत्वा सन्मुखरितां सद्भिः क्रियमाणां भवदीयवार्तां श्रुतौ कर्णे गतां प्राप्तां नमन्तः सत्कुर्वन्तो जीवन्ति, त्वत्कथाश्रवणमेव जीवनं येषामित्यर्थः। यद्वा श्रुतिगतां वेदप्रसिद्धमाहात्म्यां सन्मुखरितां सन्तो मौनशीला अपि मुखरिता वाचालीः कृता यया तामित्यर्थः। कथं नमन्ति? स्थाने स्थिताः, तीर्थादिभ्रमणक्लेशरहिताः। यद्वा स्थानेषु काशीप्रयागादिषु स्थिताः। ततः सत्सङ्गमः। यद्वा स्वस्वधर्मस्थिता अपि। हे अजित! त्रिलोक्यामजित स्वतन्त्रोऽपि तैर्जितोऽसि वशीकृतोऽसि। प्रायशः सर्वात्मना॥ ४॥

ब्रह्मा जी भगवान् श्रीकृष्ण की स्तुति करते हैं—जो लोग ज्ञानलाभ करने में परिश्रम को छोड़कर अपने स्थान में बैठकर सन्तों के मुख से गाये गये आपके चरित का तन,

मन और वचन से सत्कार करते हुए जीवन धारण करते हैं, हे अजित ! त्रिलोक में अजित होने पर भी प्रायः आप उनके वश में हो जाते हैं ॥ ४ ॥

—×—

नात्यन्तिकं विगणयन्त्यपि ते प्रसादं
किं त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते ।
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः
कीर्तन्यतीर्थयशसः कुशला रसज्ञाः ॥ ५ ॥

( ३।१५।४८ कुमारः )

ननु सद्यो मोक्षफले ज्ञानेऽपि किमिति प्रयासत्यागो मोक्षादपि श्रवणसुखमधिकमित्याह सनकादिवाक्येन—नात्यन्तिकमिति । आत्यन्तिकं मोक्षमपि तव प्रसादं न गणयन्ति नाद्रियन्ते, किमु अन्यदिन्द्रादिपदम् । ते भ्रुव उन्नयैरुज्जृम्भणैरर्पितं भयं यस्मिन् तत् , हे अङ्ग भगवन् ! ये भवतः कथायां रसज्ञा रसं जानन्ति त एव कुशलाः । कथंभूतस्य भवतः ? रमणीयत्वेन पावनत्वेन च कीर्तन्यं कीर्तनार्हं तीर्थं यशो यस्य ॥ ५ ॥

सनत्कुमार भगवान् विष्णु से कहते हैं—हे भगवन् ! जिन्होंने कीर्तनीय पवित्र यशवाले आपकी मंगलमयी कथाओं का रसास्वाद पाया है और जो आपके चरणकमल में आश्रित हैं वे भक्त आपके प्रसादस्वरूप मोक्ष को भी कुछ नही गिनते, फिर वे भक्तलोग आपके भौं चढ़ाने से जिसमें डर हो ऐसे इन्द्रादि के सुख को क्या समझते हैं । अर्थात् आपके भक्त भगवान् के दर्शन, श्रवण, कीर्तन आदि के अतिरिक्त कुछ भी नहीं चाहते ॥ ५ ॥

—×—

को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ।
शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ॥ ६ ॥

( १।१।१६ ऋषयः )

किञ्च, सर्वपापप्रायश्चित्तमपि भगवत्कथाश्रवणमेवेत्याह—को वा भगवत इति । पुण्यश्लोकैरीड्यानि कर्माणि यस्य तस्य यशः सर्वात्मना सर्वपापशुद्धिकामो न शृणुयात्, को वा कतमो नात्मने हितो नात्मनीन इत्यर्थः ॥ ६ ॥

शौनक सूत जी से कहते हैं—ऐसा कौन पुरुष है जो आत्मशुद्धि की इच्छा करता हो और कलिकाल के पापों का नाश करने वाले भगवान् के यश का श्रवण न करे जिनके कर्मों की स्तुति पुण्यकीर्ति मनु, व्यास, शुकदेव आदि ने की है ॥ ६ ॥

—×—

प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् ।
धुनोति शमलं कृष्णः सलिलस्य यथा शरत् ॥ ७ ॥

( २।८।५ परीक्षित् )

एतदेव दृष्टान्तेन स्पष्टयति—भावसरोरुहं हृदयकमलं कर्णरन्ध्रेण प्रविष्टः श्रुत इत्यर्थः । शमलं हृद्गतं सर्वं मलं धुनोति । सलिलस्येति । द्रव्यान्तरमिश्रणादिना कुम्भस्थजले शोधितेऽपि तदेव केवलं शुध्यति, न तु नदीतडागादिगतम् । स च मलः कुम्भस्यान्तस्तिष्ठत्येव, न तु सर्वथा विलीयते । अत एव किञ्चिच्चलने पुनः क्षुभ्यति च । एवं तपोदानादिप्रायश्चित्तमपि न सर्वथा सर्वेषां पापं धुनोति, किन्तु सावशेषम् । तच्च कस्यचिदेव हृदि प्रविष्टमात्रस्तु श्रीकृष्णः सर्वेषां सर्वपापं निरवशेषं हरतीत्यनेन दृष्टान्तेनोक्तं सलिलस्य मलं यथा शरदीति ॥ ७ ॥

राजा परीक्षित् शुकदेव जी से कह रहे हैं—भगवान् श्रीकृष्ण कानों के द्वारा अपने भक्तों के हृदयकमल में प्रवेशकर जैसे शरदऋतु जल के मैल को दूर कर देती है वैसे ही हृदयस्थित मल ( पापों ) को दूर कर देते हैं ॥ ७ ॥

—×—

शुद्धिर्नृणां न तु तथेड्यदुराशयानां
विद्याश्रुताध्ययनदानतपःक्रियाभिः ।
सत्त्वात्मनामृषभ ते यशसि प्रवृद्ध-
सच्छ्रद्धया श्रवणसम्भृतया यथा स्यात् ॥८॥

( ११।६।९ देवाः )

एतदेव दृष्टान्ततात्पर्यं स्पष्टयति देववाक्येन—शुद्धिरिति । हे ईड्य ! हे ऋषभ ! दुराशयानां रागिणां विद्या उपासना विद्यादिभिस्तथा शुद्धिर्न भवति यथा सत्त्वात्मनां सतां ते तव यशसि श्रवणेन संभृतया परिपुष्टया अभिवृद्धया सच्छ्रद्धया स्यात् । तस्माद् मुक्तमुक्तं को वा न शृणुयादिति ॥ ८ ॥

देवगण भगवान् की स्तुति करते हैं—हे स्तुत्य ऋषभदेव जी ! विषयवासनासक्त मनुष्यों के हृदय की शुद्धि विद्या, वेदाध्ययन, दान, तप, योगक्रिया आदि से वैसी नहीं होती जैसी सात्त्विक पुरुषों के हृदय की शुद्धि आपके यश के सुनने से बढ़ी हुई श्रद्धा से होती है ॥ ८ ॥

—×—

**निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात् ।**
**क उत्तमः श्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नात् ॥ ९ ॥**

**( १०।१।४ परीक्षित् )**

नन्वेवमपि शुद्धिकामः शृणोतु, न तु जीवन्मुक्तः कृतार्थत्वात्, न च बन्धनान्मुमुक्षुर्योगादिपरत्वादेव, न च रागी विषयासक्तित्वान्नेत्याह—निवृत्ततर्षैरिति । विगततृष्णैर्जीवन्मुक्तैरपि उपगीयमानात् । एवं मुक्तश्लाघ्यत्वमुक्तम् । मुमुक्षुश्लाघ्यत्वमाह—भवस्य संसारस्य व्याधेरौषधाद् निवर्तकत्वात् । एवं रागिश्लाघ्यत्वमाह—श्रोत्रे विचित्रत्वात्, मनसि रसवत्त्वाद् अभिरामादुत्तमश्लोकस्य गुणानामनुवादात् कथातः को विरज्येत, कस्तत्कथामृतं न शृणुयादित्यर्थः । पशुघ्नात् चाण्डालाद् विना, तथा ये विरज्यन्ते ते चाण्डाला एव ज्ञेया इति भावः । यद्वा अपगता शुग् यस्मात् स अपशुक्, वस्तुतो निःशोक आत्मा तं हन्तीति संसारे पातयतीति यस्तस्मात् स आत्महेति भावः । यद्वा—अपशुक् परमात्मा तं हन्ति,विष्णुद्रोहीत्यर्थः । यद्वा—अपशुच ऋषयस्तान् हन्ति-राक्षस इति । यद्वा नात्राकारप्रश्लेषः । तथा च पशुघ्नाद् यज्ञपुरुषमनाराध्य स्वर्गाद्यर्थं यज्ञे पशून् हन्ति यस्तस्माद् वृथा वधभागिनो विना अन्येऽप्यश्रोतारो वधभागिन इति भावः । यद्वा पशवो हन्यन्तेऽनेनेति पशुहा, तद् लोष्टदण्डादिस्तस्मात् स लोष्टादिवद् पुरुषार्थशून्य इति भावः॥ ९॥

राजा परीक्षित् शुकदेव जी से कहते हैं—पशुघाती पुरुष के अतिरिक्त कौन ऐसा बुद्धिमान् मनुष्य होगा जो भगवान् की कथा के श्रवण और कीर्तन से विरक्त होगा, जिसे तृष्णारहित मुक्तपुरुष भी गाया करते हैं, जो संसाररूपी व्याधि का औषध है और कान एवं मन को सुखकर है । सारांश यह है कि इस संसार में तीन तरह के मनुष्य हैं—मुक्त, मुमुक्षु और विषयी । उनमें से किसी को भी भगवान् की कथा में अलंबुद्धि नहीं होती । मुक्त पुरुष तो इसे गाते ही रहते हैं । मुमुक्षुओं के लिए संसार को छुड़ाने की तो औषध ही है और विषयी लोगों के लिए कर्णसुखद मनोमधुर है ही ॥ ९ ॥

—×—

को नाम तृप्येद्रसवित् कथायां महत्तमैकान्तपरायणस्य ।
नान्तं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः ॥ १० ॥

( १।१८।१४ ऋषयः )

ननु मुमुक्षुरागिणौ श्रृणुतान्नाम जीवन्मुक्तस्य तृप्तत्वात् किं कथया न रसातिशयत्वाद् जीवन्मुक्तस्यापि तत्कथाश्रवणवृत्तिमाह—को नाम तृप्येदिति । रसविद् रसज्ञो महत्तमानामेकान्तेन परम् अयनमाश्रयो यस्तस्य कथायाम् । अगुणस्य प्राकृतगुणरहितस्य गुणानां कल्याणगुणानामन्तं ये योगेश्वरास्तेऽपि न जग्मुः । एतावन्त इति न परिगणयाञ्चक्रुः । भवः शिवः पाद्मो ब्रह्मा मुख्यो येषां ते ॥ १० ॥

शौनक सूत जी से कहते हैं—ऐसा कौन रसिक पुरुष है जो उन सन्तों के शरणदाता श्रीहरि की कथा से तृप्त हो जाय जिनके गुणों का पार शिव, ब्रह्मा आदि योगेश्वरों ने भी नहीं पाया ॥ १० ॥

—×—

ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्र-
मात्मप्रसाद उभयत्र[1] गुणेष्वसङ्गः ।
कैवल्यसम्मतपथस्त्वथ भक्तियोगः
को निर्वृतो हरिकथासु रतिं न कुर्यात् ॥ ११ ॥

( २।३।१२ शुकः )

एवमन्यानपि श्रवणगुणान् दर्शयन्नुक्तमर्थं स्पष्टयति—ज्ञानमिति । यत्र यासु कथासु ज्ञानं भवति । कीदृशम्? आ सर्वतः सुषुप्त्यादिवैलक्षण्येन प्रतिनिवृतम् उपरतं गुणोर्मीणां रागादीनां चक्रं समूहो यस्मात् तद्धेतुरात्मप्रसादश्च यत्र यासु । मनःप्रसादहेतुः, गुणेषु विषयेष्वसङ्गो वैराग्यं च । उभयत्रेति पाठे इहामुत्र च गुणेष्वसङ्ग इत्यर्थः । कैवल्यमित्येव सम्मतः पन्था यो भक्तियोगः । एते भक्तियोगाद्या यतो भवन्तीत्यर्थः । निर्वृतः श्रवणसुखेनानिर्वृतो वा संसारतापेन तासु हरिकथासु रतिं न कुर्यात् ॥ ११ ॥

शुकदेव जी राजा परीक्षित् से कहते हैं—किस मनुष्य को हरि-कथा के श्रवण में अनुराग न होगा ? हरि-कथा के श्रवण से ऐसा ज्ञान उत्पन्न होता है जिससे मनुष्य संसार सागर की

---

१. उत यत्रेति पाठान्तरम् ।

की भँवरों से पार हो सकता है, मन को प्रसन्नता होती है, विषयों में वैराग्य होता है और मोक्ष का मार्ग भक्तियोग होता है ॥ ११ ॥

—×—

आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ ।
तस्यर्ते यत् क्षणो नीत उत्तमश्लोकवार्तया ॥ १२ ॥
तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत ।
न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥ १३ ॥
श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ।
न यत्कर्णपथोपेतो यातु नाम गदाग्रजः ॥ १४ ॥
(२।३।१७-१९ शौनकः)

व्यतिरेके निन्दामाह—आयुरिति । असौ सूर्यः उद्यन् उद्गच्छन्, अस्तं च यन् गच्छन् यद् येन उत्तमश्लोकवार्तया श्रूयमाणया क्षणो नीतस्तस्य आयुः ऋते वर्जयित्वा वृथैव पुंसामायुर्हरति । यदा यः क्षण इति पाठे । तस्य ऋते तं क्षणं विनाऽवशिष्टमायुर्हरतीत्यर्थः ॥ १२ ॥

ननु जीवनादिकमेतेषां श्रवणादिविमुखानामायुः फलमस्ति तत्राह—तरव इति । ननु तेषां श्वासो नास्ति भस्त्राश्चर्मकोशाः । ननु तासामाहारादिकं नास्ति तत्राह—न खादन्ति न मेहन्ति । मेहनं रेतः सेको मैथुनं न कुर्वन्ति किम्? यथा तरवादयः, तथा अपरेऽश्रोतारः पशव इति भावः ॥ १३ ॥

तदेवाह—श्वविड्वराहेति । श्वादिभिः संस्तुतः सदृशो निरूपितः । यस्य कर्णपथं श्रीकृष्णः कदापि न गतः, अवज्ञास्पदत्वात् श्वभिः, कश्मलविषयासक्तत्वाद् विड्वराहैर्ग्रामशूकरैः, कण्टकवद् दुःखदविषयासक्तत्वादुष्ट्रैः, भारवाहित्वात् खरैस्तुल्य इत्यर्थः । वस्तुतस्त्वधिकारित्वाद्धरिभक्तितश्च्युत इति तेभ्योऽप्यधम इति भावः ॥ १४ ॥

शौनक सूत जी से कह रहे हैं—केवल उन्हीं की आयु सफल है जिनका समय भगवत्कथा के सुनने में कटता है, जिनका समय भगवान् की कथा के विना व्यतीत होता है उनकी आयु को तो उदय एवं अस्त होता हुआ सूर्य वृथा ही हर ले जाता है ॥ १२ ॥

क्या पेड़ नहीं जीते ? क्या धौंकनी श्वाँस नहीं लेती ? क्या इनके अतिरिक्त ग्रामीण पशु आहार और मैथुन नहीं करते ? तात्पर्य यह है कि जो मनुष्य भगवान् की मंगलमयी

कथाओं का श्रवण-कीर्तन नहीं करते उनका जीवन वृक्षों के जीवन के समान, श्वास-प्रश्वास लोहार की भाथी की तरह, आहार आदि ग्राम्य पशु के तुल्य हैं ।। १३ ।।

जिस मनुष्य के कान में भगवान् श्रीकृष्ण की कथा का प्रवेश नहीं हुआ वह कुत्ता, शूकर, ऊँट, गदहा आदि पशुओं के समान है ।। १४ ।।

—×—

तान् शोच्यशोच्यानविदोऽनुशोचे हरेः कथायां विमुखानघेन ।
क्षिणोति देवो निमिषस्तु तेषामायुर्वृथावादगतिस्मृतीनाम् ।। १५ ।।

( ३।५।१४ विदुरः )

तस्मात् कथाविमुखाः शोच्यादपि शोच्यतमा इति विदुरवचनेनाह—तान् शोच्येति । ये हरेः कथायां विमुखा न रमन्ते तान् शोच्यान्, एतेषामपि शोच्यानहमनुशोचे । कथं भूतान् ? अविदः सर्वशास्त्राभिप्रायानभिज्ञान् । योऽपि ज्ञात्वाऽघेन दुरदृष्टेन विमुखास्तानपि । कथम् ? यो निमिषः कालो देवः सर्वेषामायुः क्षिणोति । अत्र हेतुर्वृथैव, वाग्गतिस्मृतयो वाग्देहमनोव्यापारा येषाम् ।। १५ ।।

विदुर जी मैत्रेय से कहते हैं—मैं उन अज्ञानियों के लिए शोक करता हूँ जो पापी हरिकथा-श्रवण से विमुख है । उनके लिए अवश्य शोच करना चाहिए, क्योंकि वे वृथा चलने में, बोलने में और चिन्तन में लगे रहते हैं । उनकी आयु को काल प्रतिक्षण हर रहा है ।।१५।।

—×—

यन्नव्रजन्त्यघभिदो रचनानुवादाच्छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ।
यास्तु श्रुताहतभगैर्नृभिरात्तसारास्तांस्तान् क्षिपन्त्यशरणेषु तमःसु हन्त ।।१६।।

( ३।१५।२३ ब्रह्मा )

न केवलं तेषां वृथायुर्हानिः, अधोगतिश्चेत्याह—यन्न व्रजन्तीति । ये कुकथाः शृण्वन्ति । कास्ताः ? अघं भिनत्तीत्यघभित् तस्य हरे रचनासृष्ट्यादिलीला तस्या अनुवादादन्यविषयाः कामादिवार्ता मतिघ्नीः प्रतिभ्रंशिका यास्ते यत्प्रसिद्धं वैकुण्ठं न व्रजन्ति, तेषामव्रजने हेतुः । यास्तु हतभगैर्नरैः श्रुताः सत्यस्तान् श्रोतॄन् अशरणेषु निराश्रयेषु तमःसु नरकेषु क्षिपन्ति । हन्त खेदे । कथंभूता ? आत्तसारः अर्थो नृणां पुण्यं याभिस्ताः । अतो भगवल्लीलाश्रोतारो वैकुण्ठं व्रजन्तीति भावः ।। १६ ।।

ब्रह्मा जी देवताओं से कहते हैं—जो लोग पापहारी भगवान् हरि की सृष्टि आदि लीला की कथाओं को छोड़कर अर्थकामविषयक, बुद्धिभ्रंशक कुकथाओं को सुनते है वे अभागे कभी भी वैकुण्ठ में नहीं जाते, किन्तु हतभाग्यों द्वारा सुनी गई पुण्यघातक कथाएं उनको घोर नरक में गिरा देती हैं ॥ १६ ॥

—×—

**पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये।**
**वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसान्वीयुरकुण्ठधिष्ण्यम् ॥ १७ ॥**

**( ३।५।४५ देवाः )**

एवमश्रोतॄन् निन्दित्वा तमेव भावं स्पष्टयति—पानेनेति। वचनेन पानेन देवा वैराग्यं सारो बलं यस्य बोधस्य तं यथावल्लब्ध्वा अन्वीयुः प्राप्नुयुः, अकुण्ठधिष्ण्यं वैकुण्ठम् अञ्जसा सुखेन ॥ १७ ॥

देवता भगवान् से कहते है—हे देव ! आपके कथामृत के पान से बढ़ी हुई भक्ति से जिन मनुष्यों का हृदय विशुद्ध हो गया है वे वैराग्य के फलस्वरूप ज्ञान को प्राप्त कर परिश्रम के विना ही वैकुण्ठ में चले जाते हैं ॥ १७ ॥

—×—

**ये तु त्वदीयचरणाम्बुजकोशगन्धं जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम्।**
**भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसाम् ॥१८॥**

**( ३।९।५ ब्रह्मा )**

किञ्च, तेषां नित्यं भगवत्सान्निध्यादत्रापि वैकुण्ठसुखमिति ब्रह्मवाक्येनाह—ये तु त्वदीयेति। त्वदीयौ चरणावेव अम्बुजकोशौ तयोर्गन्धं यशो ये कर्णविवरैर्जिघ्रन्ति शृण्वन्तीत्यर्थः। श्रुतिर्वेदः, श्रूयते इति श्रुतिः, शब्दसामान्यम्। वास एव वातस्तेन नीतं प्रापितं नापैषि नापयासि। ये त्वत्कथा श्रवणम् अत्यादरेण कुर्वन्ति तेषां हृदि नित्यं प्रकाशस इत्यर्थः। तथा च किं तेषामपेक्षितमिति भावः ॥ १८ ॥

ब्रह्मा जी भगवान् की स्तुति करते हैं—हे नाथ ! जो लोग वेदरूप वायु से पहुँचाये गये आपके चरणकमल के सुगन्ध को अपने कानों से ग्रहण करते हैं और परम प्रेमरूप गाढ भक्ति से आपके चरणों को पकड़े हुए हैं उन भक्तों के हृदयकमल से आप नहीं हटते, अर्थात् उन भक्तों के हृदय में आप सदा विराजमान रहते हैं ॥ १८ ॥

—×—

अयं त्वत्कथामृष्टपीयूषनद्यां मनोवारणः क्लेशदावाग्निदग्धः ।
तृषार्तोऽवगाढो न सस्मार दावं न निःक्रामति ब्रह्म सम्पन्नवन्नः ॥ १९ ॥

( ४।७।३५ सिद्धाः )

एतदेव श्रोतॄन् कृतार्थयन् सिद्धानामनुभवेनाह—अयं त्विति । अयं मनोरूपो वारणः, महामदोन्मत्तो गजः, त्वत्कथैव मृष्टं शुद्धम् अमृतं तन्मयी या नदी तस्यामवगाढः प्रविष्टो दावाग्नितुल्यं संसारतापं न स्मरति स्म, न च ततो न निर्गच्छति, ब्रह्मसम्पन्नवद् ब्रह्मैक्यं प्राप्त इव । यथा ब्रह्मणो न पृथग् भवति तथा नो मनोऽपि त्वत्कथाश्रवणपरमानन्दमग्नं श्रोतुं ब्रह्मैक्यं प्राप्तो न विरमतीत्यर्थः । एतेन मुक्तितुल्यं श्रवणसुखमित्यपि दर्शितम् ॥ १६ ॥

सिद्धगण विष्णु की स्तुति करते हैं—क्लेशरूपी वन की अग्नि से जला हुआ, इसीलिए पिपासाकुल हमारा मनरूपी हाथी आपकी कथासुधा की नदी में घुसकर ब्रह्म के साथ ऐकीभाव को प्राप्त हुए पुरुष के समान संसाररूप वनाग्नि का स्मरण नही करता, न उस नदी से बाहर ही निकलता है ।

सारांश यह है कि जैसे दावानल से दग्ध हुआ हाथी तृषार्त होकर नदी में घुस जाने पर वहाँ से निकलता नहीं वैसे ही संसार के दुःख से दुःखी हुआ मेरा मन आपके कथामृत की सरिता में प्रवेश कर ब्रह्मानन्द को प्राप्तकर उसे नहीं छोड़ना चाहता ॥ १९ ॥

—×—

वारन् विभो त्वद्वरदेश्वराद् बुधः कथं वृणीते गुणविक्रियात्मनाम् ।
ये नारकाणामपि सन्ति देहिनां तानीश कैवल्यपते वृणे न च ॥ २० ॥
तदप्यहं नाथ न कामये क्वचिन्न यत्र युष्मच्चरणाम्बुजासवः ।
महत्तमान्तर्हृदयान्मुखच्युतो विधत्स्व कर्णायुतमेष मे वरः ॥ २१ ॥
स उत्तमश्लोकमहन्मुखच्युतो भवत्पदाम्भोजसुधाकणानिलः ।
स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां कुयोगिनां नो वितरत्यलं वरैः ॥ २२ ॥
यशः शिवं सुश्रव आर्य सङ्गमे यदृच्छया चोपशृणोति ते सकृत् ।
कथं गुणज्ञो विरमेद्विना पशुं श्रीर्यत् प्रवव्रे गुणसंग्रहेच्छया ॥ २३ ॥

( ४।२०।२३-२६ पृथुः )

वस्तुतस्तु ततोऽप्यधिकमिति पृथुप्रार्थनेनाह चतुर्भिः—वरान्निति । हे विभो ! वरदानां ब्रह्मादीनामीश्वराद् वरप्रदात् त्वत्तो वरं दातुमुद्यतादपि सकाशाद् बुधः कथं वरान् वृणीते ?

कीदृशान् ? गुणैर्विक्रियत इति । गुणविक्रियोऽहंकारः स एवात्मा येषां तेषां ब्रह्मादीनां सम्बन्धिन इत्यर्थः । देहाभिमानिनां भोग्यानीति वा तेष्वाविष्टो बुध एव न भवतीत्यर्थः, सुलभत्वाद् जुगुप्सितत्वादपीत्याह य इति । बुध एवाहमपि न वृणे इति समुच्चयार्थं चकारः ॥ २० ॥

कैवल्यपते इति सम्बोधनात् कैवल्यं वरिष्यतीति मा शंकीरित्याह—तदप्यहमिति । महत्तमानामन्तर्हृदयाद् मुखद्वारेण निर्गतो भवत्पदांभोजे मकरन्दो यशःश्रवणादिसुखं यत्र नास्ति तादृशं चैतत् कैवल्यं तर्हि तत् क्वचित्कदाचिदपि न कामये । तर्हि किं कामयसे तदाह—यशःश्रवणाय कर्णायुतं विधत्स्व । ननु कोऽप्येवं न वृत्तवान् किमन्यचिन्तया, मम त्वेष एव वर इति ॥२१॥

ननु कैवल्याभावे रागद्वेषाद्याकुलानां श्रवणसुखमपि न स्यादित्याशङ्कयाह—स उत्तमश्लोक इति । भवत्पदांभोजसुधायाः कणो लेशः, तत्सम्बन्धी योऽनिलः स एव दूरादपि किञ्चिद्यशःश्रवणमात्रमपीत्यर्थः । विस्मृतं तत्त्ववर्त्म यैः कुयोगिभिस्तेषामपि पुनः स्मृतिमात्मज्ञानं वितरति । अतो न खलु भक्तानां रागादिसम्भवः । अतो नोऽस्माकं सारग्राहिणामन्यैर्वरैरलम्, श्रवणसुखेष्वेव मोक्षादिसर्वसुखान्तर्भावादिति भावः ॥ २२ ॥

ननु श्रवणं मुक्तिफलमेव । अतः फलं विहाय साधने भवतः कोऽयमाग्रहस्तत्राह—यश इति । हे सुश्रवः । मङ्गलकीर्ते ! ते शिवं यशः सतां सङ्गमे यः सकृदपि यदृच्छयाऽप्युपश्रृणोति गुणज्ञश्चेत् स पशुं विनाऽन्यः कथं विरमेत् । गुणातिशयं सूचयति । श्रीर्यश एव प्रकर्षेण वव्रे वृतवती । गुणानां सर्वपुरुषार्थानां संग्रहः स्वस्मिन् समाहारस्तदिच्छया ॥ २३ ॥

राजा पृथु भगवान् की स्तुति करते हैं—हे प्रभो ! जिन देवताओं मे वर देने की शक्ति है उनके भी आप नियन्ता हैं । कौन बुद्धिमान् मनुष्य आपसे देहाभिमानी लोगों के भोग करने योग्य वर की प्रार्थना करेगा । हे मोक्ष के दाता, जो वस्तुएँ नरकदेहधारियों को भी मिलती हैं मैं आपसे उन तुच्छ भोग्य वस्तुओं को नही माँगता ॥ २० ॥

हे नाथ ! मैं तो उस मोक्ष को भी नहीं चाहता जहाँ बड़े बड़े सन्तों के अन्तःकरण से मुख द्वारा निकले हुए आपके चरणकमलों का यशोगान सुनने को नही मिलता । मेरी तो यही प्रार्थना है कि आप कृपाकर मुझको यह वरदान दीजिए कि मुझे दश हजार कान हों, जिनसे आपके यशों को सुनता रहूँ ॥ २१ ॥

हे उत्तमश्लोक ! आपके चरणकमल की सुधा का सम्पर्की वायु महात्माओं के मुख से निकल कर तत्त्वमार्ग को भूले हुए कुयोगियों को पुनः तत्त्वज्ञान का स्मरण दिलाता है । अतः हमको आपके कथाश्रवण को छोड़कर अन्य किसी वरदान की आवश्यकता नही है ॥ २२ ॥

हे सुयश ! जो मनुष्य एक बार भी सन्तों के संग में प्रसंगवश आपके शुभ यश का श्रवण कर लेता है यदि वह गुणग्राही हो, पशु न हो, तो फिर उसे छोड़ नहीं सकता; क्योंकि लक्ष्मी जी ने भी सभी गुणों को अपने पास संग्रह करने की इच्छा से आपके यश की कथा का श्रवण ही माँगा ।। २३ ।।

—×—

तस्मिन्महन्मुखरितामधुभिच्चरित्रपीयूषशेषसरितः परितः स्रवन्ति ।
ता ये पिबन्त्यवितृषो नृप गाढकर्णैस्तान्न स्पृशन्त्यशनतृड्भयशोकमोहाः ।। २४ ।।
एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः ।
न करोति हरेर्नूनं कथामृतनिधौ रतिम् ।। २५ ।।
( ४।२९।४०-४१ नारदः )

ननु तेष्वपि क्षुत्पिपासादिकं प्राणिमात्रधर्मः, कथममुं भक्तं न बाधेत ? तथा सति कुतः श्रवणसुखम् ? तस्मान्मोक्ष एव निरुपद्रवः श्रेयानिति नेत्याह नारदवचनेन—तस्मिन्निति । तस्मिन् साधुसङ्गमे महद्भिर्मुखरिताः कीर्तिता मधुभिदश्चरित्रमेव पीयूषं तदेव शिष्यत इति शेषो यासु असारांशरहिता शुद्धा मृतवाहिन्य इत्यर्थः । अवितृषोऽलं बुद्धिशून्याः सन्तो गाढैः सावधानैः कर्णैर्ये ताः सरितः पिबन्ति सेवन्ते । अशनशब्देन क्षुल्लक्ष्यते, अशनादयस्तान्न स्पृशन्ति । श्रवणरसिकान्न बाधन्त इत्यर्थः ।। २४ ।।

तर्हि सर्वे तत्कथामेव किमिति न शृण्वन्ति तत्राह—एतैरिति । एतैः क्षुत्पिपासादिभिरुपद्रुतः पीडितः कथामृतमेव, अक्षयत्वाद् दुर्लभत्वाद्वा निधिः । तत्रायमर्थः—यावत्कुतश्चित्कथामहिमानं ज्ञात्वा कथञ्चिदपि न शृणोति तावत् क्षुधादिभिर्बाध्यत एव । श्रवणाभासेनापि ज्ञातरसो जातरतिः पश्चान्न बाध्यत इति ।। २५ ।।

नारद जी राजा प्राचीनवर्हिष् से कहते हैं—हे राजन् ! सन्तों के समागम में महात्माओं के मुख से हरि के चरित्र का वर्णनरूप अमृतमयी नदी की धारा चारों ओर बहा करती है । उस धारा को जो एक चित्त होकर अपने कानों से अघाकर पीते हैं उन भक्तों को भूख, प्यास, भय, शोक और मोह कभी भी नहीं छू सकते ।। २४ ।।

इन स्वाभाविक भूख, प्यास आदि उपद्रवों से नित्य दुःखी होकर मनुष्य नारायण के कथारूपी अमृतसागर में अनुराग नहीं करते ।। २५ ।।

—×—

नैषातिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते।
पिबन्तं त्वन्मुखांभोजच्युतं हरिकथामृतम्॥ २६॥

(१०।१।१३ परीक्षित्)

एतदेव परीक्षिदनुभवेनाह—नैषेति। त्यक्तोदकस्यापि मम हरिकथामृतपाननिमित्तं जीवनं तदुपरमे सद्य एव जीवनं न स्यात्॥ २६॥

राजा परीक्षित् शुकदेव जी से कह रहे हैं—यद्यपि मैंने अन्न-जल छोड़ दिया है, तथापि आपके मुखारविन्द से टपकते हुए श्रीहरि की कथारूपी अमृत का पान कर रहे मुझको यह असह्य भूख और प्यास नहीं सताती[1]॥ २६॥

—×—

तं मोपयातं प्रतियन्तु विप्रा गङ्गा च देवी धृतचित्तमीशे।
द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः॥ २७॥

(१।१९।१५ परीक्षित्)

किञ्च, हरिकथारसिकस्य मरणादपि भयं न भवतीति परीक्षित्प्रार्थनेनैवाह—तं मोपयातमिति। तं मा माम् उपयातं शरणागतं विप्रा भवन्तः प्रतियन्तु जानन्तु, देवी देवतारूपा गङ्गा च प्रत्येतु। द्विजोपसृष्टो द्विजप्रेरितः कुहको मायावी तक्षको दशतु, वाशब्दः प्रतिक्रिया नादरे। कुहकोऽन्यः सर्पो वा। विष्णुगाथाः कथाः॥ २७॥

राजा परीक्षित् जी ब्राह्मणों से कहते हैं—हे विप्रगण! आप और गंगा जी जानें कि मैं नारायण का शरणागत होकर उनमें अपने मन को लगा दिया हूँ। ऋषिकुमार द्वारा भेजा हुआ कपटी तक्षक[2] मुझे भले काटे, उसकी मुझे कुछ परवाह नहीं। आप लोग भगवान् विष्णु की कथाओं का पूर्णरूप से कीर्तन कीजिए॥ २७॥

—×—

---

१. गाण्डीवधन्वा अर्जुन के पौत्र तथा वीर अभिमन्यु के पुत्र राजा परीक्षित ने ७ दिन तक अन्न-जल का त्यागकर श्रीमद्भागवत का श्रवण किया था। उसी के अनुकरण पर श्रीमद्भागवत का सप्ताह आजतक प्रचलित है।

२. एक समय राजा परीक्षित शिकार खेलने के लिए वन में गये हुये थे। थकावट के कारण प्यास लगने पर पानी की तलाश करते हुये राजा ने एक ऋषि को देखा, जो ध्यान में मग्न थे। राजा ने ऋषि से जल माँगा, पर समाधिस्थ होने के कारण ऋषि को सुधि-बुधि न रही। राजा ने समझा कि मुझे देखकर

अन्येषां पुण्यश्लोकानामुद्दामयशसां सताम् ।
उपश्रुत्य भवेन्मोदः श्रीवत्साङ्कस्य किं पुनः ॥ २८ ॥
( ३।१९।३४ सूतः )

न चैतदसंभावितमिति कैमुतिकन्यायेनाह—अन्येषामिति । अन्येषां तद्भक्तानामेवोपश्रुत्य कथमिति प्रकरणार्थः । मोदः सर्वतापोपरतिपूर्वक आनन्दः ॥ २८ ॥

सूत जी शौनक से कह रहे हैं—जब कि उदारकीर्ति और पवित्र यश वाले दूसरे भगवद्भक्तों की कथा सुनकर आनन्द प्राप्त होता है तब फिर श्रीवत्स-चिह्न से सुशोभित वक्षस्थल वाले हरि के चरित को सुनने से आनन्द होगा इसमें कहना ही क्या है ? ॥ २८ ॥

—×—

[1]तस्माद्धीमन् कथां पुण्यां गोविन्दचरिताश्रिताम् ।
महत्पुण्यप्रदां यस्माच्छृणुष्व नृपसत्तम ॥ २९ ॥
( शुकः )

तदेवं शुकवाक्येनोपसंहरति—तस्मादिति । यस्मात् संसारनिवर्तकं पुण्यं ददातीति महापुण्यप्रदात् तस्मात् तां कथां शृणुष्व नृपसत्तम परीक्षित् ॥ २६ ॥

हे नृपश्रेष्ठ ! इसलिए ईश की कथा का श्रवण कीजिए जिसमें गोविन्द की लीलाओं का वर्णन है, क्योंकि उससे महान् पुण्य होता है ॥ २९ ॥

—×—

---

स्वागत करने के भय से इन्होंने अपनी आँखें बन्द कर ली है । मारे क्रोध से उन्होंने एक मरे साँप को, जो वहाँ पड़ा था, माला के समान ऋषि के गले में पहना दी । और अपनी राजधानी का रास्ता लिया ।

उस आश्रम के लड़कों ने उस ऋषि के पुत्र—जो पास में ही कौशिकी गंगा में स्नान करने के निमित्त गया हुआ था—से जाकर कहा कि तुम्हारे बाप की यह दुर्दशा हुई है । इस समाचार को सुनते ही क्रोधाविष्ट होकर ऋषिकुमार ने कौशिकी का जल लेकर शाप दिया कि जिसने मेरे पिता का इस प्रकार अपमान किया है, उसको सात दिन में तक्षक साँप काटेगा । इस शाप को सुनकर राजा परीक्षित राज्य का त्याग कर गंगा के पुनीत तटपर बैठ निर्जल उपवासपूर्वक श्री शुकदेवजी से श्रीमद्भागवत का श्रवण करते हुए प्राण छोड़ने के लिए तैयार रहे । परिणामस्वरूप सातवें दिन तक्षक ने उन्हें काटा, पर भगवत्कृपा से वे सीधे भगवद्धाम बैकुण्ठ सिधारे ।

१. तस्मादीशकथामिति पाठान्तरम् ।

नानुतृप्ये जुषन् युष्मद्वचो हरिकथामृतम् ।
संसारतापनिस्तप्तो मर्त्यस्तत्तापभेषजम् ॥ ३० ॥

( ११।३।३ विदेहः )

तदेव महापुण्यप्रदत्वं जनकवाक्येन स्पष्टयति—नानुतृप्य इति । संसारतापैर्नितरां तप्तोऽहं तस्य तापस्य भेषजं हरिकथामृतरूपं युष्मद्वचो जुषमाणो नानुतृप्यामि, संसारतापहरणे कारण न्तराभावादिति भावः ॥ ३० ॥

विदेह नव योगर्षियों से कहते हैं—आपके मुख से निकले हरि-कथामृत के सेवन से मेरी तृप्ति नहीं होती, क्योंकि मैं संसार के दुःख से दुःखी हूँ । वस्तुतः हरिकथामृत संसार के ताप से सन्तप्त प्राणि के लिए महौषध है ॥ ३० ॥

—×—

संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद् विविधदुःखदवार्दितस्य ॥ ३१ ॥

( १२।४।४० शुकः )

तदेवाह—संसारसिन्धुमिति । विविधदुःखमेव दवो दावानलः, तेनार्दितस्य पीडितस्य । अत उत्तितीर्षोः पुंसो भगवतो या लीलास्तासां याः कथाः ता एव रसः, तन्निषेवणमन्तरेणान्यः प्लव उत्तरणसाधनं न भवेत्, तथा चोपायान्तरासम्भवात् । तत्कथाश्रवणमेव यथाशक्ति निषेव्यमित्यर्थः ॥ ३१ ॥

शुकदेव जी परीक्षित् से कहते हैं—अनेक दुःखों के क्लेश से दुःखी होकर जो लोग अपार संसार-सागर के पार जाना चाहते हैं उनके लिए भगवान् पुरुषोत्तम की लीलाओं की कथा के रस के सेवन विना दूसरा कोई भी तरने का उपाय नहीं है ॥ ३१ ॥

—×—

कुतोऽशिवं त्वच्चरणाम्बुजासवं महन्मनस्तो मुखनिःसृतं क्वचित् ।
पिबन्ति ये कर्णपुटैरलं प्रभो देहभृतां देहकृदस्मृतिच्छिदम् ॥ ३२ ॥

( १०।८३।३ युधिष्ठिरादयः )

ननु अज्ञाननिवृत्त्या हि संसारनिवृत्तिर्भवति, कथं कथाश्रवणमात्रेण ? सत्यम्; अज्ञाननिवृत्त्युपायान्तराणां बहुविघ्नग्रस्तत्वात् साऽपि श्रवणेनैव सिद्ध्यतीति युधिष्ठिरवचनेनाह—कुतोऽशिवमिति । महतां मनस्तः सकाशाद् मुखद्वारतो निःसृतम्, क्वचित् कदाचिद् देहभृतां

देहधारिणां देहकृच्चासावस्मृतिश्च अविद्या तां छिनत्तीति तथा। देहकृदीश्वरस्तद्विषयाज्ञानच्छिदं वा ॥ ३२ ॥

धर्मराज युधिष्ठिर श्रीकृष्ण की स्तुति करते हैं—हे प्रभो ! जिसने सन्तों के मन से मुख द्वारा निकला हुआ जीवों के जन्म-मरण का कारण अविद्यानिवर्तक आपके चरणकमल का रस अपने कानों से एक बार भी पी लिया उसका अमंगल कैसे हो सकता है ? ॥ ३२ ॥

—×—

**विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हन्तुम्।**
**आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैस्तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति ॥ ३३ ॥**

( ११।६।१९ देवः )

नन्वज्ञाननिवृत्तिर्ज्ञानसाध्या, कथं कथातः स्यात् ? सत्यम्; विमलान्तःकरणे ज्ञानोदयः, तद्वैमल्यं कथात इत्याह देववाक्येन—बिभ्व्यस्तवेति। तव अमृतरूपा या कथा तदेवोदम् उदकं वहन्तीति, तथा कीर्तिनद्यः, तथा पादावनेजसरितो गङ्गाद्याश्च त्रिलोक्याः समलानि हन्तुं विभ्व्यः समर्थाः। केन प्रकारेण ? आनुश्रवं गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदः, तत्र भवं कीर्तिरूपं तीर्थम्, श्रुतिभिः श्रवणेन्द्रियैः अङ्घ्रिजं गाङ्गं चाङ्गसङ्गैः, एवं शुचिषदः स्वाश्रमधर्मस्थास्तव तीर्थद्वयमुपस्पृशन्ति सेवन्त इति ॥ ३३ ॥

देवता लोग भगवान् की स्तुति करते हैं—आपकी अमृततुल्य कथारूपी नदियाँ और आपके चरणकमल के प्रक्षालन से निकली हुई गंगा, तीनों लोको का पाप धोने में समर्थ हैं। इसीलिए आत्मशुद्धि के लिए प्रयत्नशील पुरुष कानों से तो वेदोक्त यश का श्रवण करते हैं और अंग-प्रत्यंग से गंगातीर्थ में स्नान करते हुए दोनों तीर्थों का सेवन करते हैं ॥ ३३ ॥

—×—

**तव विक्रीडितं ब्रह्मन् नृणां परममङ्गलम्।**
**कर्णपीयूषमास्वाद्य त्यजत्यन्यस्पृहां जनः ॥ ३४ ॥**

( ११।६।४४ उद्धवः )

वस्तुतस्तु कथाश्रवणं साक्षदेवाज्ञाननिवर्तकमित्याह उद्धववाक्येन द्वाभ्याम्—तव विक्रीडितमिति। विक्रीडितं लीलां कर्णपीयूषमास्वाद्य श्रुत्वा अन्यस्पृहाम् अन्येषु साध्यसाधनेषु स्पृहां त्यजन्ति[1] ॥ ३४ ॥

---

१. अयं भावः—यावत्तावद्रसास्वादरताः पीयूषे आस्वादिते यथा सर्वं तल्लवणकट्वम्लादिरसं त्यजन्ति, तद्वदिति क्वचिदधिकः पाठः।

उद्धवजी भगवान् श्रीकृष्ण से कहते हैं—हे कृष्ण ! आपकी लीला मनुष्यों का कल्याण करने वाली है। लोग उस लीला के कथामृत का पानकर दूसरी इच्छा नहीं करते ।। ३४ ।।

—×—

वयं त्विह महायोगिन् भ्रमन्तः[1] कर्मवर्त्मसु ।
त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ।। ३५ ।।
( ११।६।४८ उद्धवः )

किञ्च, वयं त्विति । कर्मवर्त्मसु किं कर्म किमकर्मेति । तावकैस्त्वद्भक्तैः सह त्वद्वार्तया त्वच्छ्रवणेनेत्यर्थः । तमः सविलासमज्ञानं तरिष्यामः ।। ३५ ।।

हे महायोगेश्वर ! हमलोग संसार में भटक रहे हैं। आपके भक्तों के साथ आपकी कथा-वार्ता करने से घोर अज्ञानान्धकार के पार उतर जाएँगे ।। ३५ ।।

—×—

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।
त्वत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ।। ३६ ।।
( ११।२०।९ श्रीकृष्णः )

ननु विचारेण कर्माकर्मनिर्णयः क्रियताम्, अन्यथा तत्त्यागे दोष स्यान्नेत्याह भगवद्वाक्येन—तावत्कर्माणीति । न निर्विद्येत न भोगेभ्यो विरज्येत, तावत्स्वर्गादिफलानि कर्माणि कुर्यादेव, विरक्तस्तु नित्यनैमित्तिके एव कुर्यादित्यर्थः । यदा तु मत्कथाश्रवणादौ, आदिशब्देन नामश्रवणादिश्रद्धा जायते तदा तद्विरोधित्वात् कर्माणि त्यजेदेव ।। ३६ ।।

भगवान् श्रीकृष्ण उद्धवजी से कहते हैं—जबतक वैराग्य का उदय न हो अथवा मेरी कथा सुनने में श्रद्धा न उत्पन्न हो जाय तबतक मनुष्यों को कर्म करना चाहिए ।। ३६ ।।

—×—

कर्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान् ।
आपाययति गोविन्दपादपद्मासवं मधु ।। ३७ ।।
( १।१८।१२ शौनकः )

---

१. त्यजन्त्यन्यस्पृहां जनाः—इति पाठान्तरम् ।

एतदेव विरक्तानां शौनकादीनां वचनेन स्पष्टयति—कर्मण्यस्मिन्निति। अस्मिन् कर्मणि सत्रे अनाश्वासे अविश्वसनीये वैगुण्यबाहुल्येन फलनिश्चयाभावात्। धूमेन धूम्रो विवर्ण आत्मा देहो येषां तेषामस्माक तानस्मान् इत्यर्थः। कर्मणि षष्ठी। आसवं मकरन्दं मधु मधुरम्॥ ३७॥

शौनकजी सूत से कह रहे है—अनुष्ठान में त्रुटि होने के कारण अविश्वसनीय यज्ञ कर्म में लगे रहने के कारण हम लोगों का शरीर धूम से धूमिल हो गया है। आप हम लोगों को गोविन्द के चरणकमलों का मीठा मकरन्द पिला रहे है॥ ३७॥

—×—

श्रुतस्य पुंसां सुचिरश्रवस्य नन्वञ्जसा सूरिभिरीडितोऽर्थः।
तत्तद्गुणानुश्रवणं मुकुन्दपादारविन्दं हृदयेषु येषाम्॥ ३८॥
(३।१३।४ विदुरः)

तस्माद् विवेकिना भगवत्कथाश्रवणमेव कर्तव्यमितरथा पाठादि व्यर्थं स्यादित्याह—श्रुतस्येति। पुंसां श्रुतस्याध्ययनस्यायमर्थः प्रयोजनम्, ईडितः कथितः। तद्भगवतः पादारविन्दं हृदयेषु येषां तेभ्यो भक्तेभ्यो विष्णोस्तद्गुणानाम् अनुश्रवणम्॥ ३८॥

विदुरजी मैत्रेय से कह रहे हैं—विद्वानों ने कहा है कि जिनके हृदय में सदा भगवान् श्रीकृष्ण के पादारविन्द विराजते हैं, अर्थात् जो सदा भगवान् के चरणों का ध्यान करते है उन भक्तों के मुख से भगवान् के गुणों का श्रवण करना या उन भक्तों का गुण-कीर्तन करना ही बड़े परिश्रम से किये गये अध्ययन का मुख्य फल है॥ ३८॥

—×—

छिन्नान्यधीरधिगतात्मगतिर्निरीह-
स्तत्तत्यजेऽछिनदिदं वयुनेन येन।
तावन्न योगगतिभिर्यतिरप्रमत्तो
यावद् गदाग्रजकथासु रतिं न कुर्यात्॥ ३९॥
(४।२३।१२ मैत्रेयः)

एवं योगिनामपीदमेव कृत्यमिति मैत्रेयवचनेनाह—छिन्नान्यधीरिति। छिन्ना अन्यधीर्देहात्मबुद्धिर्यस्य यतोऽधिगतात्मगतिः, अत एव निरीहः प्राप्तासु सिद्धिषु निस्पृहो येन वयुनेन ज्ञानेनेदं संशयपदमछिनत् चिच्छेद, तत् तत्यजे त्यक्तवान्, तत्प्रयत्नादप्युपररामेत्यर्थः। तस्य

योगसिद्धिष्वपि निःस्पृहत्वं युक्तमेवेत्याह। योगगतिभिस्तावन्नाप्रमत्तः, किन्तु प्रमत्तो भवति। यावत् तस्य श्रीकृष्णस्य कथासु न रतिः, तासु न लोभो जात इत्यर्थः ॥ ३९ ॥

मैत्रेय विदुर से कह रहे हैं—राजा पृथु की भेदबुद्धि नष्ट हो गई थी, आत्मज्ञान प्राप्त हो गया था, और अणिमादि सिद्धियों के प्राप्त होने पर भी उनमें उनकी अभिलाषा न रही। इसलिए उन्होंने जिस ज्ञान से आत्मा का आवरण करनेवाले अहङ्कार का समूल नाश कर दिया था उसका भी त्याग कर दिया। मुमुक्षु पुरुष जबतक भगवान् श्रीकृष्ण की कथाओं में प्रेम नहीं करता तबतक उसकी अणिमादि सिद्धियों में अनिच्छा नहीं होती। सारांश यह है कि राजा पृथु में भगवद्भक्ति थी अतः उन्हें सिद्धियों की इच्छा न थी ॥ ३९ ॥

—×—

तव कथामृततप्तजीवनं
कविभिरीडितं कल्मषापहम्।
श्रवणमङ्गलं श्रीमदाततं
भुवि गृणन्ति ये भूरिदा जनाः ॥ ४० ॥

(१०।३१।९ गोप्यः)

ननु कस्मादन्यत्र निःस्पृहत्वं युक्तम्, यस्माद्भगवतः कथाश्रवणातिरिक्तो लाभो नास्तीति गोपीनां वचनेनाह—तव कथेति। कथैवामृतम्। अत्र हेतुस्तप्तजीवनम्। प्रसिद्धामृतादुत्कर्षमाहुः। कविभिर्ब्रह्मविद्भिरपीडितं स्तुतं देवभोग्यं त्वमृतं तैस्तुच्छीकृतम्, किञ्च, कल्मषापहं काम्यकर्म-निरसनं तत्त्वमृतं नैवंभूतम्' किञ्च, श्रवणमङ्गलं श्रवणमात्रेण मङ्गलप्रदम्, न त्वनुष्ठानापेक्षम्, किञ्च, श्रीमत् सुशान्तम्। तत्तु मादकम्। एवंभूतं त्वत्कथामृतम् आततं यथा भवति तथा भुवि ये गृणन्ति निरूपयन्ति, ते जना भूरिदा बहुप्रदातारः। ततोऽधिको दाता नास्तीत्यर्थः। तथा च यं श्रावयति तस्याप्यल्पो लाभो नेति भावः ॥ ४० ॥

गोपियाँ भगवान् कृष्ण की स्मृति में कहती हैं—वास्तव में आपकी कथा अमृत है, क्योंकि वह सन्तप्त जनों को जिलाती है, पापों को नष्ट कर देती है, केवल सुनने मात्र से मंगल करती है, सदा शान्त है और वक्ताओं द्वारा फैलाई गई है। कवि लोग ऐसी प्रशंसा करते है कि जो आपकी अमृतरूपी कथा का विस्तारपूर्वक निरूपण करते हैं, वे जीवनदान देने वाले हैं ॥ ४० ॥

—×—

नहि भगवन्न घटितमिदं
त्वद्दर्शनान्नृणामखिलपापजयः ।
यन्नामसकृच्छ्रवणात्
पुक्कशोऽपि विमुच्यते साक्षात् ॥ ४१ ॥
( ६।१६।४४ चित्रकेतुः )

अत्र हेतुमाह—नहीति । हे भगवन् त्वद्दर्शनाद् यत् नृणाम् अखिलस्य पापस्य जयः[1] इदमघटितं न, किन्तु युक्तमेव; यतो यस्य ते नाम्नः सकृदपि एकवारमपि श्रवणात् पुक्कशश्चाण्डालोऽपि साक्षात्तेनैव शरीरेण विमुच्यते, सर्वतः पूतो भवति ॥ ४१ ॥

राजा चित्रकेतु भगवान् शेष की स्तुति करते है—हे भगवन् ! आपके दर्शन से मनुष्यों के सब पाप नष्ट हो जाते हैं यह कोई आश्चर्य की बात नहीं है, क्योंकि यदि चाण्डाल भी आपका नाम एक बार सुन ले तो वह संसार से मुक्त हो जाता है ॥ ४१ ॥

—×—

को नाम लोके पुरुषार्थसारवित्
पुरा कथानां भगवत्कथासुधाम् ।
आपीय कर्णाञ्जलिभिर्भवापहा-
महो विरज्येत विना नरेतरम् ॥ ४२ ॥
( ३।१३।५० मैत्रेयः )

नन्वेवमपि सर्वपावनत्वमायातम्, न तु लाभाधिकत्वमित्यत आह—को नाम लोके इति । पुरुषार्थानां सारवित्, पुरा कथानां पूर्वैः क्रियमाणानां कथानां मध्ये भगवतः कथासुधां भवापहां संसारनिवर्तिकाम् । नरेतरं पशुं विना को विरज्येत को न शृणुयादित्यर्थः ॥ ४२ ॥

मैत्रेयजी विदुर से कहते है—इस संसार में पशु के अतिरिक्त और ऐसा कौन है जो पुरुषार्थ के तत्त्व को जानकर प्राचीन कथाओं में से भगवान् श्रीकृष्ण की भवताप-निवर्तक कथासुधा को कानों से सुनकर फिर उससे विरक्त होगा ॥ ४२ ॥

—×—

---

१. क्षय इति पाठान्तरम् ।

नूनं दैवेन निहता ये चाच्युतकथासुधाम् ।
हित्वा शृण्वन्त्यसद्गाथां पुरीषमिव विड्भुजः ॥ ४३ ॥
( ३।३२।१९ श्रीकृष्णः )

किञ्च, ये भगवत्कथां हित्वा असद्गाथां श्रृण्वन्ति, ते पशुभ्योऽप्यधमा इत्याह—नूनमिति । चकारस्त्वर्थः । ये तु अच्युतकथासुधां हित्वा असत्कथां विषयवार्तां श्रृण्वन्ति ते नूनं निश्चितं दैवेन विधात्रा प्रतिकूलं श्रोत्रं दत्वा निहता विडम्बिताः तेषां बाधिर्यमेव श्रेय इति भावः । यद्वा निहताः सर्वपुरुषार्थशून्याः कृताः, असत्कथाश्रवणादरे दृष्टान्तः विड्भुजः शूकरादयः ॥ ४३ ॥

कपिल भगवान् देवहूति से कहते हैं—जो भगवान् श्रीकृष्ण के कथामृत को छोड़कर असत्कथाएँ सुनते हैं उनकी किस्मत फूटी है । वे अच्छे पदार्थ को छोडकर शूकर के समान विष्ठा खाते है ।।

—×—

यस्तूत्तमश्लोकगुणानुवादः
सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः ।
तमेव नित्यं शृणुयादभीक्ष्णं
कृष्णेऽमलां भक्तिमभीप्समानः ॥ ४४ ॥
( १२।३।१५ शुकः )

तस्मादसत्कथां विहाय भगवत्कथाश्रवणमेव कर्तव्यम् । तदेव हि परमा भक्तिरित्याह—यस्तूत्तमेति । गुणानुवादः संगीयते केनापि । तुशब्दोऽसद्वार्तामात्रव्यवच्छेदार्थः । अभीक्ष्णम् अमङ्गलघ्नः सकृद्गीतोऽपि वारं वारं विघ्ननिवर्तकः । तं श्रृणुयादेव नित्यं प्रत्यहम्, तत्राप्यभीक्ष्णं वारं वारम् । अमलां कामादिरहिताम् ॥ ४४ ॥

शुकदेवजी राजा परीक्षित् से कह रहे है—सारे अमंगल का नाश करनेवाले पुण्यकीर्ति भगवान् श्रीकृष्ण के गुणों का कीर्तन जिसका भक्तजन सदा गान करते हैं । भगवान् श्रीकृष्ण में शुद्धभक्ति चाहनेवाला पुरुष उसी कीर्तन का नित्य श्रवण करे ।। ४४ ।।

—×—

इत्थं परस्य निजवर्त्मरिरक्षयात्त-
लीलातनोस्तदनुरूपविडम्बनानि ।
कर्माणि कर्मकषणानि यदूत्तमस्य
श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ ४५ ॥

( १०।९०।४९ शुकः )

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलितविवेक
तैरभुक्तपरमहंसविष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्ध-
श्रीभगवद्भक्तिरत्नावल्यां चतुर्थं विरचनम् ।

एवं प्रकरणार्थमुपसंहरति—इत्थमिति । इत्थम् उक्तप्रकारेण निजवर्त्मनो भगवद्धर्ममार्गं-रिरक्षया रक्षणेच्छया आत्ता गृहीता लीलातनवो रामकृष्णावतारा येन तस्य भगवतः श्रीकृष्णस्य कर्मणि तदनुरूपाणि तत्तदवतारसदृशानि विडम्बनानि अनुकरणानि येषु तानि श्रूयात् शृणुयात्, कर्मकषणानि श्रोतुः कर्मनिवर्तकानि । अमुष्य यदूत्तमस्य अनुवृत्तौ सेवायां यस्येच्छा, स तत्कथामेव शृणुयादिति भावः ॥ ४५ ॥

इति श्रीभक्तिरत्नावल्याः टीकायां कान्तिमालायां चतुर्थं विरचनम् ॥

जो मनुष्य भगवत्पद पाने की आकांक्षा रखता है उसे चाहिये कि वह जिन्होंने धर्म-रक्षा के लिए शरीर धारण किया है उन यदुश्रेष्ठ भगवान् श्रीकृष्ण की मनुष्यावतारोचित चेष्टाओं के अनुकरण करनेवाले और जीवों के कर्मबन्धन को काटनेवाले चरितों का श्रवण किया करे ॥ ४५ ॥

## अथ पञ्चमं विरचनम्

इदं हि पुंसस्तपसः श्रुतस्य च
स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः।
अविच्युतोऽर्थः कविभिर्निरूपितो
य उत्तमश्लोकगुणानुवर्णनम्॥ १॥

(१।५।२२ नारदः)

अथ कीर्तनं निरूपयितुं विरचनमारभते, तत्र सर्वधर्मेषु हरिकीर्तनं श्रेष्ठमित्यभिप्रेत्याह— इदमिति। श्रुतादयो भावे निष्ठा। श्रुतं वेदाध्ययनम्। स्विष्टं यागादि सूक्तं मन्त्रादिजपो वाक्कौशलं वा। बुद्धिविचारेण निश्चयसामर्थ्यं दत्तं दानम् एतेषाम् इदमेवाविच्युतोऽर्थो नित्यं फलं किं तद् उत्तमश्लोकस्य गुणानुवर्णनं यद् ये कीर्तयन्ति, तैः सर्वं जन्मान्तरे कृतमिति बोद्धव्यम्। ये भगवन्तं न कीर्तयन्ति तेषामेतत्सर्वं व्यर्थमिति भावः॥ १॥

नारदजी भगवान् व्यास से कह रहे है—कवियों ने यही निश्चय किया है कि पवित्र-कीर्ति नारायण का गुण-कीर्तन ही मनुष्यों के तप, शास्त्राध्ययन, यज्ञ, स्वाध्याय, बुद्धि और दान का यथार्थ फल है॥ १॥

—×—

मृषा गिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोक्षजः।
तदेव सत्यं तदुहैव मङ्गलं तदेव पुण्यं भगवद्गुणोदयम्॥ २॥

एतदेव कीर्तनफलं दर्शयन् स्पष्टयति द्वाभ्याम्। मृषा गिरः मिथ्यापवादः असतीः असत्यः असतां याः कथास्ताः, यद् यासु उत्तमश्लोकस्य यशोऽनुगीयत इति॥ २॥

सूतजी शौनक से कहते हैं—वे वाणियाँ जिनमें भगवान् विष्णु के गुणों का वर्णन न हो, किन्तु विषयासक्त पुरुषों की कथाएँ हों, मिथ्या तथा असत्य हैं। वही कथा सत्य है, वही मंगलकारी है, वही पवित्र है जिसमें भगवान् के गुणों का वर्णन हो॥ २॥

—×—

तदेव रम्यं रुचिरं नवं नवं
तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणं नृणां
यदुत्तमश्लोकयशोऽनुगीयते ॥ ३ ॥
( १२।१२।४९-५० सूतः )

यत् तदेव सत्यं तदेव हि मङ्गलम् । ह इति हर्षे । भगवद्गुणानाम् ऐश्वर्यादीनां कीर्तयितरि अभ्युदयो यस्मात् । नवं नवं यथा भवति तथा रुचिरं रुचिप्रदं महा उत्सवो यस्मात् ॥ ३ ॥

जिस वाणी में पवित्रकीर्ति भगवान् के यश का कीर्तन किया जाता है । वही वाणी नित्य नूतन सुन्दर एवं मनोहर है, वही मन को निरन्तर आनन्द देनेवाली है और वही वाणी प्राणिमात्र के शोकसमुद्र को सुखा डालती है ॥ ३ ॥

—×—

आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततः सद्यो विमुच्येत तद्बिभेति स्वयं भयम् ॥ ४ ॥
( १।१।१४ शौनकादयः )

न चैतानि असम्भावितानि, यतो यन्नाममात्रकीर्तनेन मुक्तिरपि साध्यत इति । संसृतिमापन्नः प्राप्तो विवशोऽपि गृणन् । ततः संसृतेः । अत्र हेतुः यद्यतो नाम्नः भयमपि स्वयं बिभेति कालोऽपि ॥ ४ ॥

शौनक सूतजी से कहते हैं—इस भयंकर संसार को प्राप्त हुआ पुरुष यदि विवश होकर भी भगवान् का नाम ले ले तो वह तत्काल संसार से छुटकारा पा जाता है, क्योंकि उससे भय का कारण स्वयं महाकाल भी डरता है ॥ ४ ॥

—×—

न यद्वचश्चित्रपदं हरेर्यशो
जगत्पवित्रं प्रगृणीत कर्हिचित् ।
तद्वायसं तीर्थमुशन्ति मानसा
न यत्र हंसा निरमन्त्युशिक्क्षयाः ॥ ५ ॥

तस्माद्वासुदेवाविषयकत्वाद् वाक्चातुर्यादि व्यर्थमिति युक्तमुक्तमित्याह—यद्वच इति। चित्रपदमपि यद्वचोहरेर्यशो न प्रगृणीत तद्वायसं तीर्थं काकतुल्यानां रतिस्थानम् उशन्ति मन्यन्ते। कुतः मानसा सत्त्वप्रधाने मनसि वर्तमाना हंसा साधवः यतयो यत्र न निरमन्ति नितरां न रमन्ते। उशिक्क्षयाः उशिक् कमनीयं ब्रह्माख्यं क्षयो निवासो येषां ते। यथा प्रसिद्धा हंसा मानसे सरसि चरन्तः कमनीयपद्मखण्डनिवासाः, त्यक्तविचित्रान्नादियुक्तेऽप्युच्छिष्टगर्ते काकक्रीडा-स्थाने न रमन्त इति ॥ ५ ॥

नारदजी व्यासजी से कहते है—वह कथा ललित शब्दविन्यास से युक्त क्यों न हो, यदि उसमें नारायण के जगत्-पवित्रकारी यश का वर्णन न हो, तो उसे सज्जन काकतीर्थ कहते है। उस अपवित्र काकतीर्थ में मानसरोवर के हंस नही रमते। तात्पर्य यह है कि अलंकारादि से परिपूर्ण होने पर भी भगवद्गुणगान से रहित कविता सन्तों को नहीं रुचती[१] ॥ ५ ॥

—×—

तद्वाग्विसर्गो जनताघविप्लवो<br>
यस्मिन् प्रतिश्लोकमबद्धवत्यपि।<br>
नामान्यनन्तस्य यशोऽङ्कितानि<br>
यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ६ ॥<br>
( १।५।१०—११ नारदः )

विनापि पदचातुर्यं भगवत्प्रधानं वचः पवित्रमित्याह—तद्वाग्विसर्ग इति। स चासौ वाग्विसर्गः वाचः प्रयोगः। जनानां समूहो जनता। तस्याघं प्लावयति नाशयतीति। तथा यस्मिन् वाग्विसर्गे अबद्धवत्यपि अपशब्दादियुक्तेऽपि प्रतिश्लोकमनन्तस्य यशसा अङ्कितानि नामानि भवन्ति। तत्र हेतुः—यद् यानि नामानि साधवो महान्तो वक्तरि सति शृण्वन्ति। श्रोतरि सति गृणन्ति। अन्यदा तु स्वयमेव गायन्ति कीर्तयन्तीति ॥ ६ ॥

जिस वाक्य में अनन्त यशों से अङ्कित भगवान् के नाम एवं गुणों का कीर्तन किया गया है वह चाहे अपशब्दादि युक्त ही क्यों न हो, तो भी वह मनुष्यों के पाप का नाश करनेवाला है। अतः भक्त लोग उसे सुनते है, कीर्तन करते है और स्वयं गाते है ॥ ६ ॥

—×—

१. जिस प्रकार मानसरोवर के मानी हंस अपवित्र काकतीर्थ मे नही रमते उसी प्रकार आत्मज्ञानी एवं मनस्वी परमहंस ईश्वर-गुणगान-हीन वचनों से प्रसन्न नही होते।

ततोऽन्यथा किञ्चन यद्विवक्षतः
पृथग्दृशः तत्कृतरूपनामभिः ।
न कर्हिचित् क्वापि च दुःस्थिता मति-
र्लभेत वाताहतनौरिवास्पदम् ॥ ७ ॥
( १।५।१४ नारदः )

किं च हरिकीर्तनं विना कस्यापि चित्तं तत्त्वाभिमुखं न भवतीत्याह—ततोऽन्यथेति । ततः उरुक्रमचेष्टितात् पृथग् दृशः । अत एवान्यथा प्रकारान्तरेण यत्किञ्चिदर्थान्तरं विवक्षतः पुरुषस्य तया विवक्षया कृतैः स्फुरितैरूपैर्नामभिश्च वक्तव्यत्वेनोपस्थितैः दुःस्थिता अनवस्थिता सती मतिः कदाचित्क्वापि विषये आस्पदं स्थानं न लभेत, वातेनाहता आघूर्णिता नौरिव ॥ ७ ॥

जो भगवद्गुणकथन को छोड़कर दूसरी बातों को कहना चाहता है और नाना नाम-रूप का वर्णन करता है, उसकी बुद्धि तूफान की मारी नाव की तरह कभी भी एक ठिकाने नहीं रहती ।। ७ ॥

—×—

प्रगायतः स्ववीर्याणि तीर्थपादः प्रियश्रवाः ।
आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥ ८ ॥
( १।६।३४ नारदः )

हरिकीर्तनाच्च सद्यो भगवति परमानन्द एव मतिः स्थिरा भवतीति नारदानुभवेनाह—प्रगायत इति । तीर्थपादो भगवान् । प्रियश्रवाः प्रियकीर्तिः चेतसि दर्शनं याति प्रकाशते आहूतो यथा तद्वदित्यर्थः ॥ ८ ॥

नारायण, जिनका चरण ही तीर्थ है, अपने यश का सुनना बहुत पसन्द करते है । जब मैं उनका गान करता हूँ तब मानो गुहराये गये के समान शीघ्र हृदय मे उपस्थित होकर दर्शन दे देते हैं ।। ८ ।।

—×—

या याः कथा भगवतः कथनीयोरुकर्मणः ।
गुणकर्माश्रयाः पुंभिः संसेव्यास्ता बुभूषुभिः ॥ ९ ॥
( १।१८।१० सूतः )

तस्मात् फलितमाह—या याः कथेति । कथनीयानि उरूणि कर्माणि यस्य संसेव्याः नित्यं कीर्तयितव्या बुभूषुभिः निर्भयीभवितुमिच्छद्भिः, अन्यथा भयं न निवर्तत इति भावः ॥ ९ ॥

सूतजी शौनक से कहते है—भगवान् श्रीकृष्ण जिनके वर्णन करने योग्य बहुत बड़े कर्म हैं उनके वात्सल्य आदि गुण और सृष्टि आदि कर्मों की जो कथाएँ हैं, उनका श्रवण अपना कल्याण चाहनेवाले मनुष्यों को अवश्य करना चाहिए ॥ ९ ॥

—×—

एतन्निर्विद्यमानानामिच्छतामकुतो भयम् ।
योगिनां नृपनिर्णीतं हरेर्नामानुकीर्तनम् ॥ १० ॥

( २।१।११ शुकः )

एतदेव शुकवाक्येनाह—एतन्निर्विद्यमानानामिति । इच्छतां कामिनां तत्फलसाधनमेतदेव । निर्विद्यमानानां मुमुक्षुणां मोक्षसाधनमेतदेव । योगिनां ज्ञानिनां फलं चैतदेव निर्णीतम्, नात्र प्रमाणं वक्तव्यमित्यर्थः ॥ १० ॥

शुकदेवजी राजा परीक्षित् से कहते हैं—हे राजन् भगवान् के नामों का कीर्तन, जिसमें किसी प्रकार का भय नही है, भोग चाहनेवालों के लिए भोग का साधन है, मुक्ति चाहनेवालों के लिए मोक्ष का साधन है और ज्ञानी लोगों के लिए ज्ञान का फल भी यही है । अर्थात् साधकों और सिद्धों का इससे बढ़कर दूसरा कोई भी कल्याणकारी साधन नहीं है ॥ १० ॥

—×—

एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः ।
भवसिन्धुप्लवो दृष्टो हरिचर्यानुवर्णनम् ॥ ११ ॥

( १।६।३५ नारदः )

ये तु विषयवासनाबद्धा गृहिणः तेषां मोक्षोऽपि कीर्तनादेव भवतीत्याह—एतद्ध्यातुरिति । मात्रा विषयाः तेषां स्पर्शाः भोगास्तेषामिच्छया आतुराणि चित्तानि येषां हरिचर्यानुवर्णनं यद् एतदेव भवसिन्धौ प्लवः, न केवलं श्रुतिप्रामाण्येन, किन्त्वन्वयव्यतिरेकाभ्यां दृष्ट एवेत्यर्थः ॥ ११ ॥

नारदजी व्यासजी से कहते हैं—जिनका मन सदा विषय-भोग की लालसा मे व्याकुल रहता है उन जीवों के लिए श्रीहरि के चरित्रों का कीर्तन ही संसार-समुद्र पार उतरने का साधन नौका है ॥ ११ ॥

—×—

यस्यावतारगुणकर्मविडम्बनानि
नामानि येऽसुविगमे विवशा गृणन्ति ।
तेऽनेकजन्मशमलं सहसैव हित्वा
संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥ १२ ॥
( ३।९।१५ ब्रह्मा )

अस्तु सदा कीर्तनम् अन्तकालेऽपि कृतं मोक्षाय भवतीति ब्रह्मवचनेनाह—यस्येति । अवतारादीनां विडम्बनमनुकरणमस्ति येषु तत्रावतारविडम्बनानि देवकीनन्दन इत्यादीनि गुणविडम्बनानि सर्वज्ञो भक्तवत्सल इत्यादीनि । कर्मविडम्बनानि गोवर्द्धनोद्धारणः कंसारातिरित्यादीनि । असुविगमे विवशा अपि गृणन्त्युच्चारयन्ति । शमलं पापं न केवलं पापम्, किन्त्वपावृत्तं निरस्तावरणम् ऋतं ब्रह्म प्राप्नुवन्ति ॥ १२ ॥

ब्रह्माजी भगवान् श्रीकृष्ण की स्तुति करते हैं—जो लोग मृत्यु के समय विवश होकर भी भगवान् के अवतार गुण और कर्म के वाचक नामों का एक बार भी संकीर्तन करते है वे अनेक जन्मों के पापों से मुक्त होकर तुरन्त आवरणरहित सत्यस्वरूप ब्रह्मपद को प्राप्त हो जाते हैं । मैं उस अजन्मा भगवान् की शरण लेता हूँ ॥ १२ ॥

—×—

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद् व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ १३ ॥

एतदेव सातिशयं विष्णुदूतवाक्येन स्पष्टयति—अयमिति । अयम् अजामिलो ब्राह्मणः, यद् यस्माद् विवशोऽपि हरेर्नाम व्याजहार उच्चारितवान्, अतः जन्मकोटिकृतानामपि अंहसां पापानां कृतनिर्वेशः कृतप्रायश्चित्त:, न केवलं प्रायश्चित्तमात्रं हरेर्नाम, अपि तु स्वस्त्ययनं मोक्षसाधनमपीति ॥ १३ ॥

विष्णुदूत यमदूतों से कहते है—यह अजामिल कोटि जन्मों के पापों का प्रायश्चित्त कर चुका जबकि मरते समय विवश होकर उसने कल्याणकारी श्रीहरि का नाम उच्चारण किया ॥ १३ ॥

—×—

एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम् ।
यदा नारायणायेति जगाद चतुरक्षरम् ॥ १४ ॥

ननु कर्मसाद्गुण्यकरं हरेर्नामेति युक्तम्, स्वातन्त्र्येण तु कथमघनिवर्तकं तत्र आहुः— एतेनैवेति। अघोनः अघवतो यद् आ इति छेदः, आ ईषद् आभासमात्रं चतुरक्षरं यन्नाम तज्जगाद। एतेनैव केवलेनैव चतुरक्षरमित्यनेन आधिक्यं च दर्शितम्। कथं जगाद? नारायण आय एहि आगच्छ इत्येवं विक्रोशरूपेण पुत्राह्वानेन। अयं भावः—यथा प्रमाणबलात् कर्मशुद्धिहेतुत्वं नाम्नाम्, एवं निरपेक्षप्रायश्चित्तत्वमपि। अत एव इत्यवधारणद्वयम् ॥ १४ ॥

जब इस अजामिल ने पहले भोजन आदि के समय 'हे नारायण आवो' यों चार अक्षरवाले नारायण नाम का उच्चारण किया था, तभी इस पापी का पापनाशक प्रायश्चित्त हो चुका था[1] ॥ १४ ॥

— × —

स्तेनः सुरापो मित्रधुक् ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥ १५ ॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ १६ ॥

---

१. अजामिल जाति का ब्राह्मण था, पर था बड़ा दुराचारी। चोरी और डकैती करना उसका मुख्य कर्तव्य था। शूद्र जाति की औरत के गर्भ से उसको एक पुत्र भी पैदा हुआ था जिसका नाम उसने नारायण रखा था। मरते समय अजामिल ने यमदूतों को देख घबडाकर अपने पुत्र नारायण को पुकारा। प्राण निकलने पर यमदूतों ने उसे ले जाना चाहा, पर नारायण शब्द के उच्चारण के कारण विष्णुदूत तत्काल उपस्थित होकर यमदूतों के हाथ से उसे छुड़ाकर वैकुण्ठ में ले गये। नाम-महिमा का यह समुज्ज्वल उदाहरण है देखिए श्रीमद्भागवत षष्ठ स्कन्ध—

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद् व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ ८।२।७।
एतेनैव ह्यघोनस्य कृतं स्यादघनिष्कृतम् ।
यदा नारायणायेति जगाद चतुरक्षरम् ॥ ८।२।८।
अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ।
सङ्कीर्तितमघं पुंसां दहेदेधो यथानलः ॥ ८।२।१८।

ननु कामकृतानां बहूनां पातकानां सहस्रश आवर्तितानां द्वादशाब्दादिकोटिभिरपि अनिवर्त्यानामेकमेव प्रायश्चित्तं कथं स्यात्तत्राहुः द्वाभ्याम्—स्तेन इत्याभ्याम्। सुनिष्कृतं श्रेष्ठं प्रायश्चित्तमिदमेव। अत्र हेतुः—यतो नामव्याहरणात् तद्विषया नामोच्चारकपुरुषविषया मदीयोऽयं मया सर्वतो रक्षणीय इति विष्णोर्मतिर्भवति ।। १५-१६ ।।

ननु बहूनां पातकानां मन्वादिभिर्यथातथं प्रतिपादितानि कृच्छ्रचान्द्रायणादिवत् कर्माणि प्रायश्चित्तानि सन्ति तत् किमिति केवलं हरिनामैवेत्याशङ्क्य। इति अधिकः पाठः मुद्रिते पुस्तके दृश्यते ॥

चोर, शराबी, मित्रद्रोही, ब्रह्मघाती, गुरुपत्नीगामी, स्त्री, राजा, पिता और गौ की हत्या करनेवाले और भी सब तरह के पातकी के लिए भगवान् विष्णु के नाम का उच्चारण सबसे बढ़कर प्रायश्चित्त है, क्योंकि भगवान् के नाम का उच्चारण करने से नामोच्चारण करनेवालों पर भगवान् की आत्मीय बुद्धि हो जाती है ॥ १५-१६ ॥

—×—

न निष्कृतैरुदितैर्ब्रह्मवादिभि-<br>
स्तथा विशुद्ध्यत्यघवान् व्रतादिभिः।<br>
यथा हरेर्नामपदैरुदाहृतै-<br>
स्तदुत्तमश्लोकगुणोपलम्भकम् ॥ १७ ॥

अस्य प्रायश्चित्तस्य श्रेष्ठत्वमेवोपपादयति द्वाभ्याम्। ब्रह्मवादिभिः मन्वादिभिः उक्तैर्व्रतादिभिर्निष्कृतैस्तथा न शुद्ध्यति, उदाहृतैरुच्चारितैर्यथा नाम पदैरित्यनेन मां पाहीत्यादिक्रियायोगेऽपि नापेक्षित इति दर्शितः। किं च नामपदोच्चारणं उत्तमश्लोकस्य गुणानां चोपलम्भकं ज्ञापकं भवति, न तु कृच्छ्रचान्द्रायणादिवत् पापनिष्कृतिमात्रोपक्षीणमित्यर्थः ॥ १७ ॥

पापी लोग श्रीहरि का नाम लेते ही जैसे तुरन्त पवित्र हो जाते हैं वैसे मनु आदि द्वारा कहे गये व्रतादि प्रायश्चित्तों से निर्मल नहीं होते, क्योंकि नाम का उच्चारण उत्तम कीर्तिवाले भगवान् के सम्पूर्ण गुणों का प्रकाश करता है ॥ १७ ॥

—×—

नैकान्तिकं तद्धि कृतेऽपि निष्कृते
मनः पुनर्द्धावति चेदसत्पथम्।
तत्कर्म निर्हारमभीप्सतां हरे-
र्गुणानुवादः खलु सत्त्वभावनः ॥ १८ ॥

नैकान्तिकं नात्यन्तशोधकं तन्निष्कृतम्, यस्मिन् कृतेऽपि असत्पथे पापमार्गे मनो धावति चेत् कर्मणां पापानां निहारम् आत्यन्तिकं नाशमिच्छतां हरेर्गुणानुवाद एव प्रायश्चित्तम्, यतोऽसौ खलु सत्त्वभावनः चित्तशोधकः ॥ १८ ॥

प्रायश्चित्त करने पर भी अत्यन्त शुद्धि न होने से फिर भी यदि मन पाप करता है तो समझना चाहिए कि प्रायश्चित्त पापों का समूल विनाशक नहीं है। इसलिए जो पापों का जड़ से विनाश करना चाहे तो केवल हरि का गुणगान करे, क्योंकि हरि का गुणानुवाद अविद्या का नाश कर चित्त को अत्यन्त शुद्ध कर देता है ॥ १८ ॥

—×—

अथैनं मापनयत कृताशेषाघनिष्कृतम्।
यदसौ भगवन्नाम म्रियमाणः समग्रहीत् ॥ १९ ॥

एवमाशङ्काः परिहृत्य अजामिलनेतॄन् यमदूतानादिशन्ति—अथैनमिति। अथ तस्मादेनं मा अपमार्गे नयत, यतः कृतमशेषाणामघानां निष्कृतं येन यद्यस्मात्समग्रहीत् सम्पूर्णमुच्चारितवान् नामैकदेशेनाप्यलमिति भावः। म्रियमाण इत्यनेन पापान्तरासम्भव उक्तः। न तु तत्कालीनत्वमेव विवक्षितम्, तदानीं कृच्छ्रादिविधिवद् नामोच्चारणविधेरप्यसम्भवात्, न च विधिं विना काकतालीयनामोच्चारणं पापहरमित्यत्रास्ति प्रमाणमिति ॥ १६ ॥

चूँकि इस अजामिल ने मरते समय हरि का नाम लिया था जिससे इसके समस्त पापों का विनाश हो चुका है अब इसको नरक के मार्ग पर मत ले जाओ ॥ १९ ॥

—×—

सांकेत्यं परिहास्यं वा स्तोभं हेलनमेव वा।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ २० ॥

नन्वयं पुत्रनामाग्रहीत्, न तु भगवन्नाम। तत्राहुः—साङ्केत्यमिति। पारिहास्यं परिहसेन कृतं स्तोभं गीतालापपूरणार्थं कृतम्। हेलनं किं विष्णुनेति। सावज्ञमपि वैकुण्ठनामोच्चारणम्॥ २०॥

पुत्रादि के नाम के संकेत से, परिहास से, गीत के अलाप को पूरा करते समय या अपमान करने के लिए भी यदि भगवान् का नाम लिया तो उससे सब पापों का नाश हो जाता है॥ २०॥

—×—

पतितः स्खलितो भग्नः सन्दष्टस्तप्त आहतः।
हरिरित्यवशेनाह पुमान्नार्हति यातनाम्॥ २१॥

ननु नायं संकल्पपूर्वकं वैकुण्ठनामाग्रहीत्, किन्तु पुत्रस्नेहपरवशः सन् तत्राह—पतित इति। अवशेनापि हरिरित्याह। स यातनां नार्हति पुमानित्यनेन नात्र वर्णाश्रमादिनियम इत्युक्तम्। अवशत्वमेवाह—पतितः प्रासादादिभ्यः। स्खलितः मार्गे। भग्नो भग्नगात्रः। संदष्टो सर्पादिभिः। तप्तो ज्वरादिना। आहतो दण्डादिना॥ २१॥

गिर जाने पर, पैर फिसलने पर, शरीर के किसी अंग के टूट जाने पर, किसी जन्तु से काटे जाने पर, ज्वरादि रोग से दुःखी होने पर या चोट लग जाने पर विवश होकर हरि का नाम बोल उठे तो मनुष्य नरक-यातना से बच जाता है॥ २१॥

—×—

गुरूणां च लघूनां च गुरूणि च लघूनि च।
प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः॥ २२॥

ननु महतः पापस्य महदेव प्रायश्चित्तं युक्तम्, न तु अल्पं नामग्रहणमात्रं पापतारतम्येन कृच्छ्रादितारतम्यवत्। तत्राहुः द्वाभ्याम्—गुरूणामित्याभ्याम्। गुरूणां पापानां गुरूणि प्रायश्चित्तानि लघूनां च लघूनि तारतम्यं ज्ञात्वा मन्वादिभिरुक्तानि। अतस्तत्र तथैव व्यवस्था, हरिनाम्नां तु नेयं व्यवस्थोक्ता, विष्णोः स्मरणमात्रेण मुच्यते सर्वपातकैरिति वचनात्। न च सुराबिन्दुपानेन महापातकत्वस्मरणवद् नाम्नस्तत्प्रायश्चित्तत्वस्मरणस्यायमतिभार इति॥ २२॥

महर्षियों ने विचार करके बड़े पापों के लिए बड़े प्रायश्चित्त और छोटे पापों के लिए छोटे प्रायश्चित्तों की व्यवस्था की है, किन्तु हरि के नाम-स्मरण करने के विषय में वह व्यवस्था नहीं है, क्योंकि भगवन्नाम-स्मरण करते ही सारे पाप नष्ट हो जाते हैं, चाहे बड़े हों या छोटे ॥ २२ ॥

—×—

तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः ।
नाधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ॥ २३ ॥

किञ्च, तैस्तानीति तैस्तपोदानादिभिः तान्यघानि एव पूयते नश्यन्ति, अधर्माज्जातं मलिनं तु तस्य हृदयं पापकर्तुः, यद्वा तेषामघानां हृदयं सूक्ष्मरूपं संस्काराख्यं न शुद्ध्यति तदपीशाङ्घ्रिसेवया प्रकरणात् कीर्तनेनैव शुद्ध्यतीत्यर्थः । अयं भावः—महान्त्यपि पापानि सकृदुच्चरितेनैव नाम्ना नश्यन्ति सकृत्प्रवर्तितेन दीपेन गाढध्वान्तमिव । तदावृत्त्या तु पापान्तरस्यानुत्पत्तिर्दीपधारणा इव तमोन्तरस्य । ततश्च वासनाक्षयाद् हृदयशुद्धिः, एतदर्थमेव तत्र तत्रावृत्तिविधानं पापक्षयश्च भवति स्मरताम् अहर्निशमित्यादिषु, तदेवात्राप्युक्तम्—गुणानुवादः खलु सत्त्वभावनः, तदपीशाङ्घ्रिसेवयेति । अतोऽस्य हरिनाम्नैव पापक्षयः, वासनाक्षयस्तु महापुरुषदर्शनादिति भावः ॥ २३ ॥

उन तप, दान, व्रत, उपवास आदि प्रायश्चित्तो से केवल पापों का ही नाश होता है, परन्तु अधर्म से मलिन हुए पापी का हृदय शुद्ध नहीं होता। वह तो भगवान् के पादारविन्द की सेवा से ही शुद्ध होता है ॥ २३ ॥

—×—

अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ।
संकीर्तितमघं पुंसा दहेदेधो यथानलः ॥ २४ ॥

ननु प्रायश्चित्तमिदमपि इति ज्ञात्वा नोक्तमिति चेत्तत्राह—अज्ञानादिति । बालकेन अज्ञानादपि प्रक्षिप्तोऽग्निर्यथा काष्ठराशिं दहति तद्वत् ॥ २४ ॥

जैसे आग इन्धन को जला देती है वैसे ही नारायण के नाम का कीर्तन चाहे जान कर करे चाहे अनजान में करे। मनुष्य के सब पापों को भस्म कर देता है ॥ २४ ॥

—×—

नन्वयं पुत्रनामाग्रहीत्, न तु भगवन्नाम। तत्राहुः—साङ्केत्यमिति। पारिहास्यं परिहसेन कृतं स्तोभं गीतालापपूरणार्थं कृतम्। हेलनं किं विष्णुनेति। सावज्ञमपि वैकुण्ठ-नामोच्चारणम्॥ २०॥

पुत्रादि के नाम के संकेत से, परिहास से, गीत के अलाप को पूरा करते समय या अपमान करने के लिए भी यदि भगवान् का नाम लिया तो उससे सब पापों का नाश हो जाता है॥ २०॥

—×—

पतितः स्खलितो भग्नः सन्दष्टस्तप्त आहतः।
हरिरित्यवशेनाह पुमान्नार्हति यातनाम्॥ २१॥

ननु नायं संकल्पपूर्वकं वैकुण्ठनामाग्रहीत्, किन्तु पुत्रस्नेहपरवशः सन् तत्राह—पतित इति। अवशेनापि हरिरित्याह। स यातनां नार्हति पुमानित्यनेन नात्र वर्णाश्रमादिनियम इत्युक्तम्। अवशत्वमेवाह—पतितः प्रासादादिभ्यः। स्खलितः मार्गे। भग्नो भग्नगात्रः। संदष्टो सर्पादिभिः। तप्तो ज्वरादिना। आहतो दण्डादिना॥ २१॥

गिर जाने पर, पैर फिसलने पर, शरीर के किसी अंग के टूट जाने पर, किसी जन्तु से काटे जाने पर, ज्वरादि रोग से दुःखी होने पर या चोट लग जाने पर विवश होकर हरि का नाम बोल उठे तो मनुष्य नरक-यातना से बच जाता है॥ २१॥

—×—

गुरूणां च लघूनां च गुरूणि च लघूनि च।
प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः॥ २२॥

ननु महतः पापस्य महदेव प्रायश्चित्तं युक्तम्, न तु अल्पं नामग्रहणमात्रं पापतारतम्येन कृच्छ्रादितारतम्यवत्। तत्राहुः द्वाभ्याम्—गुरूणामित्याभ्याम्। गुरूणां पापानां गुरूणि प्रायश्चि-त्तानि लघूनां च लघूनि तारतम्यं ज्ञात्वा मन्वादिभिरुक्तानि। अतस्तत्र तथैव व्यवस्था, हरिनाम्नां तु नेयं व्यवस्थोक्ता, विष्णोः स्मरणमात्रेण मुच्यते सर्वपातकैरिति वचनात्। न च सुराबिन्दु-पानेन महापातकत्वस्मरणवद् नाम्नस्तत्प्रायश्चित्तत्वस्मरणस्यायमतिभार इति॥ २२॥

महर्षियों ने विचार करके बड़े पापों के लिए बड़े प्रायश्चित्त और छोटे पापों के लिए छोटे प्रायश्चित्तों की व्यवस्था की है, किन्तु हरि के नाम-स्मरण करने के विषय में यह व्यवस्था नहीं है, क्योंकि भगवन्नाम-स्मरण करते ही सारे पाप नष्ट हो जाते हैं, चाहे बड़े हों या छोटे ॥ २२ ॥

—×—

तैस्तान्यघानि पूयन्ते तपोदानव्रतादिभिः ।
नाधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ॥ २३ ॥

किञ्च, तैस्तानीति तैस्तपोदानादिभिः तान्यघानि एव पूयते नश्यन्ति, अधर्माज्जातं मलिनं तु तस्य हृदयं पापकर्तुः, यद्वा तेषामघानां हृदयं सूक्ष्मरूपं संस्काराख्यं न शुद्धयति तदापीशाङ्घ्रि-सेवया प्रकरणात् कीर्तनेनैव शुद्धयतीत्यर्थः । अयं भावः—महान्त्यपि पापानि सकृदुच्चरितेनैव नाम्ना नश्यन्ति सकृत्प्रवर्तितेन दीपेन गाढध्वान्तमिव । तदावृत्त्या तु पापान्तरस्यानुत्पत्तिर्दीप-धारणा इव तमोन्तरस्य । ततश्च वासनाक्षयाद् हृदयशुद्धिः, एतदर्थमेव तत्र तत्रावृत्तिविधानं पापक्षयश्च भवति स्मरताम् अहर्निशमित्यादिषु, तदेवात्राप्युक्तम्—गुणानुवादः खलु सत्त्वभावनः, तदपीशाङ्घ्रिसेवयेति । अतोऽस्य हरिनाम्नैव पापक्षयः, वासनाक्षयस्तु महापुरुषदर्शना-दिति भावः ॥ २३ ॥

उन तप, दान, व्रत, उपवास आदि प्रायश्चित्तो से केवल पापों का ही नाश होता है, परन्तु अधर्म से मलिन हुए पापी का हृदय शुद्ध नहीं होता । वह तो भगवान् के पादारविन्द की सेवा से ही शुद्ध होता है ॥ २३ ॥

—×—

अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ।
संकीर्तितमघं पुंसा दहेदेधो यथानलः ॥ २४ ॥

ननु प्रायश्चित्तमिदमपि इति ज्ञात्वा नोक्तमिति चेत्तत्राह—अज्ञानादिति । बालकेन अज्ञानादपि प्रक्षिप्तोऽग्निर्यथा काष्ठराशिं दहति तद्वत् ॥ २४ ॥

जैसे आग इन्धन को जला देती है वैसे ही नारायण के नाम का कीर्तन चाहे जान कर करे चाहे अनजान में करे । मनुष्य के सब पापों को भस्म कर देता है ॥ २४ ॥

—×—

यथागदं वीर्यतममुपयुक्तं यदृच्छया।
अजानतोऽप्यात्मगुणं तथा मन्त्रोऽप्युदाहृतः॥ २५॥
( ६।२।७-१९ विष्णुदूताः )

नन्वेवमपि परिषदनुपदिष्टं श्रद्धाहीनं च कथं प्रायश्चित्तं भवेत्तत्राह—यथागदमिति। अगदमौषधं वीर्यवत्तममपि वक्तव्ये वीर्यतम मित्युक्तं यदृच्छया श्रद्धाहीनमपि उपयुक्तं भक्षितं परिषद्मुखादजानतः स्वगुणमारोग्यं कुर्याद् मन्त्रोऽपि नामात्मकः, तथा स्वकार्यं कुर्यादेव, नहि वस्तुशक्तिं श्रद्धादिकमपेक्षते॥ २५॥

जैसे कोई तेज दवा किसी मनुष्य को एकाएक दी जाय जो उसके गुण को नहीं जानता है तब भी उसका असर खानेवाले पर होता ही है, वैसे ही नामरूप मन्त्र भी उच्चारण करने पर अपना गुण अवश्य दिखाता ही है॥ २५॥

—×—

एवं स विप्लावितसर्वधर्मा
दास्याः पतिः पतितो गर्ह्यकर्मा।
निपात्यमानो निरये हतव्रतः
सद्यो विमुक्तो भगवन्नाम गृह्णन्॥ २६॥

एवमजामिलप्रकरणमुपसंहरति—एवमिति। विप्लविताः सर्वे धर्मा येन हतं व्रतं स्वदार-नियमादि यस्य स भगवन्नाम गृह्णन् न तत्प्रभावात् सद्यो मुक्तः पापेभ्यः यमपाशेभ्यो वा, तस्मात् साधूक्तम्—असुविगम इत्यादि॥ २६॥

शुकदेवजी राजा परीक्षित् से कहते हैं—अजामिल ने इस प्रकार सभी वर्ण-धर्म और आश्रम धर्मों का त्याग कर दिया था। अपने घर में रखेलिन रख ली थी। निन्दित कर्मों के आचरण से उसमें ब्राह्मणत्व भी नहीं रह गया था। यमदूत उसे जबर्दस्ती नरक में ढकेल रहे थे, परन्तु भगवान् के नामोच्चारण करते ही वह तत्काल यमपाश से मुक्त हो गया॥ २६॥

—×—

नातः परं कर्मनिबन्धकृन्तनं
मुमुक्षतां तीर्थपदानुकीर्तनात्।

न यत्पुनः कर्मसु सज्जते मनो
रजस्तमोभ्यां कलिलं ततोऽन्यथा ॥ २७ ॥
( ६।२।४५–४६ शुकः )

तदेवं फलितमाह—नातः परमिति । कर्मनिबन्धनस्य पापमूलस्य कृन्तनं छेदकम्, अतः परं नास्ति, कस्मात्तीर्थपदस्यानुकीर्तनात् । तत्र हेतुः—यद्यतोऽनुकीर्तनात् । ततोऽनुकीर्तनादन्यथा प्रायश्चित्तान्तरैः रजस्तमोभ्यां कलिलं मलिनमेव तिष्ठति यत् तन्मनः ॥ २७ ॥

नारायण के नाम, कीर्तन से बढ़कर दूसरा कोई भी साधन मुक्ति की इच्छा करनेवाले के कर्मबन्धन को काटनेवाली नहीं है, क्योंकि भगवान के कीर्तन से एक बार पवित्र होने से मन पुनः पाप में प्रवृत्त नहीं होता । यदि दूसरे प्रायश्चित्त किये भी जायँ तो रजोगुण एवं तमोगुण से मलिन हुआ मन शुद्ध नही होता ॥ २७ ॥

—×—

म्रियमाणो हरेर्नाम गृह्णन् पुत्रोपचारितम् ।
अजामिलोऽप्यगाद्धाम किमुत श्रद्धया गृणन् ॥ २८ ॥
( ६।२।४९ शुकः )

अत्रासम्भावनां परिहरति—म्रियमाण इति । म्रियमाण अवशत्वेन बुद्ध्याविहीनोऽपि । धाम विष्णोः । अगात् देहान्तरे ॥ २८ ॥

मरते समय जब कि परवश होने के कारण उसमें श्रद्धा और भक्ति का नाम-निशान भी न था, अजामिल अपने पुत्र को पुकारने के वहाने हरि के नाम का उच्चारण कर बैकुण्ठ को गया, तो जो श्रद्धा-भक्ति के साथ उनके नाम का उच्चारण करेगा, वह क्यों नहीं जायेगा ? ॥ २८ ॥

—×—

नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोऽपि येनैव मृत्युपाशादमूमुचत् ॥ २९ ॥

एतदेव यमवाक्येन स्पष्टयति चतुर्भिः—नामोच्चारणेत्यादिभिः । पुत्रका इति दूत-सम्बोधनम् । येनैव हरिनामोच्चारणमात्रेणैव ॥ २९ ॥

यमराज अपने दूतों से कहते हैं—हे पुत्रो ! नारायण के नाम के उच्चारण की महिमा देखो, जिसने एक बार उच्चारण करने मात्र से ऐसा पापी अजामिल भी यमदूत के बन्धन से मुक्त हो गया ॥ २९ ॥

—×—

एतावतालमघनिर्हरणाय पुंसां
संकीर्तनं भगवतो गुणकर्मनाम्नाम् ।
विक्रुश्य पुत्रमघवान् यदजामिलोऽपि
नारायणेति म्रियमाण उपैति मुक्तिम् ॥ ३० ॥

तस्मान्निरपेक्षसाधनं हरिनामोच्चारणं पुरुषार्थं इत्याह—एतावतालमिति । भगवतो गुणानां कर्मणां नाम्नां संकीर्तनमिति यद् एतावता पुंसाम् अघनिर्हरणाय पापक्षयमात्राय अलम् उपभोगो नास्ति । अलंशब्दोऽत्रावधारणे उपयोगाभावमेवाह । अजामिलो महापातक्यपि नारायणेति विक्रुश्य, न तु कीर्तयन्; तत्र पुत्रं विक्रुश्य, न तु हरिम्, अघवानशुचिरपि म्रियमाणोऽस्वस्थचित्तोऽपि मुक्तिमवाप । न त्वघनिर्हरणमात्रं मुक्तिदातुश्च कीर्तनस्यार्थकामादिदानमीषत्करमिति द्रष्टव्यम् ॥ ३० ॥

भगवान् के गुण-कर्म और नामों के संकीर्तन से पापक्षय होता है। इतना ही कहना पर्याप्त नहीं है; क्योंकि अजामिल महापापी होने पर भी मृत्यु के समय श्रद्धा के बिना पुत्र का नाम नारायण कहने से ही यमराज के बन्धन से मुक्त हो गया ॥ ३० ॥

—×—

प्रायेण वेद तदिदं न महाजनोऽयं
देव्या विमोहितमतिर्बत माययालम् ।
त्रय्यां जडीकृतमतिर्मधुपुष्पितायां
वैतानिके महति कर्मणि युज्यमानः ॥ ३१ ॥

नन्वेवं तर्हि मन्वाद्युक्ता द्वादशाब्दादिविधयोऽप्यर्थाः प्रसज्जेरन् । तत्रायासादिबाहुल्यात् हरिनामोच्चारणमात्रस्य सुकरत्वात्तेनैव लघुना कृतार्थत्वात् पुरुषप्रायश्चित्तेषु अप्रवृत्तिप्रसंगादिति चेत्तत्राह—प्रायेणेति । महाजनो मन्वादिः यथामृतजीवनौषधिमजानन्तो वैद्या रोगनिर्हरणाय त्रिकटुकनिम्बादीनि स्मरन्ति तथा स्वयंभूशम्भुप्रमुखद्वादशाब्दादिव्यतिरेकेनायं महाजनोऽतिगुह्यमिदमज्ञात्वा द्वादशाब्दादिकं स्मरन्ति । किं च मायया देव्या अलं मोहितमतिरयं जनः मधु मधुरं यथा भवत्येवं पुष्पितायां पुष्पस्थानीयैरर्थवादैर्मनोहरायां त्रय्यां जडीकृता अभिनिविष्टा मतिर्यस्य अतो महत्येव कर्मणि श्रद्धया युज्यमानो नाल्पे प्रवर्तते । दृश्यते हि प्राकृतस्य महति मन्त्रादौ श्रद्धा अल्पकेनामाक्षरे च न तस्मादस्य ग्राहको नास्तीति तैर्नोक्तम् । यद्वा, स्वाधीन-

सिंहोऽस्तीत्येतावता शृगालादिनिवारणाय तं यथा न प्रयुञ्जते तथा अतितुच्छत्वात् पापस्य तन्निरस नाय परममङ्गलं हरेर्नाम न स्मरन्ति। यद्वा, नाममाहात्म्यज्ञाने सर्वमुक्तिप्रसङ्गादित्येषादिक् ग्रन्थविस्तरभयान्नाति प्रपञ्च्यते इतिप्राञ्चः, वयं तु ब्रूमः। वेदार्थविचारकैर्मन्वादिभिर्वेदार्थो भगव-न्नाममहिमा ज्ञातश्च बहुषु स्थानेषु निबद्धश्च, तथापि द्वादशाब्दादीनां नाप्रामाण्यम्। यथा हि यागादिकमुक्त्वा शेषे सर्वोपमर्दनेनाद्वैतमुक्तं वेदे तथा श्रीहरिनामापि प्रायश्चित्तेषु। एवं च यथाद्वैत-श्रुतिश्रद्धालुभिर्यागादिष्वकृतेष्वपि न वेदाप्रामाण्यं तथा नामोच्चारणमहिमा श्रद्धालुभिः प्रायश्चि-त्तान्तरे अकृतेऽपि सुकरत्वात् सम्भावनादीनां चाद्वैतपक्षतुल्यत्वादिति। तदुक्तं प्रायेणेति। एवं श्रवणादिष्वपि द्रष्टव्यम्॥ ३१॥

धर्मशास्त्रों के प्रणेता ऋषियों की बुद्धि दैवी माया से विमोहित रही। इसीलिए वे लोग इस नाम-संकीर्तन रूप भागवत-धर्म को नहीं जान पाये। उन ऋषियों का मन वेदत्रय के कर्मकाण्ड के प्रतिपादक मनोहर अर्थवाद वाक्यों मे ही फंसा रहा। अतः वे बड़े-बड़े यज्ञों में लगे रहे[1]॥ ३१॥

—×—

**एवं विमृश्य सुधियो भगवत्यनन्ते**
**सर्वात्मना विदधते खलु भावयोगम्।**
**ते मे न दण्डमर्हन्त्यथवा अमीषां**
**स्यात्पातकं तदपि हन्त्युरुगायवादः॥३२॥**

**(६।३।२३-२६ यमः)**

तस्मात्सर्वात्मना भगवतः कीर्तनं कर्तव्यमित्याह—एवमिति। भावयोगं भक्तियोगम्, अमीषां पातकं न स्यादेव, यदि स्याद् उरुगायस्य वादः कीर्तनम्॥३२॥

इन बातों का विचारकर बुद्धिमान् मनुष्य एकाग्रचित्त से अनन्तरूप भगवान् के नाम-कीर्तन का ही साधन करते है, और ये मेरे दण्ड योग्य नहीं होते; क्योंकि उन भक्तों की पाप में प्रवृत्ति नहीं होती। यदि कदाचित् होगी तो भगवान् के नाम-संकीर्तन से ही उनका नाश हो जाता है॥ ३२॥

—×—

१. इस श्लोक में कर्मकाण्ड की अपेक्षा भक्तिमार्ग की महिमा व्यक्त की गई है।

अथापि मे दुर्भगस्य विबुधोत्तमदर्शने ।
भवितव्यं मङ्गलेन येनात्मा मे प्रसीदति ॥३३॥

यच्चोक्तं ब्रह्मायाससाध्यद्वादशाब्दादिप्रायश्चित्तं प्रधानं सुकरं तु नामोच्चारणं न तथेति। तदतिमन्दम् अनेकजन्मार्जितपरमसुकृतसाध्यत्वान्नामोच्चारणस्येति अजामिलवचनेनाह त्रिभिः—अथापीति। यद्यप्यहमस्मिन् जन्मनि दुर्भगः पापीयान्, तस्यापि मे नूनं विबुधोत्तमदर्शने तन्निमित्तं मङ्गलेन महता पूर्वेण पुण्येन भवितव्यम् येन दर्शनेन आत्मा प्रसीदति इदानीमपि ॥ ३३ ॥

अजामिल स्वयं अपने मन में सोचता है—यद्यपि मैं इस जन्म में बड़ा पापी हूँ, तथापि मेरे जन्मान्तरों के पुण्य अवश्य होंगे जिनके कारण मुझे पुरुषोत्तम के दर्शन मिले, जिससे मेरा मन प्रसन्नता से भर गया है ॥ ३३ ॥

—×—

अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः ।
वैकुण्ठनामग्रहणं जिह्वा वक्तुमिहार्हति ॥३४॥

अत्रानुमापकमाह—अन्यथेति। अन्यथा पूर्वपुण्यं विना कथंभूतं वैकुण्ठनाम गृह्यते वशीक्रियतेऽनेनेति ग्रहणम् ॥ ३४ ॥

यदि मेरे पूर्व जन्मों के पुण्य न होते तो मुझ अशुचि शूद्रगामी की जिह्वा से मरते समय भगवान् के नामों का उच्चारण नहीं हो सकता था ॥ ३४ ॥

—×—

क्वाहं कितवः पापो ब्रह्मघ्नो निरपत्रपः ।
क्व च नारायणेत्येतद्भगवन्नाम मङ्गलम् ॥३५॥
(६।२।३२-३४ अजामिलः)

अत्र हेतुः—क्व चाहमिति। ब्रह्मघ्नः विप्रत्वनाशकः महता पुण्येन विना अत्यन्ता सम्भावितमेतदिति भावः ॥ ३५ ॥

कहाँ मैं ऐसा कपटी, पापी, अपने ब्राह्मणत्व का विनाशक दुराचारी और बेशरम और कहाँ नारायण ऐसा भगवान् का शुभदायक नाम ॥ ३५ ॥

—×—

ब्रह्महा पितृहा गोघ्नो मातृहाचार्यहाघवान्।
श्वादः पुक्कशको वापि शुद्ध्येरन् यस्य कीर्तनात् ॥३६॥

(६।१३।८ ऋषयः)

तस्य नाम्नो मङ्गलत्वमेवाह—ब्रह्महेति। यस्य भगवतो नाम्नः। तस्मान्नामग्रहणम् अनेक-सुकृतकृत्यमिति बह्वायाससाध्यमिति भावः ॥ ३६ ॥

ऋषिगण इन्द्र से कहते हैं—नारायण के गुणकीर्तन से ब्रह्मघाती, पितृघाती, गोघाती, भ्रातृघाती, गुरुघाती तथा कुत्ते का मांस खानेवाला चाण्डाल भी अपने महान् पापों से शुद्ध हो जाता है ॥ ३६ ॥

—×—

अहो बत श्वपचोऽतो गरीयान् यस्य जिह्वाग्रे वर्तते नामतुभ्यम्।
तेपुस्तपस्ते जुहुवुः सस्नुरार्या [1]ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥३७॥

(३।३३।७ देवहूतिः)

तदेवोपपादयति देवहूतिवाक्येन—अहो बत इति। अहो बत इत्याश्चर्ये। यस्य जिह्वाग्रे वर्तते तुभ्यं तव नाम स श्वपचोऽपि अतः अस्मादेव हेतोः गरीयान् यद्यस्मात् वर्तते अत इति वा। कुत इत्यत आह—यतस्त एव तपस्तेपुः कृतवन्तः, जुहुवुः होमं कृतवन्तः, सस्नुः तीर्थेषु स्नाताः। आर्यास्त एव समाचाराः ब्रह्म वेदम् अनूचुः अधीतवन्तः ये ते नाम गृणन्तीत्यर्थः। जन्मान्तरे तैस्तपो होमादिसर्वसुकृतमिति त्वन्नामकीर्तनेन महाभाग्योदयोऽवगम्यते, यद्वा तन्नाम-कीर्तने तपोहोमाद्यन्तभूतमतस्ते पुण्यतमा इति स्थूलोपसंहाराभिप्रायेण व्याख्येयम् ॥ ३७ ॥

देवहूति अपने पुत्र कपिल से कहती हैं—जिसकी जिह्वा में आपका नाम रहता है वह यदि चाण्डाल भी हो तो जिह्वा में आपका नाम रहने से ही वह अतिश्रेष्ठ है। जो लोग आपका नाम लेते हैं उन्होंने सब तपस्याएँ कर लीं, सब प्रकार के यज्ञ कर लिए, सारे तीर्थों में स्नान कर लिया, साङ्गवेदाध्ययन कर चुके और सदाचारी हो गये ॥ ३७ ॥

—×—

गृहेष्वाविशतां वापि पुंसां कुशलकर्मणाम्।
मद्वार्तायातयामानां न बन्धाय गृहा मताः ॥३८॥

(४।३०।१९ श्रीकृष्णः)

---

[1] १. ब्रह्मानर्चुरिति पाठान्तरम्।

तदेवं हरिकीर्तनस्य सर्वत्रोपकारकत्वमुक्त्वा सर्वाश्रमाधिकारित्वं कैमुतिकन्यायेन भगवद्व-चनेनाह—गृहेष्वाविशतामिति। गृहेष्वाविशताम् आसक्तानाम्, कुशलकर्मणाम् अनिषिद्धव्या-पाराणां परस्परं मद्वार्तया यातयामानां गतकालानां पुंसां गृहा न बन्धाय संसाराय भवन्ति सतां सम्मताश्च भवन्तीति भक्तिसाधनत्वादिति। तथा च यदि विषयिणामप्यनेन सिद्धिस्तदा सुतरामन्येषामिति भावः॥ ३८॥

भगवान् प्रचेताओं से कहते हैं—जो लोग मुझमें सब कर्मों का समर्पण करके मेरे कथा-कीर्तन में सारा समय लगाते हैं, वे गृहस्थाश्रम में रहकर भी गृह के बन्धन से मुक्त हैं॥ ३८॥

—×—

तस्मादहं विगतविक्लव ईश्वरस्य
सर्वात्मना महि गृणामि यथा मनीषम्।
नीचोऽजयागुणविसर्गमनुप्रविष्टः
पूयेत येन हि पुमाननुवर्णितेन॥३९॥

(७।९।१२ प्रह्लादः)

न च केवलं स्तुतिमात्रम्, एतत्सदाचारादिति प्रह्लादवचनेनाह—तस्मादहमिति। यस्मादेवं भगवान् कीर्तनेनैव तुष्यति तस्मादहं नीचोऽपि विगतविक्लवः गतशङ्कः सन् ईश्वरस्य महिमानं सर्वथा सर्वप्रयत्नेन स्वमनीषानुसारेण अनुवर्णयामि। अजानतोऽपि तत्करणे हेतुमाह—येनैव महिम्ना अनुवर्णितेन अजया अविद्यया गुणविसर्गं संसारम् अनुप्रविष्टः पुमान् शुद्धयेत तन्महि-म्नोऽन्यस्य तथा शोधकत्वाभावात्॥ ३९॥

प्रह्लाद भगवान् नृसिंह की स्तुति करते हैं—इसीलिए निःशंक होकर सब प्रकार से अपनी बुद्धि के अनुसार ईश्वर की महिमा का कीर्तन करता हूँ। नीच पुरुष भी अविद्या के कारण संसार में आकर उनके कीर्तन से पवित्र हो जाता है॥ ३९॥

—×—

सोऽहं प्रियस्य सुहृदः परदेवताया
लीलाकथास्तव नृसिंहविरिञ्चिगीताः।
अञ्जस्तितर्म्यनुगृणन् गुणविप्रमुक्तो
दुर्गाणि ते पदयुगालयहंससङ्गः॥४०॥

(७।९।१८ प्रह्लादः)

एवं चाविद्यया मुच्यते इत्युक्तम्। एतत्फलं दर्शयति प्रह्लादवाक्येनैव—सोऽहमिति। सोऽहं तव दासः सन् भोः नृसिंह! तव लीलाकथा अनुगृणन् दुर्गाणि महद्दुःखानि अञ्जसा तिवर्मितरामित्यर्थः। अत्र हेतुः—गुणैरागादिभिः विशेषेण प्रयुक्तः सन् ततः ते पदयुगमेव आलयो येषां भक्तानां त एव हंसाः ज्ञानिनः तैः सङ्गो यस्य मम सोऽहं कथं भूतस्य तव कथाः तत्राह। प्रियस्येत्यादि कुतो ज्ञाताः। विरञ्चेन गीताः तत् सम्प्रदायप्रवृत्ताः दास्ये प्रवृत्तस्य मम भगवद‍नुग्रहेण सत्सङ्गस्ततो वीतरागतया भगवद्गुणवर्णनं ततश्च न दुःखादि सम्भवः स्यादिति वाक्यार्थः॥ ४०॥

आपके चरणकमल के शरणागत भक्तों की सत्संगति से रागादिगुणों से रहित मैं ब्रह्मा से गाई गई आपकी लीलाकथाओं का कीर्तन करता हुआ संसार से मुक्त होकर सब संकटों से पार उतर जाऊँगा॥ ४०॥

—×—

मन्त्रतस्तन्त्रतः छिद्रं देशकालार्हवस्तुतः।
सर्वं करोति निश्छिद्रं नाम सङ्कीर्तनं तव॥४१॥

(८।२३।१६ शुक्रः)

एवं भगवत्कीर्तनं निरपेक्षं श्रेयः साधनमित्युक्तम्। इदानीं कर्मान्तरवैगुण्यपरीहार‍समर्थमपीत्याह शुक्राचार्यवाक्येन—मन्त्रतस्तन्त्रत इति। मन्त्रतः स्वरादिभ्रंशेन तन्त्रतः व्युत्क्र‍मादिना, देशतः कालतश्च अर्हतः सत्पात्रतः। वस्तुतस्तु दक्षिणादिना यच्छिद्रं न्यूनं तत्सर्वं तव नाम्नोऽनुकीर्तनमात्रमेव निश्छिद्रं करोति॥ ४१॥

शुक्राचार्य भगवान् से कहते हैं—किसी अनुष्ठान में यदि मन्त्र, विधि, देश, काल, पात्र, दक्षिणादि में किसी बात की त्रुटि रह जाय तो आपके नाम-संकीर्तन करने से वह सब दूर हो जाता है[1]॥ ४१॥

—×—

या दोहनेऽवहनने मथनोपलेप-
प्रेङ्खेङ्खनार्भरुदितोक्षणमार्जनादौ।

---

१. इसका समर्थक यह वचन है—

पदसाङ्गं कृतं कर्म जानता वाप्य जानता।
साङ्गं भवतु तत्सर्वं श्री हरेर्नाम कीर्तनात्॥

गायन्ति ते विशदकर्मगृहेषु देव्यो
राज्ञां स्वशत्रुवधमात्मविमोक्षणं च ।
गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः
पित्रोश्च लब्धशरणा मुनयो वयं च ॥ ४४ ॥
( १०।७१।९ उद्धवः )

अत एव विवेकिनः कीर्तनमेव कुर्वन्तीति नारदवचनेनाह—गायन्ति ते इति । जरासन्धधृतानां राज्ञां देव्यः पत्न्यः, ते विसदं कर्म स्वगृहेषु बाललालनादौ गायन्ति, तत्कर्मस्वशत्रोर्जरासन्धस्य वध आत्मनां विमोक्षणं च, वत्स ! मा रोदीः, श्रीकृष्णः जरासन्धं निहत्य तव पितरं मोचयित्वा कामान् पूरयिष्यतीत्यत्र दृष्टान्तः—गोप्यश्चेत्यादि । यथा गोप्यः शङ्खचूडवधं स्वमोक्षणं च गायन्ति, अवतारान्तरं च कुञ्जरपतेः नक्रान्मोक्षणम् जनकात्मजायाश्च रावणाद्, अत्रैव च पित्रोः कंसगृहात् मोक्षणं च नक्रादीनां वधं च, मुनयः सनकादयः, अन्येऽपि लब्धशरणाः भक्ताः ॥ ४४ ॥

उद्धवजी भगवान् श्रीकृष्ण से कहते है—जैसे व्रज की गोपियाँ शङ्खचूड का बध और उसके फन्दे से अपनी मुक्ति रूप आपके निर्मल यश का गान करती हैं और शरणागत मुनिगण और हम भक्तजन, ग्राह का बध और उससे गजेन्द्र का मोक्ष, रावण का बध और उससे सीताजी का उद्धार तथा कंस का बध और उसकी कैद से अपने माता-पिता देवकी एवं वसुदेव का उद्धाररूप आपके निर्मल चरित की गाथाये गाते हैं। वैसे ही जरासन्ध द्वारा पकड़े गये राजाओं की रानियां भी अपने बच्चों को खिलाते और बहलाते समय जरासन्ध का बध और उससे अपने प्रियपतियों को छुड़ानारूप आपका निर्मल चरित गाती हैं ॥ ४४ ॥

—×—

जिह्वां लब्ध्वापि यो विष्णुं कीर्तनीयं न कीर्तयेत् ।
लब्ध्वापि मोक्षनिःश्रेणीं स नारोहति दुर्गतिः ॥ ४५ ॥
( हरिभक्तिसुधोदये ८।५ नारदः )

एवमन्वयं निरूप्य व्यतिरेके निन्दामाह—जिह्वामिति । लब्ध्वापि स्वाधीनजिह्वोऽपि स मोक्षनिःश्रेणीं मोक्षारोहणसोपानं लब्ध्वापि नारोहतीति दुर्मतिर्ज्ञेयः । अत्र मोक्षनिःश्रेणी जिह्वाया दृष्टान्तः आरोहणं कीर्तनस्य ॥ ४५ ॥

नारदजी भगवान् की गुणमहिमा की विशेषता कहते हैं—जो जिह्वा पाकर भी पुण्य-श्लोक भगवान् विष्णु का गुणगान नहीं करता, वह मूर्ख मोक्ष की सीढ़ी पाकर भी उसपर नहीं चढ़ता ॥ ४५ ॥

—×—

गां दुग्धदोहामसतीं च भार्यां
देहं पराधीनमसत्प्रजाश्च ।
वित्तं त्वतीर्थीकृतमङ्ग वाचं
हीनां मया रक्षति दुःखदुःखी ॥ ४६ ॥

कथं दुर्मतिः कीर्तनविमुखत्वेन वृथा वाग्व्ययदुःखित्वादिति भगवद्वचनेनाह—गां दुग्धदोहामिति । दुह्यत इति दोहः पयः । दुग्धो दोहो नोत्तरत्र दोहोऽस्ति यस्यास्ताम् अर्थशून्याम् असतीभार्यां कामशून्याम् । देहं पराधीनं प्रतिक्षणं दुखहेतुः असत्प्रजां दृष्टादृष्टफलशून्यं पुत्रम् अतीर्थीकृतम् आगतेऽपि पात्रे अदत्तम् । दुष्कीर्तिदुरितापादकम् अङ्ग हे उद्धव ! दुःखानन्तरं दुःखमेव यस्य सा रक्षति यथा तथा मया हीनां वाचम् ॥ ४६ ॥

श्रीकृष्णजी उद्धवजी से कहते हैं—हे उद्धवजी ! जो पुरुष दुग्धहीन गाय का, दुराचारिणी स्त्री का, पराधीन शरीर का, दुष्ट पुत्र का, मेरी लीला-कीर्तन से रहित वाणी का, सत्पात्र को न दिये गये धन का रक्षण करता है वह एक दुःख के बाद दूसरे दुःख को प्राप्त होता है । कभी भी दुःख से उसका छुटकारा नही होता है ॥ ४६ ॥

—×—

यस्यां न मे पावनमङ्ग कर्म
स्थित्युद्भवत्राणनिरोधमस्य
लीलावतारेप्सितजन्म वा स्या-
द्वन्ध्यां गिरं तां बिभृयान्न धीरः ॥ ४७ ॥
(११।११।१९-२० श्रीकृष्णः)

एतद्भगवद्धीनत्वं विवृणोति—यस्यामिति । जगतः शोधकं चरित्रं न स्यात् किं तद् अस्य विश्वस्य स्थित्यादिरूपं तद्वदुरित्यर्थः । लीलावतारेषु ईप्सितं जगतः प्रेमास्पदम् । श्रीकृष्णरामादिजन्म वा न स्यात्, तां निःफलां गिरं धीरो धीमान् न धारयेत्, दुःखमात्रहेतुत्वादिति ॥ ४७ ॥

हे उद्धव ! जिसकी जिह्वा इस विश्व की सृष्टि, स्थिति और संहार की कथा अथवा लीलावतारों में से प्रेमाधार राम-कृष्ण आदि के जन्मों की कथाओं का वर्णन नहीं करती है। ऐसी व्यर्थ जिह्वा को मनुष्य न रखे तो अच्छा है ॥ ४७ ॥

—x—

कलिं सभाजयन्त्यार्या गुणज्ञा सारभागिनः।
कीर्तनेनैव कृष्णस्य मुक्तसङ्गः परं व्रजेत्[1] ॥ ४८ ॥

एवम् अकीर्तने निन्दामुक्त्वा विशेषात् कलियुगे कीर्तनं प्रशस्तमित्याह—कलिमिति। कलिं कलियुगं सभाजयन्ति प्रशंसन्ति कलेर्गुणं जानन्ति, यतः सारभागं सारांशं गृह्णन्तीति सारभागिनः। यत्र युगे कीर्तनेनैव कृष्णस्य अत एव सभाजयन्तीत्यर्थः ॥ ४८ ॥

करभाजन विदेह से कह रहे हैं—गुणज्ञ सारग्राही लोग कलियुग की प्रशंसा करते हैं, क्योंकि कलियुग में केवल भगवान् श्रीकृष्ण के कीर्तन से ही सब प्रकार की पुरुषार्थ प्राप्ति हो जाती है ॥ ४८ ॥

—x—

नह्यतः परमो लाभो देहिनां भ्राम्यतामिह।
यतो विन्देत परमां शान्तिं नश्यति संसृतिः ॥ ४९ ॥
( ११।५।३६–३७ करभाजनः )

अत्र कैमुतिकन्यायेन स्वार्थलाभं स्पष्टयति—नह्यत इति। अतः कीर्तनाद् अन्यः परमः उत्कृष्टः लाभः अर्थो नास्ति स्वार्थोपायस्य इह संसारे भ्राम्यताम् इह साधनोपायविचारे वा भ्राम्यताम् अनिश्चयवताम्। यतः कीर्तनात् परमां शान्तिं मोक्षम्। यदि चैवं तदा धर्मादिकं कीर्तनेनैव प्राप्यत इति किमु वक्तव्यम्। यद्वा नैरुज्यार्थं शर्कराभक्षणवत् स्वयमानन्दप्रदः स्वार्थान्तरहेतुरहेतुश्चेति परमो लाभः। एवं तस्मात्कले प्रशंसा युक्तैवेति ॥ ४९ ॥

इस संसार में नानायोनियों में भटकनेवाले प्राणियों के लिए नाम-संकीर्तन से बढ़कर कोई दूसरा अलभ्य लाभ नहीं है, क्योंकि इससे बड़ी शान्ति मिलती है और संसार में आवागमन का चक्र मिट जाता है ॥ ४९ ॥

—x—

१—यत्र सङ्कीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते। इति पाठान्तरम्।

ते सभाग्या मनुष्येषु कृतार्था नृप निश्चितम् ।
स्मरन्ति स्मारयन्तो ये हरेर्नाम कलौ युगे ॥ ५० ॥

एवं च कीर्तने परप्रेरणमपि स्वकीर्तनतुल्यमित्याह शुकवाक्येन—ते सभाग्या इति । नृप परीक्षितः स्मारयन्ति परान् ॥ ५० ॥

शुकदेवजी राजा परीक्षित से कहते हैं—हे राजन् ! मनुष्यों में वे धन्य और बड़े भाग्यवान् हैं जो कलियुग में भगवान् का नाम स्वयं स्मरण करते हैं और दूसरों से स्मरण कराते हैं ॥ ५० ॥

—×—

कलेर्दोषनिधे राजन् अस्ति ह्येको महान् गुणः ।
कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥ ५१ ॥
कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥ ५२ ॥
( १२।३।५१–५२ शुकः )

किञ्च दुष्टस्यापि कलेः कृतादिषु ध्यानादीनां फलानि हरिकीर्तनेनैव ददतः सभाजनं युक्तमेवेत्याह द्वाभ्याम्—कलेर्दोषनिधेरित्याभ्याम् । दोषनिधेर्दोषबलस्य एतत् सर्वं हरिकीर्तनादेव कलौ भवतीत्यर्थः ॥ ५१-५२ ॥

हे राजन् ! यद्यपि कलियुग दोषराशियों से भरा है पर उसमें एक बड़ा भारी गुण यह है कि भगवान् श्रीकृष्ण के नाम-संकीर्तन से ही जीव भवबन्धन से मुक्त होकर परमधाम को पहुँच जाता है ॥ ५१ ॥

सत्ययुग में विष्णु के ध्यान से जो फल मिलता है, त्रेतायुग में यज्ञ करने से जो फल मिलता है, और द्वापर में भगवान् के पूजन से जो फल मिलता है वह सब कलियुग में हरि-कीर्तन से ही मिल जाता है ॥ ५२ ॥

—×—

विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह
यः पार्थिवान्यपि कविर्विममे रजांसि ।
चस्कम्भ यः स्वरंहसास्खलतात्रिविष्टं
यस्मात्त्रिसाम्यसदनादुरुकम्पयानम् ॥ ५३ ॥

ननु तर्हि कति गुणाः कीर्तनीया इत्यपेक्षायां आनन्त्यान्नियमोऽशक्य इत्याह–विष्णोरिति। पृथिव्याः परमाणूनपि यो विममे गणितवान्, तादृशोऽपि को नु विष्णोर्वीर्यं गणना कर्तुमर्हति, कथंभूतस्य विष्णोः? त्रिविष्टं सत्यलोकं च चस्कम्भ धृतवान्, किमिति चस्कम्भ यस्मात् त्रैविक्रमे अस्खलिता प्रतिघातशून्येन स्वरंहसा स्वपादवेगेन त्रिमाम्यरूपं सदनमधिष्ठानं प्रधानं तस्मादारम्य, उरु अधिकं कम्पयानं कम्पेन यानं यस्येति वा। अतः कारणाच्चस्कंभ। आत्रिविष्टमिति छेदो वा सत्यलोममभिव्याप्य यः सर्वं धृतवानित्यर्थः। यस्यैव वामनावतारस्यैते गुणाः तस्यानन्तावतारस्य गुणा ब्रह्मादिभिरप्यसंख्येया इति ॥ ५३ ॥

ब्रह्माजी भगवान् विष्णु की स्तुति करते हैं—इस संसार में ऐसा कौन विद्वान् है जो भगवान् विष्णु के बड़े-बड़े चरितों की गिनती कर सके, चाहे उसने पृथ्वी के धूलिकण भी गिन डाले हों। भगवान् विष्णु ने वामनावतार में अपने चरण के वेग से सत्यलोक तक कांप रहे भुवनों को धारण किया था ॥ ५३ ॥

—×—

नान्तं विदाम्यहममी मुनयोऽग्रजास्ते
मायाबलस्य पुरुषस्य कुतोऽपरे ये।
गायन् गुणान् दशशतानन आदिदेवः
शेषोऽधुनापि समवस्यति नास्य पारम् ॥ ५४ ॥
(२।७।४०-४१ ब्रह्मा)

एतदेव ब्रह्मवाक्यैनैव प्रपञ्चयति—नान्तमिति। ते तव पुरुषस्य यन्मायाबलं तस्यान्तन्न विदामि, नो वेद्मि। दशशतानि मुखानि यस्य, सोऽपि द्विसहस्रजिह्वोऽपि यस्य गुणान् गायन् अन्तं पारं न समवस्यति न प्राप्नोतीति भावः ॥ ५४ ॥

हे नारद! भगवान् की मायाशक्ति का पार न मैं पा सका हूँ, न तुम्हारे अग्रज सनकादि उसका पार पा सके। दूसरे की कौन बात, हजार मुखवाले शेषनाग भी गाते-गाते थक गये पर आज तक भी उनके गुणों का पार न पा सके ॥ ५४ ॥

—×—

यो वा अनन्तस्य गुणाननन्ता
ननुक्रमिष्यन् स तु बालबुद्धिः।

रजांसि भूमेर्गणयेत् कथञ्चित्
कालेन नैवाखिलसत्त्वधाम्नः ॥ ५५ ॥

( ११।४।२ द्रुमिडः )

तस्माद्भगवद्गुणादिपरिच्छेदजिज्ञासापि न कर्तव्येत्याह—यो वेति । अनुक्रमिष्यन् गणयितुमिच्छन् यः स तु बालानामिव बुद्धिर्यस्य स मन्दमतिः, कालेन महतापि महामतिः भूमे रजांसि गणयेदपि । अखिलसत्त्वधाम्ना सर्वशक्त्याश्रयस्य भगवतो गुणान् नैव गणयेत्, गुणादीनामनन्तत्वात् । तस्मात्स्वमत्यनुसारेण कीर्तयेत्, तदुक्तं प्रह्लादवाक्येन—यथा मनीषमिति ( भा०।७।९।१२ ) ॥ ५५ ॥

द्रुमिल विदेह से कहते हैं—जो भगवान् अनन्त के असंख्य गुणों को गिनना चाहता है, वह बड़ा नादान है, क्योंकि कोई बड़ा विद्वान् योग आदि के बल से दीर्घकाल में शायद पृथ्वी के धूलिकणों को गिन भी डाले, परन्तु सर्वशक्तिमान् भगवान् के गुणों को गिनना सर्वथा असम्भव है ॥ ५५ ॥

—×—

यस्याखिलामीवहभिः सुमंगलै-
र्वाचो विमिश्रा गुणकर्मजन्मभिः ।
प्राणन्ति शुम्भन्ति पुनन्ति वै जगद्
यास्तद्विरक्ताः शवशोभना मताः ॥ ५६ ॥

( १०।३८।१२ अक्रूरः )

किञ्च, अन्यविषया अपि वाचः भगवन्नामादिमिश्रिताश्चेत्, ताः अपि धन्याः, अन्यथा तु हीना इत्याह—यस्याखिलामिति । अखिलानि अखिलस्य वा अमीवानि पापानि घ्नन्तीति अखिलामीवहानि तैः यैरस्य भगवतो गुणगणादिभिर्विमिश्रा युक्ता वाचः जगत् प्राणन्ति जीवयन्ति शुम्भन्ति शोभयन्ति पुनन्ति पवित्रयन्ति । पुनः कथंभूतैः, गुणादिभिः विरक्ता रहिताः, तास्तु स्वलङ्कृता अपि वस्त्राद्यलङ्कृतशववच्छोभना मताः• सतां सम्मता अत्यन्तमनुपास्या इति भावः ॥ ५६ ॥

अक्रूरजी स्वयं कह रहे हैं—भगवान् के पापनाशकारी तथा परममंगलमय गुण, कर्म और जन्मों का वर्णन करनेवाली वाणियां जगत् को जिलाती हैं, अलंकृत करती हैं और पवित्र करती हैं, परन्तु जो वाणियां भगवान् के गुण आदि से रहित हैं वे कपड़ों से सजाये हुए मृतक शरीर के समान व्यर्थ अशुभ और अमंगल हैं ॥ ५६ ॥

—×—

इत्थं हरेर्भगवतो रुचिरावतार-
वीर्याणि बालचरितानि च शन्तमानि।
अन्यत्र चेह च श्रुतानि गृणन् मनुष्यो
भक्तिं परां परमहंसगतौ लभेत ॥ ५७ ॥
( ११।३१।१८ शुकः )

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलद्विवेक-
तैरमुक्तपरमहंसविष्णुपुरीग्रथितायां भागवतामृताब्धिलब्ध-
श्रीभगवद्भक्तिरत्नावल्यां पञ्चमं विरचनम् ॥

तस्मात्कीर्तनमेव परमा भक्तिरिति प्रकरणार्थमुपसंहरति—इत्थमिति। रुचिरैः मनोहरैः कृष्णाद्यवतारैः कृतानि वीर्याणि बालचरितानि बालक्रीलाः शन्तमानि परममङ्गलानि, अन्यत्र विष्णु-पुराणादौ इह श्रीभागवते श्रुतानि विश्रुतानि प्रसिद्धानि परमहंसगतौ कृष्णे भक्तिं लभेत कीर्तन-परस्य सर्वा भक्तिः सिद्ध्येदिति भावः ॥ ५७ ॥

इति श्रीभक्तिरत्नावल्याः कान्तिमालायां टीकायां पञ्चमं विरचनम्।

शुकदेवजी राजा परीक्षित से कहते हैं—इस प्रकार श्रीमद्भागवत में और दूसरे ग्रन्थों में वर्णन किए हुए भगवान् विष्णु के परममंगल मनोहर अवतार की लीलाओं और बालचरितों का जो पुरुष कीर्तन करता है वह पराभक्ति को प्राप्त होकर परमहंसों की गति को पहुंचता है ॥ ५७ ॥

---

# अथ षष्ठं विरचनम्

अहो यूयं स्म पूर्णार्था भवत्या लोकपूजिताः।
वासुदेवे भगवति यासामित्यर्पितं मनः॥ १॥
(१०।४७।२३ उद्धवः)

अथ स्मरणं निरूपयितुं विरचनमारभते, तत्र भगवत्स्मरणशीलाः कृतार्था इत्युद्धववचनेनाह—अहो इति। यूयमेव कृतार्था भवत्य एव लोकपूजार्हा इत्यर्थः। इति सर्वात्मना। स्म नूनम्। बहुप्रयाससाध्यत्वाद्भगवति मनो निवेशनस्येति योगादिफलमेव भवतीभिः प्राप्तमिति भावः॥ १॥

उद्धवजी गोपियों से कहते है—अहो आप लोग कृतार्थ और लोकमान्य हो गईं; क्योंकि आप लोगों ने भगवान् श्रीकृष्ण में अपने मन को अर्पित कर दिया है॥ १॥

—×—

एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः।
सर्वतो मन आकृष्य मय्यद्धावेश्यते यथा॥ २॥
(११।१३।१४ श्रीकृष्णः)

एतदेव भगवद्वचनेन स्पष्टयति—एतावानिति। यथा यतः, मयि मनः आवेश्यते, एतावान् एतत्पर्य्यन्तः, अन्यस्माद् अन्यचिन्तां हित्वेत्यर्थः॥ २॥

भगवान् श्रीकृष्ण उद्धवजी से कहते हैं कि हे उद्धवजी! मेरे शिष्य सनकादिक ऋषियों ने इतना ही योग बतलाया है कि मनुष्य मन को सब ओर से खींचकर मुझ में लगा दे॥ २॥

—×—

सकृन्मनः कृष्णपदारविन्दयो-
र्निवेशितं तद्गुणरागि यैरिह।
न ते यमं पाशभृतश्च तद्भटान्
स्वप्नेऽपि पश्यन्त्यपि चीर्णनिःकृताः॥ ३॥
(६।१।१९ शुकः)

एतत्फलं कैमुतिकन्यायेनाह—सकृदिति। यैः सकृदपि किं पुनः सदा कृष्णपदारविन्द्रयोरपि, किं पुनः सर्वाङ्गे निवेशितं बलादपि, किं पुनः स्वतो निविष्टं तद्गुणराग्यपि, किं पुनस्तद्गुणज्ञं

यत्र कुत्रापि, किं पुनस्तीर्थेषु[1] ते केऽपि यमं न पश्यन्ति, किं पुनर्याम्यायातनाः तद्भटान् दूतानपि। किं पुनस्तदाकर्षणादिदुःखं स्वप्नेऽपि, किं पुनः परमार्थतः तावतैव चीर्णनिःकृताः कृतप्रायश्चित्ताः ॥ ३ ॥

शुकदेवजी राजा परीक्षित् से कहते हैं—इस संसार में जिन्होंने भगवान् श्रीकृष्ण के गुणों में अनुरक्त अपने मन को एक बार भी उनके चरणकमलों में लगा दिया है वे कभी स्वप्न में भी यमराज या पाशधारी उनके दूतों को नहीं देखते। इसीसे उनके पापों का प्रायश्चित्त हो चुका ॥ ३ ॥

—×—

न भारती मेऽङ्ग मृषोपलक्ष्यते
न वै क्वचिन्मे मनसो मृषागतिः।
न मे हृषीकाणि पतन्त्यसत्पथे
यन्मे हृदौत्कण्ठ्यवता धृतो हरिः ॥ ४ ॥

(२।६।३४ ब्रह्मा)

एवं फलान्तराण्यपि ब्रह्मवाक्येनाह—न भारतीति। यस्माद् मे मया औत्कण्ठ्यं भक्त्युद्रेकः, तद्युक्तेन हृदा हरिर्ध्यातः। अङ्ग हे नारद! अतः मे वाङ्मनइन्द्रियाणां वृत्तयः सत्यार्थाः, न तु मत्प्रभावेणेत्यर्थः ॥ ४ ॥

ब्रह्माजी नारदजी से कहते हैं—हे नारद! चूँकि मैं अतिभक्तियुक्त एकाग्रचित्त से श्रीभगवान् का ध्यान करता हूँ इस कारण न तो मेरी वाणी मिथ्या होती है न मेरा मन ही व्यर्थ किसी ओर दौड़ता है और न मेरी इन्द्रियाँ कभी कुमार्ग में प्रवृत्त होती हैं ॥ ४ ॥

—×—

एतावान् सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया।
जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः ॥ ५ ॥

(२।१।६। शुकः)

तस्माद्भगवतः स्मरणतः परो लाभो नास्तीत्याह–एतावानिति। एतावानेव जन्मनो लाभः फलम्, तमाह—नारायणस्मृतिरिति। सांख्यादिभिः साध्य इति तेषां स्वतन्त्रेण लाभत्वं वारयति।

---

१. हरिक्षेत्रादिषु इति पाठान्तरम्।

सांख्यम् आत्मानात्मविवेकः योगोऽष्टाङ्गः । अन्ते तु नारायणस्मृतिः परो लाभः, न तन्महिमा वक्तुं शक्यत इत्यर्थः ॥ ५ ॥

शुकदेवजी राजा परीक्षित् से कहते हैं—सांख्य ( आत्मा और अनात्मा का विवेक ज्ञान ) योग ( अष्टाङ्ग योग ) तथा स्वधर्माचरण से अन्त समय में नारायण का स्मरण होना ही मनुष्यों के जन्मलाभ का उत्कृष्ट फल है ॥ ५ ॥

—×—

तस्मात्सर्वात्मना राजन् हृदिस्थं कुरु केशवम् ।
म्रियमाणो ह्यवहितः ततो याहि[1] परां गतिम् ॥ ६ ॥

एतदेव शुकवाक्येन स्पष्टयति द्वाभ्याम्—तस्मादिति । हृदिस्थं कुरु चिन्तय । अवहितः सावधानः सन् । ततः चिन्तनात् परां गतिं भगवद्भावम् ॥ ६ ॥

इसलिए हे राजन् ! एकचित्त से भगवान् श्रीकृष्ण का ध्यान करो, उससे मरते समय तुम सावधान होकर परमगति को प्राप्त हो जावोगे ॥ ६ ॥

—×—

म्रियमाणैरभिध्येयो भगवान् परमेश्वरः ।
आत्मभावं नयत्यङ्ग सर्वात्मा सर्वदर्शनः[2] ॥ ७ ॥
( १२।३।४९-५० शुकः )

स्मरणस्य साधारण्यमाह—म्रियमाणैरिति । कैरपि अभिध्येयः अभिध्यातः, आत्मभावं नयति ध्यातारम् । यद्वा, अभिध्येयो भवति, यतस्तमात्मभावं नयतीत्यर्थः ॥ ७ ॥

हे राजन् ! मरते समय जीवों को भगवान् श्रीकृष्ण का ध्यान अवश्य करना चाहिए । भगवान् सबकी आत्मा और सबके आधार हैं । वे ध्यान करनेवाले को अपने रूप में लवलीन कर देते हैं ॥ ७ ॥

—×—

अविस्मृतिः कृष्णपदारविन्दयोः
क्षिणोत्यभद्राणि च शं तनोति ।
सत्त्वस्य शुद्धिं परमात्मभक्तिं
ज्ञानं च विज्ञानविरागयुक्तम् ॥ ८ ॥
( १२।१२।५५ सूतः )

---

१. यासि—इति पाठान्तरम् । २. सर्वसंश्रयः इति पाठान्तरम् ।

ननु ज्ञानं विना स्मरणमात्रेण कथं भगवद्भावप्राप्तिः ? सत्यम्; ज्ञानस्यैतदधीनत्वादित्याह—अविस्मृतिरिति। अविस्मृतिः स्मरणम्। अभद्राणि पापानि क्षिणोति नाशयति, शं कल्याणं तनोति। सत्त्वस्य अन्तःकरणस्य शुद्धिं परमात्मनि कृष्णे प्रेमलक्षणां भक्तिम्, ज्ञानं शास्त्रीयम्, विज्ञानेन अनुभवेन विरागेण विषयवैतृष्ण्येन च युक्तं तनोति ॥ ८ ॥

सूतजी शौनक से कह रहे हैं—भगवान् श्रीकृष्ण के चरणकमलों का सदा स्मरण अमंगलों का विनाश करता है, मंगल को बढ़ाता है, मन की शुद्धि करता है, भगवान् की भक्ति देता है और विज्ञान एवं वैराग्य से युक्त ज्ञान को पैदा करता है ॥ ८ ॥

—×—

विद्यातपःप्राणनिरोधमैत्री-<br>
तीर्थाभिषेकव्रतदानजप्यैः ।<br>
नात्यन्तशुद्धिं लभतेऽन्तरात्मा<br>
यथा हृदिस्थे भगवत्यनन्ते ॥ ९ ॥

( १२।३।४८ शुकः )

ननु ज्ञानहेतुः सत्त्वशुद्धिः विद्यादिभिः साध्या, तत्राह—विद्यातप इति। विद्या उपासना, तपः स्वधर्माचरणम्, प्राणनिरोधः प्राणायामः, मैत्री भूतेषु रतिः, एभिः अन्तरात्मा मनः शुद्धिं लभेत, न त्वात्यन्तिकीम्। यथा हृदिस्थे भगवति सवासनं मनः हरिस्मरणेनैव शुध्यतीत्यर्थः ॥ ९ ॥

शुकदेवजी राजा परीक्षित् से कहते हैं—भगवान् श्रीकृष्ण का हृदय में ध्यान करने से मन जैसा अत्यन्त विशुद्ध होता है वैसा विद्या, तप, प्राणायाम, जीवों पर दया, तीर्थस्नान, व्रत, दान और मन्त्रों के जप से विशुद्ध नहीं होता ॥ ९ ॥

—×—

पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसम्भवान्।<br>
सर्वान् हरति चित्तस्थो भगवान् पुरुषोत्तमः ॥ १० ॥

( १२।३।४५ शुकः )

एतदेव स्पष्टयति—पुंसामिति। अत्र कलिग्रहणं विशेषाभिप्रायेण। द्रव्यं हिरण्यादि आत्मा-मनोद्रव्यादिभिः सम्भवो येषां चित्तस्थः चित्ते स्फुरितः तेन ॥ १० ॥

भगवान् श्रीकृष्ण ध्यान द्वारा भक्तों के हृदय में विराजमान होकर उनके द्रव्य, देश और मन से उत्पन्न हुए कलियुग के दोषों को नष्ट कर देते हैं ॥ १० ॥

—×—

यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हन्ति धातुजम् ।
एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥ ११ ॥
( १२।३।४७ शुकः )

एतद् दृष्टान्तेन द्रढयति—यथा हेम्नि स्थित इति । धातुजं ताम्रादिसंश्लेषजातं हेम्ना दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव दहति, न तु तोयादि । एवं योगिनामपि विष्णुरेव, न तु योगादिकमित्यर्थः । तस्मात्साधूक्तम्—विद्यातप इति ॥ ११ ॥

जैसे सुवर्ण पर रखी हुई आग सुवर्ण की मलीनता को दूर कर देती है वैसे ही योगियों के हृदय में विराजमान भगवान् श्रीकृष्ण उनकी वासनाओ का विनाश कर देते हैं। सारांश यह है कि जैसे सुवर्ण की मलीनमा अग्नि में तपाने से ही दूर हो सकती है वैसे ही ध्यान द्वारा हृदय में स्थित भगवान् ही कुभावनाओं को नष्ट कर देते हैं। उनके विनाश के लिए दूसरा उपाय नहीं है ॥ ११ ॥

मन्येऽसुरान् भागवतांस्त्र्यधीशे
संरम्भमार्गाभिनिविष्टचित्तान्
ये संयुगेऽचक्षत तार्क्ष्यपुत्र-
मंसेसुनाभायुधमापतन्तम् ॥ १२ ॥
( ३।२।२४ उद्धवः

किञ्च, यथाकथञ्चित् भगवत्स्मरणमात्रमेव पुरुषार्थहेतुरिति उद्धववचनेनाह—मन्येऽसुरानिति । संरम्भः क्रोधावेशः, तेन मार्गेण भगवति अभिनिविष्टं चित्तं येषां तानसुरान् भागवतानेवं मन्ये। संयुगे संग्रामे । तार्क्ष्यः कश्यपस्तस्य पुत्रं गरुडम्, अंसे स्कन्धेषु सुनाभायुध चक्रायुधो हरिः, तमचक्षत अपश्यन्, तस्मात्तेष्वपि अनुग्रहो युक्त एवेत्यर्थः ॥ १२ ॥

उद्धवजी विदुर से कहते हैं—जिन असुरों ने त्रिलोकपति भगवान् विष्णु में क्रोधव चित्त लगाया था उन्हें भी भगवद्भक्त ही समझता हूँ, क्योंकि वे भी भक्तों के सम

गरुड़ पर सवार होकर चक्रधारण किये हुए संग्राम में अपनी ओर आते हुए भगवान् को देखते थे ॥ १२ ॥

—×—

भजन्त्यथ त्वामत एव साधवो
व्युदस्तमायागुणविभ्रमोदयम् ।
भवत्पदानुस्मरणादृते सतां
निमित्तमन्यद्भगवन्न विद्महे ॥ १३ ॥

( ४।२०।२९ पृथुः )

एवं फलितमाह—भजन्तीति। भजन्ति स्मरन्तीत्यर्थः। व्युदस्तः मायागुणानां विभ्रमोदयो येन तम्, त्वाम्। अत एव कुतः, अन्यत् निमित्तं श्रेयोहेतुं न विद्महे वयम्, नास्त्येवेत्यर्थः ॥ १३ ॥

राजा पृथु भगवान् से कहते है—इसीलिए सन्त लोग आपको भजते है, क्योंकि आप में माया के गुणों के विलास का प्रादुर्भाव नही है। हे भगवन्! आपके चरणकमल का स्मरण छोड़कर साधुओं को और कोई कल्याणकारी उपाय नही देखता हूँ ॥ १३ ॥

—×—

भूयादघोनि भगवद्भिरकारि दण्डो
यो नौ हरेत सुरहेलनमप्यशेषम्।
मा वोऽनुतापकलया भगवत्स्मृतिघ्नो
मोहो भवेदिह तु नौ व्रजतोरधोऽधः ॥ १४ ॥

( ३।१५।३६ जयविजयौ )

यतो भगवत्स्मरणशीलस्य स्वकर्मजोऽनर्थोऽपि नोपतापायेति जयविजयवाक्येनाह—भूयादिति। अघोनि अघवति य उचितो दण्डः स एव भवद्भिः सनकादिभिरकारि, नात्र भवतामपराधः कश्चित्। अतो नौ आवयोः भूयाद् यः अशेषमपि सुरहेलनम् ईश्वराज्ञातिक्रमणरूपं पापं हरेत। किन्तु, युष्माकं यः कृपानिमित्तोऽनुतापः, तस्य लेशेन अधोऽधो मूढयोनीर्व्रजतोरपि नौ आवयोः भगवत्स्मृतिघातको मोहो मा भवेत्। किन्तु मोहोऽपि स्मृतिमेव प्रवहतादिति प्रार्थना ॥ १४ ॥

जय-विजय कुमारों से कह रहे हैं—अपराधी को जो उचित दण्ड मिलना चाहिए वही आपने हमको दिया है। जिससे हमारे पाप का विनाश हो, जो आप जैसे देवगणों की

आज्ञा के उल्लंघन करने से उत्पन्न हुआ है, किन्तु आप लोगों को भगवद्धाम में प्रवेश करने से हमने जो रोका उससे जो आपको थोड़ा-बहुत क्लेश हुआ उससे नीच योनियों मे भटक रहे हम लोगों को भगवान् की स्मृति को नष्ट करनेवाला मोह न हो, यही हमारी प्रार्थना है ॥ १४ ॥

—×—

तन्नः समादिशोपायं येन ते चरणाब्जयोः ।
स्मृतिर्यथा न विरमेदपि संसरतामिह ॥ १५ ॥
( १०।७३।१५ राजानः )

एतदेव स्पष्टयति जरासन्धधृतानां राज्ञां वाक्येन—तन्न इति । येनोपायेन यथा यथावत्, ते चरणद्वन्द्वयोः स्मृतिर्न विरमेत्, किन्तु सदा भवेदित्यर्थः ॥ १५ ॥

जरासंध के कैदी राजा लोग मुक्त होने पर भगवान् से कहते हैं—इसलिए हमें ऐसा उपाय बताइये जिससे हमलोगों का आपके चरणकमलों में स्मरण बना रहे, हम उन्हें किसी जन्म में भूल न जाँय ॥ १५ ॥

—×—

शय्यासनाटनालापक्रीडास्नानाशनादिषु ।
न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः ॥ १६ ॥
( १०।९०।४६ शुकः )

ननु तथापि संसरणदुःखं स्यादेव नेत्याह—शय्येति । शय्यादिषु श्रीकृष्णचेतसो वृष्णयः सन्तमप्यात्मानं देहेन्द्रियादि न विदुः, दुःखं न विदुरिति । किं वाच्यं न इत्यर्थः ॥ १६ ॥

शुकदेवजी भगवान् श्रीकृष्ण के प्रति यादवों का अनुराग वर्णन कर रहे हैं—वृष्णि-कुल के यादव लोग भगवान् कृष्ण की चिन्ता में इतना मगन रहा करते थे कि उन्हें सोते, बैठते, चलते, फिरते, बातचीत करते, नहाते, खाते और अन्य कार्यो में भी अपनी सुधि नहीं रहती थी ॥ १६ ॥

—×—

अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः ।
मया सन्तुष्टमनसः सर्वाः सुखमया दिशः ॥ १७ ॥

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं
न सार्वभौमं न रसाधिपत्यम्।
न योगसिद्धीरपुनर्भवं वा
मय्यर्पितात्मेच्छति मद्विनान्यत् ॥ १८ ॥
( ११।१४।१३–१४ श्रीकृष्णः )

अत्र भगवद्वचनेन हेतुमाह एकादशे उद्धवं प्रति त्रिभिः—अकिञ्चनस्येति। अकिञ्चनस्य निष्परिग्रहस्य मया स्मर्यमाणेनैव संतुष्टं मनो यस्य एवमानन्दसमुद्रे मग्नस्य कुतो दुःखानुस्मरणम् ॥ १७ ॥

परिपूर्णतामेवाह—न पारमेष्ठ्यमिति। रसाधिपत्यं पातालादिस्वाम्यम्। अपुनर्भवं मोक्षमपि। मद्विना मां हित्वा अन्यन्नेच्छति, अहमेव तस्य प्रेष्ठः। तथा च मत्स्मरणेनैव स कृतार्थः ॥ १८ ॥

श्रीकृष्ण भगवान् उद्धव से कहते हैं—जिनको कोई आकांक्षा नहीं, जो जितेन्द्रिय, शान्त, दान्त, और समदृष्टि होकर मेरे स्मरण में सन्तुष्ट रहते हैं, ऐसे लोग सब जगह आनन्द पाते हैं ॥ १७ ॥

जिसने अपना चित्त मुझमें अर्पण कर दिया, वह मुझको छोड़ न ब्रह्मपद चाहता है, न इन्द्रपद की इच्छा करता है; न सारी पृथ्वी का साम्राज्य ही चाहता है और न पाताललोक का राज्य ही उसे रुचिकर होता है; न वह योग सिद्धियाँ चाहता है, न उसे मोक्ष की ही इच्छा है। तात्पर्य यह है कि मुझे छोड़कर उसे कुछ भी नहीं चाहिए, मेरे स्मरण में ही वह कृतार्थ रहता है ॥ १८ ॥

—×—

मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः।
मय्यात्मना सुखं यद्वत्कुतस्तद्विषयात्मनाम् ॥ १९ ॥
( ११।१४।१२ श्रीकृष्णः )

एवं विषयसुखं मत्स्मरणसुखान्निकृष्टमिति किं वाच्यमित्याह—मयीति। सभ्य हे उद्धव! परमानन्दरूपेणात्मना स्वरूपेण स्फुरता ॥ १९ ॥

हे उद्धव! जिसने अपना मन मुझमें समर्पण कर दिया है और सब कामनाओं का त्याग कर दिया है उसको मुझसे जो सुख होता है, संसार के विषयों में लिपटे हुए पुरुष को वह आनन्द कहाँ मिल सकता है ॥ १९ ॥

—×—

वैरेण यं नृपतयः शिशुपालपौण्ड्र-
शाल्वादयो गतिविलासविलोकनाद्यैः।
ध्यायन्त आकृतधियः शयनासनादौ
तत्साम्यमापुरनुरक्तधियां पुनः किम्॥ २०॥
(११।५।४८ नारदः)

अत्र च श्रीहरिस्मरणमहिमन्यसम्भावना नास्तीति कैमुतिकन्यायेनेनाह—वैरेणेति। वैरेणापि शिशुपालादयो नृपतयः शयनासनादौ स्थिता विलासाद्यैः प्रकारैर्ये ध्यायन्तः तत्र मग्नमनसः सन्तः तस्य भगवतः साम्ये तुल्यत्वम् ऐक्यम् आपुः। यद्येवं तदानुरक्तधियां तत्साम्यप्राप्तिर्भवतीति किं वाच्यम्॥ २०॥

नारदजी वसुदेव से कहते हैं—जब शिशुपाल, पौण्ड्र, शाल्व आदि राजा लोग बैठते, उठते, खाते, पीते वैरभाव से भगवान् श्रीकृष्ण की चाल, रहन, सहन और चितवन आदि की चिन्ता करते हुए तत्स्वरूप हो गये, तो भला जो श्रद्धा और भक्ति से उनका ध्यान करते हैं उनकी तो बात ही क्या है? ॥ २०॥

—×—

निभृतमरुन्मनोक्षदृढयोगयुजो[१] हृदि
यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात्।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो
वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः॥ २१॥
(१०।८७।२३ श्रुतयः)

तत्राप्यसंभावनां परिहरति वेदवाक्येन—निभृतेति। मरुत्प्राणः मनश्च अक्षाणि इन्द्रियाणि च निभृतानि संयमितानि यैः ते दृढं योगं युञ्जन्ति दृढयोगयुजस्ते तथाभूता मुनयो हृदि यत्तत्त्वमुपासते तदरयोऽपि तव स्मरणाद्ययुः प्रापुः। स्त्रियोऽपि कामतः उरगेन्द्रभोगभुजदण्डविषक्तधियः, अहीन्द्रदेहसदृशयोर्भुजदण्डयोर्विषक्ता धीर्यासां ताः परिच्छिन्नदृष्टयः, सममपरिच्छिन्नं त्वां पश्यन्त्यो वयं श्रुत्यभिमानिन्यो देवता अपि ते समाः, कृपाविषयतया। अङ्घ्रिसरोजसुधाः अङ्घ्रिसरोजं सुष्ठु धारयन्त्यः ताः। अयं भावः—इत्थं भूतस्तव स्मरणानुभावः। ये योगिनस्त्वां

१. दृढाकृतिधिय इति पाठान्तरम्।

ह्यालम्बनम् उपासते, याश्च स्त्रियः कामतः परिच्छिन्नं ध्यायन्ति, ये च द्वेषेण सर्वानपि तांस्त्वामेव प्रापयतीति ॥ २१ ॥

श्रुतियाँ भगवान् की स्तुति करती हैं—मुनि लोग प्राण, मन एवं इन्द्रियों को अपने वश में रखते हुए योगारूढ होकर जिस पद को पाये उसको आपके शत्रु भी आपकी सतत चिन्ता से पा गये और गोपियां भी जो आपके नागराज वासुकि की तरह दीर्घ भुजाओं पर आसक्त होकर कामवश आपका ध्यान करती हुई तन्मय होकर उसी पद को प्राप्त हुई, तो हम श्रुतियां आपके चरणकमलों का भली-भांति ध्यान करती हैं और आपको परिच्छिन्न समझती हैं। समदर्शी आपकी कृपा के हम भी गोपियों के समान पात्र हैं। सारांश यह है कि भगवान् का प्रताप ऐसा है कि जो योगी उनका ध्यान करते हैं, जो उनको असीम जानता है, जो कामवश उनको परिच्छिन्न समझकर ध्यान करता है और जो द्वेष करता है उन सबको समान ही गति प्राप्त होती है ॥ २१ ॥

—×—

**एनः पूर्वकृतं यत्तद्राजानः कृष्णवैरिणः ।**
**जहुस्ते ते तदात्मानः कीटः पेशस्कृतो यथा ॥ २२ ॥**
**( ७।१०।३९ नारदः )**

ननु वैरिणां वैरकृते पापे विद्यमाने कथं भगवत्प्राप्तिः ? स्मरणमहिम्नैवेत्याह—**एन** इति। यद् एनः पापम्, इदानीं पापं कृतं पूर्वकृतं तत्सर्वं वैरिणोऽपि तदात्मानः कृष्णचेतसो जहुः तत् स्वरूपं चापुः। अत्र दृष्टान्तः—यथा कीटः पूर्वरूपं विहाय पेशस्कृतो भ्रमरविशेषस्य ध्यानेन तद्रूपतां याति ॥ २२ ॥

नारदजी धर्मराज युधिष्ठिर से कहते है—कृष्ण के वैरी शिशुपाल आदि राजाओं ने पहले किये हुए भगवान् के जो निन्दारूप पाप थे उनको अन्त में छोड़ दिया। और जैसे विलनी नामक कीट भ्रमर का ध्यान करते-करते अपना स्वरूप छोड़कर तद्रूप हो जाता है वैसे ही कृष्ण का स्मरण करते-करते वे भी श्रीकृष्ण भगवान् को प्राप्त हो गये ॥ २२ ॥

—×—

**विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ।**
**मामनुस्मरतश्चेतो मय्येव प्रविलीयते ॥ २३ ॥**
**( ११।१४।२७ श्रीकृष्णः )**

यो यस्य स्मर्ता स तद्रूपो भवतीति भगवद्वचनेनाह—विषयानिति। विषज्जते विषयाकारं भवति, मय्येव प्रविलीयते मदाकारं भवति। प्रशब्देन ध्याता तन्मयं प्राप्नोतीति दर्शितम्। तस्मात् साधूक्तं सर्वतः स्मरणसुखं गरीयः स्मर्तृमात्रं कृतार्थमिति ॥ २३ ॥

श्रीकृष्णजी उद्धव से कहते हैं—जो मनुष्य विषयों का ध्यान करता है उसका मन विषयों में ही आसक्त हो जाता है और जो सदा मेरा ध्यान रखता है उसका मन मुझमें ही लीन हो जाता है। अर्थात्—विषयों की चिन्ता करनेवाले का चित्त विषय में लिपटता है और मेरे ध्यान करनेवाले का चित्त मुझमें लीन हो जाता है ॥ २३ ॥

—×—

दृष्टस्तवाङ्घ्रियुगलं जनतापवर्गं
ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः।
संसारकूपपतितोत्तरणावलम्बं
ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥ २४ ॥

( १०।६९।१८ नारदः )

अत एव कृतार्थेनापि भगवत्स्मरणं प्रार्थ्यत इति नारदवचनेनाह—दृष्टमिति। भक्तजनताया अपवर्गरूपम्। किं च अति दुर्लभतया ब्रह्मादिभिर्योगेश्वरैरपि हृदि विचिन्त्य। किं च, संसारकूपे पतितानाम् उत्तरणायावलम्बमाश्रयम्। एवंभूतं तवाङ्घ्रियुगलं मया दृष्टम्, अतः कृतकृत्योऽस्मि; तथापि तव स्मृतिर्यथा स्यात्तथा अनुगृहाण। ततस्त्वां ध्यायन्नेव चरामीति ॥ २४ ॥

नारदजी भगवान् कृष्ण से कहते है—मैंने आपके युगल चरणकमल को देखा, जिससे लोगों को मोक्ष मिलता है, जिनकी उपासना ब्रह्मा आदि बड़े-बड़े ज्ञानी भी हृदय में करते हैं, जो संसार-कूप में गिरे हुए के उद्धार का आश्रय हैं। अब आप ऐसी कृपा कीजिए कि मैं उन चरणकमलों का सदा चिन्तन करता हुआ विचरता रहूँ और उनका स्मरण सर्वदा बना रहे ॥ २४ ॥

—×—

आहुश्च ते नलिननाभ पदारविन्दं
योगेश्वरैर्हृदि विचिन्त्यमगाधबोधैः।
संसारकूपपतितोत्तरणावलम्बं
गेहंजुषामपि मनस्युदियात् सदा नः ॥ २५ ॥

( १०।८२।४८ शुकः )

एवं च विषयत्यागाक्षमैरपि स्मरणं न त्याज्यमिति गोपीवाक्येनाह—आहुरिति। हे नलिननाभ! ते पदारविन्दं गेहंजुषां गेहसेविनामपि नोऽस्माकं मनसि सदा उदियात् आविर्भवेत्; स्वप्नेऽपि तत्पदस्मृतिविच्छेदो मा भूदिति भावः ॥ २५ ॥

भगवान् श्रीकृष्ण ने जब गोपियों को आध्यात्मिक ज्ञान की शिक्षा दी तब उनके बार बार स्मरण से उनका अज्ञान आवरण नष्ट हो गया और उन्होंने जो कुछ कहा उसीको शुकदेवजी ने इस पद्य से व्यक्त किया है। हे पद्मनाभ प्रभो ! आपके चरणकमलों का बड़े-बड़े ज्ञानी योगीश्वर भी हृदय में ध्यान करते है, जो संसार कूप में गिरे हुए के उद्धार का आश्रय हैं। हमारी आपसे यही प्रार्थना है कि गृहस्थी में फंसे हुए हमलोगों के मन में भी सदा उनका स्मरण बना रहे ॥ २५ ॥

—×—

तस्मादसदभिध्यानं स्वप्नमायामनोरथम्।
हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥ २६ ॥
(११।१४।२८ श्रीकृष्णः)

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलितविवेक-
तैरभुक्तपरमहंसविष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्ध-
श्रीमद्भक्तिरत्नावल्यां षष्ठं विरचनम् ॥

एवं प्रकरणार्थं भगवद्वचनेनोपसंहरति—तस्मादिति। यस्मादन्यत्साधनं तत्फलं च स्वप्न-मनोरथवदसदभिध्यानमात्रम्, तस्मात्तद्विहाय मय्येव मनः समाहितं कुरु; मद्भावभावितं मद्भावेन भजनेनैव शोधितं तावतैव सर्वानर्थनिवृत्तिः परमानन्दश्च स्यादिति ॥ २६ ॥

इति श्रीभक्तिरत्नावल्याः टीकायां कान्तिमालायां षष्ठं विरचनम्।

भगवान् कृष्ण उद्धवजी से कहते हैं—अत एव स्वप्न के मनोरथ के समान असत् साधनों की चिन्ता छोड़कर मेरी भक्ति से शुद्ध हुए मन को मुझमें ही लगाओ ॥ २६ ॥

———

## अथ सप्तमं विरचनम्

देवो सुरो मनुष्यो वा यक्षो गन्धर्व एव च ।
भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयम् ॥ १ ॥

(७।७।५० प्रह्लादः)

अथ पादसेवनं निरूपयितुं विरचनं प्रारभते । तत्र पादसेवनं नाम परिचर्या प्रतिमादौ । तत्र सर्वोपकारकं भगवत्पादसेवनमिति प्रह्लादवचनेनाह—देव इति । भजन् सेवमानः स्वस्तिमान् इहामुत्र च ॥ १ ॥

प्रह्लाद असुरबालकों से कहते हैं—देव असुर, मनुष्य, यक्ष और गन्धर्व कोई भी क्यों न हो, जो भगवान् के चरणकमल की सेवा करेंगे, वे जैसे हमलोग सुखी हुए हैं वैसे ही सुखी होंगे ॥ १ ॥

—×—

मत्प्राप्तये पद्मभवादयः[१] प्रभो
तप्यन्त उग्रन्तप ऐन्द्रियेधियः ।
ऋते भवत्पादपरायणान्न मां
विन्दन्त्यहं त्वद्धृदया यतोऽजित ॥ २ ॥

(५।१८।२२ रमा)

तत्र इह लोके कल्याणं दर्शयति लक्ष्मीवाक्येन—मत्प्राप्तये इति । मत्प्राप्तये ब्रह्मादयः तपस्तप्यन्ते कुर्वन्ति, कथंभूताः ? ऐन्द्रिये सुखे धीर्येषाम्, अलुक्समासः । तथापि भगवत्पाद-परायणादृते न मां विदन्ति मत्कटाक्षविलासिता विभूतीर्न लभन्त इत्यर्थः । त्वय्येव हृदयं यस्याः साहं त्वत्परतन्त्रत्वात् त्वदनुवर्तिन एव विलोकयामि, नान्यमित्यर्थः ॥ २ ॥

लक्ष्मीजी भगवान् से कहती हैं—हे अजित ! जिनकी बुद्धि इन्द्रियभोग्य विषय-सुख में लगी रहती है ऐसे ब्रह्मा, शिव, देवता, असुर आदि मेरी प्राप्ति के लिए उग्र तप करते हैं, किन्तु आपके पदकमल के सेवक के अतिरिक्त वे मुझे प्राप्त नहीं कर सकते हैं, क्योंकि मैंने तो आपको अपना हृदय समर्पण कर दिया है, अतः मैं आपके भक्तों पर ही कृपा करती हूँ ॥ २ ॥

---

१. अजेशसुरादय इति पाठान्तरम् ।

त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि
समाधिनावेशितचेतसैके ।
त्वत्पादपोतेन महत्कृतेन
कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥ ३ ॥
( १०।२।३० ब्रह्मादयः )

परत्रापि स्वस्त्याह—त्वय्यम्बुजाक्ष इति । एके केचिदेव मुख्या वा समाधिना त्वयि समावेशितचेतसोऽपि त्वत्पादपोतेन त्वच्चरणरूपेण पोतेन त्वत्सेवयेत्यर्थः । भवाब्धिं गोवत्सपदं कुर्वन्ति तरन्तीत्यर्थः । कथंभूतेन पादपोतेन ? महत्कृतेन महद्भिर्नारदादिभिः कृतेन मनसि सेव्यतया सम्पादितेन ॥ ३ ॥

भगवान् शङ्कर और ब्रह्माजी देवताओं के साथ कंस के कैदखाने में आकर देवकी के गर्भ में वर्तमान भगवान् की स्तुति कर रहे है—हे कमललोचन ! कोई बुद्धिमान् मनुष्य जो समस्त गुण के आश्रय आपका योग से ध्यान धरते है वे नारदादि बड़े-बड़े ऋषियों द्वारा मन में ध्यान किये गये आपके चरणकमलरूप नौका के सहारे बछड़े के खुर के गढे के समान अनायास ही संसारसागर को पारकर जाते है ॥ ३ ॥

—×—

अथापि ते देव पदाम्बुजद्वयं
प्रसादलेशानुगृहीत एव हि ।
जानाति तत्त्वं भगवन्महिम्नो
न चान्य एकोऽपि चिरं विचिन्वन् ॥ ४ ॥
( १०।१४।२९ ब्रह्मा )

ननु कथं तत्त्वज्ञानं विना पादसेवनमात्रेण भवाब्धितरणम् ? सत्यम्, तदप्यस्मादेवेत्याह ब्रह्मवाक्येन—अथापीति । अथापि यद्यपि तत्त्वज्ञानस्य बहूनि साधनानि, तथापि सेव्यमानस्य ते पादाम्बुजद्वयस्य प्रसादलेशेन अनुगृहीत एव भगवतस्तव यो महिमा तस्य तत्त्वं जानाति, अन्यस्तु एकः असङ्गोऽपि चिरमपि विचिन्वन्नपि योगाभ्यासरतोऽपि न जानातीति, त्वत्पादसेवी तु जानात्येवेति हिशब्दस्यार्थः ॥ ४ ॥

ब्रह्माजी भगवान् कृष्ण की स्तुति करते हैं—हे भगवन् ! जो आपके चरणकमलों की लेशमात्र भी कृपा को पा गया है वही आपकी यथार्थ महिमा के तत्त्व को समझ पाया है। दूसरे लोग निःसंग होकर दीर्घकाल तक योग तथा अनुसन्धान करने पर भी नहीं जान सकते ॥ ४ ॥

—×—

न यत्प्रसादायुतभागलेश-
मन्ये च देवा गुरवो जनाः स्वयम् ।
कर्त्तुं समेताः प्रभवन्ति पुंस-
स्तमीश्वरं त्वां शरण्यं प्रपद्ये ॥[१] ५ ॥
( ८।२४।४९ सत्यव्रतः )

अपि च त्वच्चरणारविन्दयोर्यः प्रसादस्तस्माद् यद्भवति तत् कुतोऽपि न भवतीति कैमुतिकन्यायेन सत्यव्रतस्य राज्ञो वचनेनाह—न यदिति । यत्प्रसादस्यायुतभागस्तस्य लेश-मप्यन्ये देवादयः सर्वे समेता अपि स्वयं तन्निरपेक्षाः सन्तः कर्तुं न प्रभवन्ति ॥ ५ ॥

राजा सत्यव्रत ईश्वर की स्तुति करते हुए कहते हैं—देवता, गुरु और अन्य लोग मिलकर भी आपके अनुग्रह के दश हजारवें हिस्से की एक कणिका के बराबर भी उपकार नहीं कर सकते, ऐसे आप ईश्वर की मैं शरण हूँ ॥ ५ ॥

—×—

मर्त्यो मृत्युव्यालभीतः पलायं-
ल्लोकान् सर्वान् निर्भयं नाध्यगच्छत् ।
त्वत्पादाब्जं प्राप्य यदृच्छयाद्य
स्वस्थः शेते मृत्युरस्मादपैति ॥ ६ ॥
( १०।३।२७ देवकी )

तत्त्वज्ञानस्य फलं सर्वतो भयनिवृत्तिरपि भगवत्पादसेवासाध्यैवेति देवकीवाक्येनाह—मर्त्य इति । मृत्युरेव व्यालः सर्पः तस्माद्भीतो लोकान् पलायमानः सन् निर्भयं भयाभावं नाध्यगच्छत्, सर्वलोकानां कालग्रस्तत्वात् । त्वत्पादाब्जं तु यदृच्छया केनापि भाग्योदयेन सेव्यतया प्राप्य हे आद्य ! स्वस्थः शेते, निर्भयो भवतीत्यर्थः । यतः अस्मात् त्वत्पादसेवकाद् मृत्युरपैति । यद्येवं तदा नरव्याघ्रादिभ्यो भयं न भवतीति किं वाच्यम् ॥ ६ ॥

देवकी अपने बालक में भगवान् पुरुषोत्तम के लक्षण देखकर उनकी स्तुति करती हुई कहती है—मनुष्य मृत्युरूप नाग से भय खाकर चाहे सभी लोकों में भागा करे, परन्तु निर्भय नहीं हो सकता, किन्तु जो सौभाग्यवश आपके चरणकमल का आश्रय ले लेता है, वह निडर होकर आराम से सोता है और उसके निकट मृत्यु भी नहीं जाती ॥ ६ ॥

—×—

१. श्लोकोऽयं क्वचित्पुस्तके नास्ति ।

तस्माद्रजोरागविषादमन्यु-
मानस्पृहाभयदैन्याधिमूलम् ।
हित्वा गृहं संसृतिचक्रवालं
नृसिंहपादं भजताकुतोभयम् ॥ ७ ॥
( ५।१८।१४ प्रह्लादः )

तदेवाकुतोभयत्वं प्रह्लादवचनेनाह—तस्मादिति । रजआदिभिर्यः आधिर्मनस्तापः तस्य मूलं हित्वा, कथंभूतं गृहम् ? संसृतेः संसारस्य चक्रवालं मण्डलम् । यतः पुनः पुनः संसारमण्डले भ्रमिर्भवतीत्यर्थः । अकुतोभयं नृसिंहपादं भजत सेवध्वम् ॥ ७ ॥

प्रह्लाद असुरबालको से कहते हैं—अत एव हे असुर बालकों ! तृष्णा, राग, विषाद, क्रोध, मान, कामना, भय, दीनता, मनोव्यथा इन सबों की जड़ जो घर है, जिससे इस लोक में जन्ममरणरूप आवागमन का चक्र चला करता है। उसको छोडकर सब प्रकार के भय से रहित होकर भगवान् नृसिंह के चरणकमलों का भजन करो ॥ ७ ॥

—×—

अथात आनन्ददुघं पदाम्बुजं
हंसाः श्रयेरन्नरविन्दलोचन ।
सुखं तु विश्वेश्वर योगकर्मभि-
स्त्वन्माययामी विहता न मायिनः ॥ ८ ॥
( ११।२९।३ उद्धवः )

ननु कस्मात्तर्हि सर्वे तत्पदाम्बुजं न भजन्ते, यतो मुच्यन्ते तन्मायामोहितत्वादेवेत्याह उद्धववाक्येन—अथात इति । यस्मात् पादसेवनादन्यत्र विषीदन्ति, अथातः अत एव ये हंसाः सारासारविवेकचतुराः ते तु आनन्ददुघं समस्तानन्दपूरकं तव पदाम्बुजमेव सुखं यथा भवति तथा नु निश्चितं सेवन्ते। अमी तु विषयिणः त्वन्मायया विहता योगकर्मभिः मानिनः सन्तो न श्रयन्ते। यद्वा अमी त्वद्भक्ताः त्वन्मायया न विहिता अत एव योगकर्मभिः कृत्वा मानिनो न भवन्ति। अन्ये तु त्वन्मायया मोहिताः सन्तो वयं योगज्ञाः कर्मकुशला इति केवलं गर्ववन्तो भवन्तीति न मुच्यन्ते इत्यर्थः ॥ ८ ॥

उद्धव जी भगवान् श्रीकृष्ण से कहते है—हे विश्वम्भर ! इसीलिए परमहंस लोग आपके परम आनन्द देनेवाले चरण-कमल का सुख से आश्रय लेते हैं। जो लोग योग और कर्म

से अहङ्कारयुक्त होकर आपका सेवन नहीं करते वे आपकी माया से मोहित होकर नष्ट हो जाते हैं॥ ८॥

—×—

कृच्छ्रो महानिह भवार्णवमप्लवेशां
षड्वर्गनक्रमसुखेन तितीर्षन्ति।
तत्त्वं हरेर्भगवतो भजनीयमङ्घ्रि
कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम्॥ ९॥
(४।२२।४० सनत्कुमारः)

ननु बहवः श्रेयो मार्गाः सन्ति, तत्कथमयमेव सारः, तत्राह सनत्कुमारवाक्येन—कृच्छ्रो महानिति। अप्लवेशां न प्लवस्तरणहेतुः, ईड् ईशो येषां तेषां महानिह दुस्तरतरणे कृच्छ्रः क्लेशः। ते हि असुखेन योगादिना इन्द्रियषड्वर्गग्राहं भवार्णवं तितीर्षन्ति, तत् तस्मात् त्वं हे राजन् कृत्वा उडुपं प्लवं दुस्तरार्णम्, दुस्तरार्णवमित्यर्थः॥ ६॥

सनत्कुमार राजा पृथु से कहते हैं—संसारसमुद्र जिसमें छः (काम, क्रोध, लोभ, मोह मद, मात्सर्य) रिपुरूप मगर हैं उसको जो लोग भगवान् के चरणरूप नाव का सहारा लिए विना योग आदि से पार करना चाहते हैं उनको बड़ी कठिनाई उठानी पड़ती है। इसलिए हे राजन्! आप भजनीय भगवान् के चरणकमल को नाव बनाकर सहज तरीके से दुस्तर संसार-सागर के दुःख से पार उतर जावो॥ ९॥

—×—

कस्त्वत्पदाब्जं विजहाति पण्डितो
यस्तेऽवमानव्ययमानकेतनः।
विशङ्कयास्मद्गुरुरर्चति स्म यद्
विनोपपत्तिं मनवश्चतुर्दश॥ १०॥
(४।२४।६७ रुद्रः)

तस्माद्भगवत्पादसेवा न त्याज्येति भवद्भिः नित्यमिदं जप्तव्यमिति प्रचेतसः प्रति रुद्र-वाक्येनाह—कस्त्वत्पदाब्जमिति। कः पण्डितः चेतनावान् ते तव विष्णोः पदाब्जं त्यजेत्; कथं-भूतः? यस्तवावमानोऽनादरस्तेन व्ययमानं केतनं शरीरं यस्य सः, त्वामनाद्रियमानस्य वृथैव देह-व्यय इत्यर्थः। त्वत्पदाब्जम् अस्माकं गुरुर्ब्रह्मार्चति स्म। विशङ्कया विना शङ्कया विनोपपत्तिं दृढविश्वासेन मनवः अर्चन्ति स्म॥ १०॥

भगवान् शिव अपने सामने हाथ जोड़े हुए प्रचेताओं को भगवान् का स्तोत्र सुना रहे हैं—ऐसा कौन विद्वान् है जो आपके चरणकमल को छोड़कर आपके अपमान से अपने शरीर को बरबाद करेगा। हमारे पिता ब्रह्मा और चौदह मनु भी दृढ विश्वास से आपके चरण-कमलों का ध्यान करते थे ॥ १० ॥

—X—

यत्पादसेवाभिरुचिस्तपस्विना-
मशेषजन्मोपचितं मलं धियः।
सद्यः क्षिणोत्यन्वहमेधती सती
यथा पदाङ्गुष्ठविनिःसृता सरित् ॥ ११ ॥
विनिर्धुताशेषमनोमलः पुमा-
नसङ्गविज्ञानविशेषवीर्यवान् ।
यदङ्घ्रिमूले कृतकेतनः पुन-
र्न संसृतिं क्लेशवहां प्रपद्यते ॥ १२ ॥
(४।२१।३१-३२ पृथुः)

किं च, अस्तु सेवा तदभिरुचिरपि श्रेयसीत्याह—यत्पादसेवेति। यस्य पादयोः सेवाया-मभिरुचिः तपस्विनां संसारे सन्तप्तानाम् अशेषैर्जन्मभिः संवृद्धं धियो मलं सद्यः क्षपयति। कथंभूता अहन्यहनि बर्द्धमाना सती सात्त्विकी। तत्पादस्यैवैष महिमेति दृष्टान्तेनाह—यथेति। सरिद् नदी गंगा ॥ ११ ॥

तत्फलमाह—विनिर्धुतेति। यस्य विष्णोः अङ्घ्रिमूले कृतकेतनः कृताश्रयः तत्सेवकः सन्नित्यर्थः, विनिर्द्धूता अशेषाः मनोमला यस्य। असंगो वैराग्यं तस्य विज्ञानस्य विशेषः साक्षात्कारः तदेव वीर्य्यं यस्य स संसृतिं न प्राप्नोतीत्यर्थः। एवंफला मनःशुद्धिः भगवत्पाद-सेवाभिरुचिमात्रेण भवति न चान्यथेत्यभिसन्धिः ॥ १२ ॥

राजा पृथु सभासदों से कह रहे हैं—जैसे भगवान् विष्णु के चरण के अंगूठे से निकली हुई गंगा जी मनुष्यों के पापों को क्षीण करती है वैसे ही प्रतिदिन बढ़ रही आपके चरण-कमल की सेवा की सात्त्विकी चाह संसार-दुःख से दुःखी मनुष्यों के सम्पूर्ण जन्मों से सञ्चित बुद्धि की मैल को शीघ्र साफ कर देती है। जब मनुष्यों के मन की मैल साफ हो जाती है, वैराग्य से

उत्पन्न आत्मसाक्षात्काररूपी बल का लाभ हो जाता है और भगवान् के चरण-कमलों का आसरा ले लेता है तब उसे क्लेशप्रद आवागमन से मुक्ति मिल जाती है ॥ ११–१२ ॥

—×—

कृष्णाङ्घ्रिपद्ममधुलिन्न पुनर्विसृष्ट-
मायागुणेषु रमते व्रजिनावहेषु ।
अन्यस्तु कामहत आत्मरजः प्रमार्ष्टु-
मीहेत कर्म यत एव रजः पुनः स्यात् ॥ १३ ॥
( ६।३।३३ यमः )

ननु कर्मणापि मनःशुद्धिर्भवति तत्राह—कृष्णाङ्घ्रीति । यः श्रीकृष्णस्य अङ्घ्रिपद्मे मधुलिट् भ्रमरः तत्सेवक इत्यर्थः । स विशेषतः सृष्टा मायागुणा·विषया येषु व्रजिनावहेषु व्रजिन-मात्रेषु गृहेषु न रमते । अन्यः कामहतः कामोपप्लुतः आत्मनः रजः प्रमार्ष्टुं कर्मैव ईहेत, यतः कर्मणः पुनः रज एव स्यात् । तस्मात् पादसेवनमेव श्रेष्ठमिति भावः ॥ १३ ॥

यमराज अपने दूतों से कह रहे हैं—भगवान् श्रीकृष्ण के चरणकमल के मधु का आस्वाद लेनेवाला पुरुष दुःखप्रद मायागुणों में, जो कि पहले छोड़े जा चुके हैं, नहीं रमते, किन्तु जो भगवान् के चरणकमल के सेवासुख को नही जानता, वह अनेक कामनाओं से तिरस्कृत होकर अपने पापों को धोने के लिए कर्म ही करना चाहता है, जिससे पुनः मैल ही पैदा होती है, मुक्ति नहीं मिलती ॥ १३ ॥

—×—

तदस्तु मे नाथ स भूरिभागो
भवेऽत्र वान्यत्र तु वा तिरश्चाम् ।
येनाहमेकोऽपि भवज्जनानां
भूत्वा निषेवे तव पादपल्लवम् ॥ १४ ॥
( १०।१४।३० ब्रह्मा )

तदेव ब्रह्मवाक्येन स्पष्टयति—तदस्तु मे इति । यत एवं तत्तस्माद्धेतोः स भूरिभागः तद् भूरिभाग्यम् । यद्वा भागः अंशः । अयमर्थस्त्वत्प्रसाददायस्य अन्यैरन्यो गृहीतो मम त्वयमेवांशः, अत्र भवे ब्रह्मजन्मनि तिरश्चामपि मध्ये यजन्म तस्मिन् वा येन भाग्येन भवदीयानां जनानाम् एकोऽपि कश्चिदपि भूत्वा तव पादपल्लवं निषेवे अत्यर्थं सेवे ॥ १४ ॥

ब्रह्मा जी भगवान् श्रीकृष्ण की स्तुति करते हैं—हे नाथ ! चाहे इस जन्म में अथवा पशुपक्षी के बीच में हुए अन्य जन्म में जिस सौभाग्य से मैं भी आपके भक्तों में एक भक्त होकर आपकी चरण-सेवा करूँ वह महान् सौभाग्य मुझे प्राप्त हो ॥ १४ ॥

—X—

समाश्रिता ये पदपल्लवप्लवं
महत्पदं पुण्ययशोमुरारेः ।
भवाम्बुधिर्वत्सपदं परं पदं
पदं पदं यद्विपदां न तेषाम् ॥ १५ ॥
( १०।१४।५८ शुकः )

अत्र पुनः पादपल्लवमेव तस्य फलमाह—समाश्रिता इति । पुण्यं यशो यस्य स पुण्ययशाः, स चासौ मुरारिश्च तस्य पदपल्लव एव प्लवः तं सम्यगाश्रिताः सेवमाना महतां पदमाश्रयम्, यद्वा महच्च तत्पदञ्चेति भिन्नं पदम् । तेषां भवाम्बुधिः वत्सपदमात्रं भवति । किञ्च परं पदं श्रीवैकुण्ठाख्यं पदं पदस्थानं भवति, विपदां यत्पदं विषयः कदाचिदपि तेषां तत्र पुनः भवति, न ततः पुनरावर्तन्त इत्यर्थः ॥ १४ ॥

शुकदेव जी राजा परीक्षित् से कहते हैं—जो लोग पुण्यश्लोक भगवान् श्रीकृष्ण के चरणकमल का अवलम्बन करते है, जो कि सन्तों का आश्रय है, वे संसारसमुद्र को गाय के बछड़े के खुर के गड्ढे के समान सहज ही लाघ जाते है । वे परमपद ( मोक्ष ) को प्राप्त होते है, विपदाओं के घर संसार को नहीं प्राप्त होते ॥ १५ ॥

—X—

लब्ध्वा जनो दुर्लभमत्र मानुषं
कथञ्चिदव्यङ्गमयत्नतोऽनघ ।
पादारविन्दं न भजत्यसन्मति-
र्गृहान्धकूपे पतितो यथा पशुः ॥ १६ ॥
( १०।५१।४६ मुचुकुन्दः )

एवमन्वयफलमुक्त्वा व्यतिरेके निन्दामाह मुचुकुन्दवाक्येन—लब्ध्वेति । अत्र कर्मभूमौ । अव्यङ्गम् अविकलाङ्गम् । किञ्च, असति विषयसुखे शूकरादिसाधारणैर्मतिर्यस्य । गृहमेव अन्धकूपः तस्मिन् पतितः, यथा पशुस्तृणलुब्धो अन्धकूपे पततीति ॥ १६ ॥

राजा मुचुकुन्द भगवान् श्रीकृष्ण से कह रहे हैं—जो पुरुष भाग्यवश इस लोक में दुर्लभ सकलाङ्गपूर्ण मानवशरीर को पाकर आपके चरणकमल को नहीं भजता वह पापी पशुके समान संसार-कूप में गिरता है[1] ॥ १६ ॥

—×—

विप्राद्द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचनेहितार्थ-
प्राणं पुनाति स कुलं न तु भूरिमानः ॥ १७ ॥
(७।९।१० प्रह्लादः)

ननु मा सेवतां भगवत्पादौ स्वधर्माचरणेनैव कृतार्थः स्यात्, तत्र कैमुतिकन्यायेनाह—विप्रादिति । विप्रादपि धर्मसत्यतपोदममात्सर्यह्रीतितिक्षाऽनसूयायज्ञदानधृतिश्रुतानि ये द्वादश-गुणास्तैर्युक्तादपि अरविन्दनाभस्य पादारविन्दाद्विमुखात् श्वपचं वरिष्ठं मन्ये । कथंभूतम् ? तस्मिन् अरविन्दनाभे अर्पिता मनआदयो येन । ईहितं कर्मवरिष्ठत्वे हेतुः । स एवं भूतः श्वपचः सर्वं कुलं पुनाति । भूरिः प्रचुरो मानो यस्य स तु विप्र आत्मानमपि न पुनाति, कुतः कुलम् । यतो भगवत्पादसेवाहीनस्यैते गुणा गर्वायैव भवन्ति, न शुद्धये । अतो यस्तद्धीनः स हीन इति भावः ॥ १७ ॥

प्रह्लाद भगवान् नृसिंह की स्तुति करते हैं—ब्राह्मण चाहे धर्म, सत्य आदि बारह[2] गुणों से भूषित क्यों न हो, यदि वह भगवान् के चरणकमल का ध्यान नहीं धरता, तो वह चाण्डाल ही उस भगवत्पादारविन्द से वा विमुख ब्राह्मण से अच्छा है जो सदा तन-मन धन और बचन से भगवान् का ध्यान धरता है । क्योंकि वह चाण्डाल भजन से अपने सारे कुल को पवित्र करता है, परन्तु वह अहङ्कारी ब्राह्मण अपने को भी पवित्र नही कर सकता, कुल की बात कौन कहे ॥ १७ ॥

---

१. जिस प्रकार पशु तृण के लोभ से घास से घिरे हुए अंधेरे कूप में गिरकर दुःख का अनुभव करता है, उसी प्रकार भगद्भजन न करनेवाला मनुष्य अपने घर में फँसकर अनेकविध कष्टों का अनुभव करता है ।

२. धर्म, सत्य, तप, दम, अमात्सर्य, लज्जा, द्वन्द्वसहिष्णुता, अनसूया, यज्ञ, दान, धैर्य और विद्या ये बारह शास्त्रों में ब्राह्मणों के गुण गिनाये गये है—

धर्मश्च सत्यञ्च दमः तपश्चामात्सर्यं ह्रीः तितिक्षाऽनसूया ।
यज्ञश्च दानञ्च धृतिः श्रुतञ्च वृत्तानि वै द्वादश ब्राह्मणस्य ॥

तानानयध्वमसतो विमुखान्मुकुन्द-
पादारविन्दमकरन्दरसादजस्रम् ।
निष्किञ्चनैः परमहंसकुलैरसङ्गै-
र्जुष्टाद् गृहे निरयवर्त्मनि बद्धतृष्णान् ॥ १८ ॥

( ६।३।२८ यमः )

न केवलं हीनः, यमयातनापात्रमपि स एवेत्याह यमवाक्येन—तानानयध्वमिति । असतः दुष्टान् तानेवाह मुकुन्दपदारविन्दयोर्यो मकरन्दरूपो रसः सेवासुखं तस्माद् विमुखान् । कथंभूतात् तद्रसात् ? हंसैः निष्किञ्चनैः अजस्रं जुष्टात् । तेषां विमुखानां ज्ञापकमाह—निरयवर्त्मनि स्वधर्मशून्ये गृहे बद्धा तृष्णा यैस्तान् ।। १८ ॥

यमराज अपने दूतों से कहते हैं—उन दुष्टों को पकड़ लाओ जो अपरिग्रही एवं अहङ्कार से शून्य परमहंसों द्वारा सेवित भगवान् श्रीकृष्ण के पादारविन्द-परागरूप-रस से विमुख हैं और नरक के मार्गरूपी गृह में सदा आसक्त हैं ॥ १८ ॥

—×—

देवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः ।
येनाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चकः ॥ १९ ॥

( १०।६३।४१ रुद्रः )

किञ्च जीवन्मृता एव ते इत्याह रुद्रवाक्येन—देवदत्तमिति । इमम् अव्यङ्गं नृलोकं मानुषशरीरं देवेन त्वयैव दत्तं नाद्रियेत त्वत्पादौ ॥ १९ ॥

रुद्र जी भगवान् श्रीकृष्ण से कहते हैं—जो इन्द्रियों के वश में है, आपके दिये हुए इस मानवशरीर को पाकर भी आपके चरणकमल का ध्यान नहीं करता, उसके लिए शोक करना चाहिए ॥ ९ ॥

—×—

त्वत्पादुके अविरतं परि ये चरन्ति
ध्यायन्त्यभद्रनशने शुचयो गृणन्ति ।
विन्दन्ति ते कमलनाभभवापवर्ग-
माशासने यदि त आशिष ईश नान्ये ॥ २० ॥

( १०।७२।४ युधिष्ठिरः )

यस्तु त्वत्पादसेवी स कृतार्थ इत्याह युधिष्ठिरवाक्येन—त्वत्पादुके इति । त्वत्पादुके परिलब्ध्वा चरन्तीति । यच्छन्दव्यवधानमार्षम् । ये परिचरन्ति देहेन सेव्यतया ध्यायन्ति मनसा । तथा गृणन्ति वाचा । कथंभूते ? अभद्रस्य नशने नाशके । ते भवस्यापवर्गे मोक्षं विन्दन्ति । यद्याशासते तर्हि आशिषोऽपि ते एव विन्दन्ति, नान्ये चक्रवर्तिनोऽपि ॥ २० ॥

धर्मराज युधिष्ठिर भगवान् श्रीकृष्ण से कहते है—हे पद्मनाभ ! जो लोग अमंगल नाश करनेवाले आपकी युगल खड़ाउओं की सदा सेवा करते है और उनका ध्यान एवं कीर्तन करते हैं वे संसारसागर से मुक्ति पा जाते हैं, वे पवित्र हैं। यदि वे किसी वस्तु की चाह करते हैं तो उन्हें वह भी मिल जाती है। परन्तु हे परमेश ! जो लोग आपकी सेवा से भागते हैं वे चक्रवर्ती राजा ही क्यों न हों पर वैसा मङ्गल नहीं पाते ॥ २ ॥

—×—

न नाकपृष्ठं न च सार्वभौमं
न पारमेष्ठ्यं न रसाधिपत्यम् ।
न योगसिद्धिरपुनर्भवं वा
वाञ्छन्ति यत्पादरजःप्रपन्नाः ॥ २१ ॥
( १०।१६।३७ नागपत्न्यः )

वस्तुतस्तु न वाञ्छन्त्येवेत्याह—न नाकपृष्ठमिति । यस्य विष्णोः पादरजःप्रपन्नाः तत्सेवकाः नाकपृष्ठादि न वाञ्छन्तीति ॥ २१ ॥

नागपत्नियाँ भगवान् श्रीकृष्ण से कहती हैं—आपके चरण के शरणागत भक्त लोग न तो स्वर्ग चाहते है, न सारा पृथ्वी का चक्रवर्ती राज्यपद चाहते है, न ब्रह्मपद की ही उन्हें चाह है, न सारे संसार का राज्य चाहते हैं और न मोक्ष ही चाहते है ॥ २१ ॥

—×—

न कामयेऽन्यं तव पादसेवना-
दकिञ्चनप्रार्थ्यतमाद्वरं विभो ।
आराध्य कस्त्वां ह्यपवर्गदं हरे
वृणीत आर्यो वरमात्मबन्धनम् ॥२२॥
( १०।५१।५५ मुचुकुन्दः )

तर्हि किं वाञ्छन्तीति तत्राह—न कामये इति । तव पादसेवनादन्यं वरं न कामये, तव पादसेवनमेव कामये इत्यर्थः । अकिञ्चना निवृत्ताभिमानाः आर्यो विवेकी ॥ २२ ॥

राजा मुचुकुन्द भगवान् श्रीकृष्ण से कह रहे हैं—हे प्रभो ! मैं आपके चरणकमल की सेवा को छोड़कर—जिसको निष्काम परमहंस सबसे अधिक प्रार्थनीय वस्तु समझते हैं—दूसरा वर नहीं माँगता हूँ क्योंकि कौन ऐसा विवेकी पुरुष होगा जो मुक्ति देनेवाले की सेवा द्वारा सन्तुष्ट कर अपने को बन्धन में डालनेवाला दूसरा वर माँगेगा ॥ २२ ॥

—×—

**न वयं साध्वि साम्राज्यं स्वराज्यं भोज्यमप्युत ।**
**वैराज्यं पारमेष्ठ्यं वा आनन्त्यं वा हरेः पदम् ॥ २३ ॥**
**कामयामह एतस्य श्रीमत्पादरजः श्रियः ।**
**कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥ २४ ॥**
**( १०।८३।४१-४२ महिष्यः )**

ननु आत्मबन्धनत्वाद् वरान्तरं मा वृणोतु, मोक्षेण किमपराद्धमिति चेद् न; तत्पाद-सेवारसिकस्य तद्विरोधिषु विषयेष्विव तच्छून्ये मोक्षादावपि वैराग्यौचित्यादित्याह द्वाभ्याम्, श्रीकृष्णपत्नीवाक्येन—न वयमिति । हे साध्वि ! द्रौपदि ! साम्राज्यं सार्वभौमपदम् स्वराज्यम्, ऐन्द्रं पदम्, भोज्यं तदुभयभोगभाक्तम् । विविधेन राजत इति विराट् तस्य भावो वैराज्यम्, अणिमादि-सिद्धिभाक्तमित्यर्थः । पारमेष्ठ्यं ब्रह्मपदम्, आनन्त्यं मोक्षं हरेः पदं तत्सालोक्यं न तु कामयामहे । यद्वा पूर्वादिदिक्चतुष्टयाधिपत्यं साम्राज्यादिचतुष्कम् । किन्तु एतस्य गदाभृतः श्रीमत्सर्व-सम्पदाश्रयपादरजो मूर्ध्ना वोढुं कामयामहे । तत्सेवामेव वाञ्छाम इत्यर्थः । तत्किं पादरज एव काम्यते अत आहुः—श्रियः कुचयोः कुङ्कुमस्य गन्धेन आढ्यं ब्रह्मादिसेव्यया श्रियापि सेवितत्वादिति भावः ॥ २३-२४ ॥

भगवान् श्रीकृष्ण की पत्नियाँ सती द्रौपदी से कह रही है—हे पतिव्रते द्रौपदी ! हम लोग न तो सारी पृथ्वी का साम्राज्य, न स्वर्गादि भोगों की प्राप्ति, न अणिमादि सिद्धियों की उपलब्धि, न ब्रह्मपद, न मोक्ष और न बैकुण्ठ धाम ही चाहती है । हमलोग तो केवल भगवान् के चरणकमल का रज जो लक्ष्मी जी के स्तन के केशर से सुगन्धित है उसी को अपने मस्तक पर धारण करना चाहती हैं ॥ २३-२४ ॥

—×—

यस्तु त्वत्पादसेवी स कृतार्थ इत्याह युधिष्ठिरवाक्येन—त्वत्पादुके इति । त्वत्पादुके परिलभ्ध्वा चरन्तीति । यच्छब्दव्यवधानमार्षम् । ये परिचरन्ति देहेन सेव्यतया ध्यायन्ति मनसा । तथा गृणन्ति वाचा । कथंभूते ? अभद्रस्य नशने नाशके । ते भवस्यापवर्गे मोक्षं विन्दन्ति । यद्याशासते तर्हि आशिषोऽपि ते एव विन्दन्ति, नान्ये चक्रवर्तिनोऽपि ॥ २० ॥

धर्मराज युधिष्ठिर भगवान् श्रीकृष्ण से कहते है—हे पद्मनाभ ! जो लोग अमंगल नाश करनेवाले आपकी युगल खड़ाउओं की सदा सेवा करते है और उनका ध्यान एवं कीर्तन करते हैं वे संसारसागर से मुक्ति पा जाते हैं, वे पवित्र हैं। यदि वे किसी वस्तु की चाह करते हैं तो उन्हें वह भी मिल जाती है । परन्तु हे परमेश ! जो लोग आपकी सेवा से भागते हैं वे चक्रवर्ती राजा ही क्यों न हों पर वैसा मङ्गल नहीं पाते ॥ २ ॥

—×—

न नाकपृष्ठं न च सार्वभौमं<br>
न पारमेष्ठ्यं न रसाधिपत्यम् ।<br>
न योगसिद्धिरपुनर्भवं वा<br>
वाञ्छन्ति यत्पादरजःप्रपन्नाः ॥ २१ ॥<br>
( १०।१६।३७ नागपत्न्यः )

वस्तुतस्तु न वाञ्छन्त्येवेत्याह—न नाकपृष्ठमिति । यस्य विष्णोः पादरजःप्रपन्ना तत्सेवकाः नाकपृष्ठादि न वाञ्छन्तीति ॥ २१ ॥

नागपत्नियाँ भगवान् श्रीकृष्ण से कहती हैं—आपके चरण के शरणागत भक्त लोग न तो स्वर्ग चाहते है, न सारा पृथ्वी का चक्रवर्ती राज्यपद चाहते हैं, न ब्रह्मपद की ही उन्हे चाह है, न सारे संसार का राज्य चाहते हैं और न मोक्ष ही चाहते हैं ॥ २१ ॥

—×—

न कामयेऽन्यं तव पादसेवना-<br>
दकिञ्चनप्रार्थ्यतमाद्वरं विभो ।<br>
आराध्य कस्त्वां ह्यपवर्गदं हरे<br>
वृणीत आर्यो वरमात्मबन्धनम् ॥२२॥<br>
( १०।५१।५५ मुचुकुन्दः )

तर्हि किं वाञ्छन्तीति तत्राह—न कामये इति। तव पादसेवनादन्यं वरं न कामये, तव पादसेवनमेव कामये इत्यर्थः। अकिञ्चना निवृत्ताभिमानाः आर्यो विवेकी ॥ २२ ॥

राजा मुचुकुन्द भगवान् श्रीकृष्ण से कह रहे हैं—हे प्रभो! मैं आपके चरणकमल की सेवा को छोड़कर—जिसको निष्काम परमहंस सबसे अधिक प्रार्थनीय वस्तु समझते है—दूसरा वर नही माँगता हूँ क्योंकि कौन ऐसा विवेकी पुरुष होगा जो मुक्ति देनेवाले को सेवा द्वारा सन्तुष्ट कर अपने को बन्धन में डालनेवाला दूसरा वर माँगेगा ॥ २२ ॥

—×—

न वयं साध्वि साम्राज्यं स्वराज्यं भोज्यमप्युत।
वैराज्यं पारमेष्ठ्यं वा आनन्त्यं वा हरेः पदम् ॥ २३ ॥
कामयामह एतस्य श्रीमत्पादरजः श्रियः।
कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥ २४ ॥
(१०।८३।४१–४२ महिष्यः)

ननु आत्मबन्धनत्वाद् वरान्तरं मा वृणोतु, मोक्षेण किमपराद्धमिति चेद् न; तत्पाद-सेवारसिकस्य तद्विरोधिषु विषयेष्विव तच्छून्ये मोक्षादावपि वैराग्यौचित्यादित्याह द्वाभ्याम्, श्रीकृष्णपत्नीवाक्येन—न वयमिति। हे साध्वि! द्रौपदि! साम्राज्यं सार्वभौमपदम् स्वराज्यम्, ऐन्द्रं पदम्, भोज्यं तदुभयभोगभाक्तम्। विविधेन राजत इति विराट् तस्य भावो वैराज्यम्, अणिमादि-सिद्धिभाक्तमित्यर्थः। पारमेष्ठ्यं ब्रह्मपदम्, आनन्त्यं मोक्षं हरेः पदं तत्सालोक्यं न तु कामयामहे। यद्वा पूर्वादिदिक्चतुष्टयाधिपत्यं साम्राज्यादिचतुष्कम्। किन्तु एतस्य गदाभृतः श्रीमत्सर्व-सम्पदाश्रयपादरजो मूर्ध्ना वोढुं कामयामहे। तत्सेवामेव वाञ्छाम इत्यर्थः। तत्किं पादरज एव काम्यते अत आहुः—श्रियः कुचयोः कुङ्कुमस्य गन्धेन आढ्यं ब्रह्मादिसेव्यया श्रियापि सेवितत्वादिति भावः ॥ २३-२४ ॥

भगवान् श्रीकृष्ण की पत्नियाँ सती द्रौपदी से कह रही है—हे पतिव्रते द्रौपदी! हम लोग न तो सारी पृथ्वी का साम्राज्य, न स्वर्गादि भोगों की प्राप्ति, न अणिमादि सिद्धियों की उपलब्धि, न ब्रह्मपद, न मोक्ष और न बैकुण्ठ धाम ही चाहती है। हमलोग तो केवल भगवान् के चरणकमल का रज जो लक्ष्मी जी के स्तन के केशर से सुगन्धित है उसी को अपने मस्तक पर धारण करना चाहती है ॥ २३–२४ ॥

—×—

को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम् ।
न भजेत् सर्वतो मृत्युरुपास्यममरोत्तमैः ॥२५॥
( ११।२।२ शुकः )

तस्मात् फलितमाह शुकवाक्येनाह–को नु राजन्निति । हे राजन् ! परीक्षित् ! इन्द्रियवान् अविकलेन्द्रियः । सर्वतो मृत्युः भयं यस्य सः । मुकुन्दचरणाम्बुजं भजेत तस्यैव अभयत्वादिति भावः ॥ २५ ॥

शुकदेव जी राजा परीक्षित् से कहते हैं—हे राजन् ! चारों ओर से मृत्यु द्वारा घिरा ऐसा कौन ज्ञानवान् मनुष्य है जो बड़े-बड़े देवताओं के उपास्य श्रीहरि के चरणकमल को न भजे ॥ २५ ॥

—×—

मन्येऽकुतश्चिद्भयमच्युतस्य
पादाम्बुजोपासनमत्र नित्यम् ।
उद्विग्नबुद्धेरसदात्मभावाद्-
विश्वात्मना यत्र निवर्तते भीः ॥ २६ ॥
( ११।२।३३ कविः )

एतदेव कविवाक्येनाह—मन्य इति । न कुतश्चिद्भयं यस्य तदकुतश्चिदभयं तव अत्र संसारे असदात्मभावाद् असति देहादौ आत्मभावाद् भावनातः नित्यं सर्वदा उद्विग्नबुद्धः विश्वात्मना सर्वथा निःशेषं यत्र पदाम्बुजोपासने भीः निवर्तते तत् । तस्मात् स्वधर्मत्यागेनापि भगवत्पादसेवनं कार्यमिति रहस्यम् ॥ २६ ॥

कवि विदेह से कह रहे हैं—इस संसार में देह आदि अनित्य पदार्थों में आत्मबुद्धि करने से सदा त्रिविध तापों से तप्त लोगों के सब प्रकार के भय को भगवान् के चरणारविन्द की बन्दना ही दूर करती है, ऐसा मैं समझता हूँ, क्योकि उनके चरण की उपासना करने से भय सर्वथा दूर हो जाता है ॥ २६ ॥

—×—

त्यक्त्वा स्वधर्मं चरणाम्बुजं हरे-
र्भजन्नपक्वोऽथ पतेत् ततो यदि ।

यत्र क्व वा भद्रमभूदमुष्य किं
को वार्थ आप्तोऽभजतां स्वधर्मतः ॥२७॥
( १।५।१७ नारदः )

नन्वेवमपि भगवत्पादसेवने प्रवृत्तस्य तत्परिपाके स्वधर्मत्यागादनर्थ एव स्यात्तत्राह—त्यक्त्वेति। ततो भजनात् कथञ्चिदपि यदि भ्रश्येत म्रियेत पतेद् वा तथापि भक्तिरसिकस्य कर्मानधिकाराद् नानर्थशङ्का अङ्गीकृत्याप्याह। वाशब्दः कटाक्षे। यत्र क्व वा नीचयोनावपि अमुष्य भक्तिरसिकस्य अभद्रमभूत् किं? नाभूदेवेत्यर्थः। भक्तिवासनासद्भावादिति भावः। परमेश्वरमभजद्भिस्तु केवलं स्वधर्मतः को वा अर्थः प्राप्तः। अभजतामिति षष्ठी तु सम्बन्धमात्रविवक्षया॥ २७ ॥

नारदजी व्यासजी से कह रहे है—अपने धर्म का त्याग कर भगवान् के चरणारविन्द का सेवन करता हुआ पुरुष यदि कृतार्थ होने से पहले ही मर जाए, तो क्या उसका अमंगल होगा? जो ईश्वर का भजन नही करते उन्होंने स्वधर्म-पालन से कौन-सा फल पा लिया है? ॥ २७ ॥

—×—

स्वपादमूलं भजतः प्रियस्य
त्यक्त्वान्यभावस्य हरिः परेशः।
विकर्म यच्चोत्पतितं कथञ्चिद्
धुनोति सर्वं हृदि सन्निविष्टः ॥ २८ ॥
( ११।५।४२ करभाजनः )

परिपक्वस्य तु ( पापमेव पतनमिति पाठान्तरम् ) न भवति कुतोऽनर्थशङ्का इत्याह—स्वपादमूलमिति। त्यक्तः अन्यस्मिन् देहादौ देवतान्तरे वा भावो येन, अत एव तस्य विकर्मणि प्रवृत्तिरेव न संभवति। यच्च कथञ्चित् प्रमादादिना वा उत्पतितं भवेत् तदपि हरिर्धुनोति। ननु यमस्तन्न मन्येत तत्राह—परेशः, परे कालयमादयः, तेषामपि नियन्ता। ननु श्रुतिस्मृती ममैवाज्ञे इति भगवद्वचनात् स्वाज्ञाभङ्गं कथं सहेत? तत्राह—प्रियस्य पुत्रादिवत्। ननु नायं पापक्षयार्थं भजते तत्राह—हृदि सन्निविष्टः सेव्यतया, नहि वस्तुशक्तिरर्थितामपेक्षत इत्यर्थः। तस्माद् बुद्धिपूर्वकेऽपि विहितत्यागे प्रामादिकेऽविहिताचरणे च न भक्तस्य प्रायश्चित्तान्तरमपीति भावः ॥२८॥

को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम् ।
न भजेत् सर्वतो मृत्युरुपास्यममरोत्तमैः ॥२५॥
( ११।२।२ शुकः )

तस्मात् फलितमाह शुकवाक्येनाह–को नु राजन्निति । हे राजन् ! परीक्षित् ! इन्द्रियवान् अविकलेन्द्रियः । सर्वतो मृत्युः भयं यस्य सः । मुकुन्दचरणाम्बुजं भजेत तस्यैव अभयत्वादिति भावः ॥ २५ ॥

शुकदेव जी राजा परीक्षित् से कहते हैं—हे राजन् ! चारों ओर से मृत्यु द्वारा घिरा ऐसा कौन ज्ञानवान् मनुष्य है जो बड़े-बड़े देवताओं के उपास्य श्रीहरि के चरणकमल को न भजे ॥ २५ ॥

—×—

मन्येऽकुतश्चिद्भयमच्युतस्य
पादाम्बुजोपासनमत्र नित्यम् ।
उद्विग्नबुद्धेरसदात्मभावाद्-
विश्वात्मना यत्र निवर्तते भीः ॥ २६ ॥
( ११।२।३३ कविः )

एतदेव कविवाक्येनाह—मन्य इति । न कुतश्चिद्भयं यस्य तदकुतश्चिदभयं तव अत्र संसारे असदात्मभावाद् असति देहादौ आत्मभावाद् भावनातः नित्यं सर्वदा उद्विग्नबुद्धः विश्वात्मना सर्वथा निःशेषं यत्र पदाम्बुजोपासने भीः निवर्तते तत् । तस्मात् स्वधर्मत्यागेनापि भगवत्पादसेवनं कार्यमिति रहस्यम् ॥ २६ ॥

कवि विदेह से कह रहे हैं—इस संसार में देह आदि अनित्य पदार्थों में आत्मबुद्धि करने से सदा त्रिविध तापों से तप्त लोगों के सब प्रकार के भय को भगवान् के चरणारविन्द की वन्दना ही दूर करती है, ऐसा मैं समझता हूँ, क्योंकि उनके चरण की उपासना करने से भय सर्वथा दूर हो जाता है ॥ २६ ॥

—×—

त्यक्त्वा स्वधर्मं चरणाम्बुजं हरे-
र्भजन्नपक्वोऽथ पतेत् ततो यदि ।

यत्र क्व वा भद्रमभूदमुष्य किं
को वार्थ आप्तोऽभजतां स्वधर्मतः ॥२७॥

( १।५।१७ नारदः )

नन्वेवमपि भगवत्पादसेवने प्रवृत्तस्य तदपरिपाके स्वधर्मत्यागादनर्थ एव स्यात्तत्राह—त्यक्त्वेति। ततो भजनात् कथञ्चिदपि यदि भ्रश्येत म्रियेत पतेद् वा तथापि भक्तिरसिकस्य कर्मानधिकाराद् नानर्थशङ्का अङ्गीकृत्याप्याह। वाशब्दः कटाक्षे। यत्र क्व वा नीचयोनावपि अमुष्य भक्तिरसिकस्य अभद्रमभूत् किं? नाभूदेवेत्यर्थः। भक्तिवासनामद्भावादिति भावः। परमेश्वरमभजद्भिस्तु केवलं स्वधर्मतः को वा अर्थः प्राप्तः। अभजतामिति षष्ठी तु सम्बन्धमात्रविवक्षया॥ २७॥

नारदजी व्यासजी से कह रहे हैं—अपने धर्म का त्याग कर भगवान् के चरणारविन्द का सेवन करता हुआ पुरुष यदि कृतार्थ होने से पहले ही मर जाए, तो क्या उसका अमंगल होगा? जो ईश्वर का भजन नही करते उन्होंने स्वधर्म-पालन से कौन-सा फल पा लिया है?॥ २७॥

—×—

स्वपादमूलं भजतः प्रियस्य
त्यक्त्वान्यभावस्य हरिः परेशः।
विकर्म यच्चोत्पतितं कथञ्चिद्
धुनोति सर्वं हृदि सन्निविष्टः॥ २८॥

( ११।५।४२ करभाजनः )

परिपक्वस्य तु (पापमेव पतनमिति पाठान्तरम्) न भवति कुतोऽनर्थशङ्का इत्याह—स्वपादमूलमिति। त्यक्तः अन्यस्मिन् देहादौ देवतान्तरे वा भावो येन, अत एव तस्य विकर्मणि प्रवृत्तिरेव न संभवति। यच्च कथञ्चित् प्रमादादिना वा उत्पतितं भवेत् तदपि हरिर्धुनोति। ननु यमस्तत्र मन्येत तत्राह—परेशः, परे कालयमादयः, तेषामपि नियन्ता। ननु श्रुतिस्मृती ममैवाज्ञे इति भगवद्वचनात् स्वाज्ञाभङ्गं कथं सहेत? तत्राह—प्रियस्य पुत्रादिवत्। ननु नायं पापक्षयार्थं भजते तत्राह—हृदि सन्निविष्टः सेव्यतया, नहि वस्तुशक्तिरर्थितामपेक्षत इत्यर्थः। तस्माद् बुद्धिपूर्वकेऽपि विहितत्यागे प्रामादिकेऽविहिताचरणे च न भक्तस्य प्रायश्चित्तान्तरमपीति भावः॥२८॥

करभाजन विदेह से कहते हैं—जो एकनिष्ठ होकर भगवान् के चरणारविन्द का ध्यान करता है उस भगवत्प्रिय भक्त के हृदय में यदि कोई पापप्रवृत्ति कथञ्चित् उपज जाए तो हृदय में स्थित परमेश्वर उसे नष्ट कर देते है ॥ २८ ॥

—×—

**को नु त्वच्चरणाम्भोजमेवंवित् विसृजेद् पुमान् ।**
**निःकिञ्चनानां शान्तानां मुनीनां यस्त्वमात्मदः ॥ २९ ॥**

**( १०।८६।३३ बहुलाश्वः )**

**उक्तमर्थं जनकवाक्येन द्रढयति—को नु त्वच्चरणाम्भोजमिति । एवंवित् पूर्वोक्तज्ञाता विसृजेद् न भजेत, भजित्वा वा त्यजेत् । निःकिञ्चनानां त्वां विना न विपद्यते किञ्चन येषाम् ॥ २९ ॥**

बहुलाश्व भगवान् कृष्ण से कहते है—जो मनुष्य यह जानता है कि आप अभिमान रहित, शान्त और भजनशील भक्तों के वश में हो जाते हैं वह आपकी इस प्रकार की महिमा जानकर आपके चरणकमल को कैसे छोड़ सकता है ? ॥ २९ ॥

—×—

**तावद्भयं द्रविणदेहसुहृन्निमित्तं**
**शोकस्पृहापरिभवो विपुलश्च लोभः ।**
**तावन्ममेत्यसदवग्रह आर्तिमूलं**
**यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः ॥ ३० ॥**

**( ३।९।६ ब्रह्मा )**

**किं बहुना, भगवत्पादसेवावधिरेव सर्वोऽप्यनर्थ इति ब्रह्मवाक्येनाह—तावदिति । द्रविणादौ विद्यमाने भयं गते शोकः, पुनश्च स्पृहा, ततः परिभवः, तथापि विपुलो लोभः तृष्णा, पुनः कथञ्चित् प्राप्ते ममेत्यसदवग्रहः आर्तिमूल भयशोकादेः कारणं तावदेव यावत् तेऽङ्घ्रिमूलं न प्रवृणीत सेव्यतया नाश्रयेत । तदनन्तरं सर्वभयनिवृत्तिरेवेति भावः ॥ ३० ॥**

ब्रह्मा जी भगवान् से कहते हैं—जब तक लोग आपके भयहारी चरणों की शरण नहीं लेते.तभी तक मैं, मेरा ऐसा मिथ्या आग्रह जो दुःख की जड़ है तथा धन, देह, मित्र के नष्ट हो जाने का डर, शोक आकांक्षा, पराभव का तिरस्कार अधिक लोभ इस प्रकार के सभी क्लेश बने रहते है ॥ ३० ॥

—×—

ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ।
क्षेमाय पादमूलं ते प्रविशन्त्यकुतोभयम् ॥ ३१ ॥

( ३।२५।४३ कपिलः )

एवं योगिनामपि इदमेवाभयमित्याह कपिलवाक्येन—ज्ञानेति । ज्ञान पादसेवाकर्तव्यतया निश्चयः वैराग्यम् इहामुत्र च । भक्तिरेव योगः तेन प्रविशन्ति सेवन्त इत्यर्थः ॥ ३१ ॥

कपिलजी अपनी माता देवहूति से कह रहे हैं—योगी लोग कल्याण-प्राप्ति के लिए ज्ञान और वैराग्य सहित भक्तियोग से आश्रय देनेवाले मेरे पद-कमल का सहारा लेते है ॥ ३१ ॥

—×—

इत्यच्युताङ्घ्रिंभजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य राजन्
ततः परां शान्तिमुपैति साक्षात् ॥३२॥

( ११।२।४३ कविः )

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलितविवेक-
तैरभुक्तपरमहंसविष्णुपुरीप्रथितायां श्रीभागवतामृताब्धिलब्ध-
श्रीभगवद्भक्तिरत्नावल्यां सप्तमं विरचनम् ॥

एवं प्रकरणार्थमुपसंहरति—इत्यच्युताङ्घ्रिमिति । अनुवृत्त्या सेवया भजतः भक्तिप्रेमलक्षणा भगवतः प्रबोधः अन्तःकरणे प्रकाशः । हे राजन् जनक ! ज्ञानादयो भवन्ति ततः साक्षात् अविलम्बेन पराम् उत्कृष्टां शान्तिमुपैति प्राप्नोति । भगवत्पादसेवका भगवत्प्रसादादिहामुत्र कृतार्था भवन्तीति भावः ॥ ३२ ॥

**इति श्रीभक्तिरत्नावल्याः टीकायां कान्तिमालायां सप्तमं विरचनम् ॥ ७ ॥**

कवि राजा विदेह से कहते हैं—हे राजन् ! इस प्रकार अभ्यास से भगवान् के चरण-कमल की सेवा करने से भक्त को भक्ति, तत्त्वज्ञान और वैराग्य प्राप्त होते हैं, तदनन्तर वह साक्षात् परमशान्ति पाता है ॥ ३२ ॥



# अथाष्टमं विरचनम्

यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः।
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या ॥ १ ॥

( ४।३१।१४ नारदः )

अथार्चनं निरूपयितुं विरचनमारभते। तत्रार्चनं नाम पूजा। तत्र भगवत्पूजया सर्वेषां पूजा कृता भवतीत्याह—यथेति। मूलात् प्रथमविभागाः स्कन्धाः, तद्विभागाः भुजास्तेषामपि उपशाखाः। एतदुपलक्षणम्। पत्रपुष्पादयोऽपि तृप्यन्ति। ननु मूलमेकं विना स्वस्वनिषेचनेन प्राणस्योपहारो भोजनं तस्मादेवेन्द्रियाणां तृप्तिः, न तु तत्तदिन्द्रियेषु पृथग् अन्नलेपनात्, तथाच्युताराधनमेव सर्वदेवाराधनम्, न पृथगित्यर्थः ॥ १ ॥

नारदजी प्रचेताओं से कहते है—जैसे वृक्ष की जड़ मे जल सीचने से उसकी डाल, पत्ते फल, फूल आदि सभी अंश हरे-भरे हो जाते हैं और जिस प्रकार भोजन के द्वारा प्राणों को तृप्त कर देने से समस्त इन्द्रियां तृप्त हो जाती हैं उसी प्रकार भगवान् विष्णु की पूजा से सभी देवताओ की पूजा हो जाती है ॥ १ ॥

—×—

यथाहि स्कन्धशाखानां तरोर्मूलेऽवसेचनम्।
एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि ॥ २ ॥

( ८।५।४९ ब्रह्मा )

किञ्च पूज्यान्तरपूजावद् आत्मनोऽपि पूजा स्यादित्याह—यथाहीति। भगवति पूजिते सात्मकं जगदेव पूजितं भवतीत्यर्थः ॥ २ ॥

ब्रह्माजी भगवान् विष्णु की स्तुति कर रहे हैं—जैसे वृक्ष की जड़ में जल सींचने से उसका धड़ और टहनियाँ भी सिंच जाती हैं, वैसे ही विष्णु के पूजन से सबका पूजन हो जाता है ॥ २ ॥

—×—

क्रियाकलापैरिदमेव योगिनः
श्रद्धान्विताः साधु यजन्ति सिद्धये।

भूतेन्द्रियान्तःकरणोपलक्षणं
वेदे च तन्त्रे च त एव कोविदाः ॥ ३ ॥
( ४।२४।६२ रुद्रः )

तथा च भगवन्तमेव ये पूजयन्ति त एव वेदागमतत्त्वज्ञा इत्याह—क्रियेति। ये कर्मयोगिनः, ये च ज्ञानयोगिनः इदं भगवत्स्वरूपमेव पूजयन्ति त एव कोविदाः, न तु एतदनादृत्य केवलज्ञानप्रवृत्ता अपि। तन्त्रे आगमे। कथंभूतं भगवत्स्वरूपम्? भूतेन्द्रियान्तःकरणैः अस्वतन्त्रैर्यदुपलक्ष्यते तत् नियन्तृरूपम्। सिद्धिरत्र यथेष्टा द्रष्टव्या ॥ ३ ॥

रुद्रजी प्रचेताओं के समक्ष विष्णु की स्तुति करते हैं—जो योगी लोग श्रद्धान्वित होकर भक्ति के द्वारा सिद्धि के लिए आपके उस साकाररूप की उपासना करते हैं जो पञ्चमहाभूत, इन्द्रिय एवं अन्तःकरण के नियन्ता हैं वे ही वेद और सात्त्वत तन्त्र के विद्वान् हैं किन्तु जो लोग आपके नित्यस्वरूप का अनादर कर केवल ज्ञानलाभ करना चाहते हैं वे विद्वान् नही हैं ॥ ३ ॥

—×—

चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा।
दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥ ४ ॥
अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः।
यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषम् ॥ ५ ॥
( १०।८४।३६-३७ मुनयः )

अत्र हेतुमाह द्वाभ्याम्—चित्तस्येति। अयमेव पन्थाः चित्तस्य उपशमो यस्मात् पूजनं सुगमः। योगो मोक्षोपायः ॥ ४ ॥

स्वस्त्ययनः स्वस्ति क्षेम ईयतेऽनेनेति तथा। स कः? यः श्रद्धया निष्कामतया आप्तवित्तेन न्यायोपार्जितद्रव्येण, अत एव शुक्लेन शुद्धेन पुरुषं भगवन्तम् इज्येत। भगवत्पूजारूप इत्यर्थः ॥ ५ ॥

मुनि लोग वासुदेव से कहते है—तत्त्वज्ञानी विद्वानों ने शास्त्र की दृष्टि से आपके पूजन को ही चित्त की शान्ति का साधन, मोक्ष का सुलभ उपाय और आह्लादकारी धर्म बताया है ॥ ४ ॥

शुद्ध वृत्ति से उपार्जित धन द्वारा श्रद्धापूर्वक भगवान् का पूजन करना ही गृहस्थ, ब्राह्मण, क्षत्रिय और वैश्य लोगों का मंगलकारी मार्ग है ॥ ५ ॥

—×—

**नैवात्मनः प्रभुरयं निजलाभपूर्णो**
**मानं जनादविदुषः करुणो वृणीते।**
**यद्यज्जनो भगवते विदधीत मानं**
**तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥ ६ ॥**

**( ७।९।११ प्रह्लादः )**

अत्र द्विजातिपदं गृहमेधिपदं च अग्निष्टोमादियज्ञरूपपूजाभिप्रायेण भगवत्पूजायां तु सर्वस्यैवाधिकार इति दर्शयन्नेव पूजकः परमेश्वरनिर्विशेषो भवतीत्याह—नैवात्मन इति। अयं प्रभुरीश्वरः अविदुषः अल्पज्ञानात् जनात् पूजां आत्मनोऽर्थेन वृणीते, प्राकृतवद् धनाद्यर्पणेन सम्मानं नेच्छति; यतो निजलाभेनैव पूर्णः। तर्कि पूजां नेच्छति ? तत्राह—करुणः कृपालुः, अतो वृणीत एव। तत्र हेतुः—यद्यत् यं यं मानं यद्वा यद्यस्माद्यद् येन धनादिना भगवते मानं पूजां विदधीत, तद् आत्मने तस्यैव भवतीत्यर्थः। तथा च मां पूजयित्वाऽयमपि पूज्यो भवत्विति कृपया पूजामिच्छतीति भावः। यथा मुखे कृततिलकादिश्रीः शोभा प्रतिबिम्बस्य भवति, न तु साक्षात्तस्यैव कर्तुं शक्यते, तथा च भगवन्मानं विना स्वस्यापि मानं न भवतीत्यर्थः ॥ ६ ॥

प्रह्लादजी भगवान् नृसिंह की स्तुति करते हैं—भगवान् स्वयं अपने आनन्दस्वरूप से परिपूर्ण हैं, तथापि दयालु होने के कारण अज्ञानी पुरुष की पूजा स्वीकार कर लेते है। वे अज्ञानियों से मान नहीं चाहते। लोग भगवान् को जो सम्मान देते हैं वह अपने को ही मिलता है। जैसे मुखपर जितनी अलङ्कार की शोभा की जाती है वही दर्पण के अन्दर प्रतिबिम्बित होकर दिखाई पड़ती है वैसे ही भगवान् की पूजा अपने को ही मिलती है ॥ ६ ॥

—×—

**नूनं विमुष्टमतयस्तव मायया ते**
**ये त्वां भवाप्ययविमोक्षणमन्यहेतोः।**
**अर्चन्ति कल्पकतरुं कुणपोपभोग्य-**
**मिच्छन्ति यत्स्पर्शजं नरकेऽपि नृणाम् ॥ ७ ॥**

**( ४।९।९ ध्रुवः )**

यदि च परमेश्वरे कृतो मानः स्वस्यैव तद्वन्मानप्रदो भवति, तदा तु स्वर्गादिफल मिनापि व्यर्थैवेत्याह ध्रुववचनेन—नूनमिति। भवाप्ययौ जन्ममरणे तद्विमोक्षहेतुं त्वाम् अन्यहेतोः कामाद्यर्थं ये अर्चयन्ति ते नूनं विमुष्टमतयो वञ्चितचित्ताः, यतस्ते कल्पतरुं त्वाम् अर्चितवन्तः। कुणपतुल्येन आत्मदेहेन उपभोग्यं सुखमिच्छन्ति, न चेच्छायोग्यं तदित्याह—यत्स्पर्शजं विषय-सम्बन्धजं सुखं तन्नरकेऽपि भवति। तथा च स्वर्गसुखमप्यप्रार्थनीयमिति भावः ॥ ७ ॥

ध्रुव भगवान् की स्तुति करते हैं—जो लोग आवागमन से छुटकारा देनेवाले कल्प-वृक्षरूप आपकी पूजा अपनी कामना पूर्ण होने के लिए करते हैं सचमुच उनकी मति आपकी माया से हर ली गई है, क्योंकि वे सकल मनोरथदात्री आपकी पूजा से मृतक शरीर द्वारा भोगने योग्य विषयसुख को चाहते है, जो मनुष्यों को नरक में भी प्राप्त हो जाते हैं ॥ ७ ॥

—×—

यत्पादयोरशठधीः सलिलं प्रदाय
दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम्।
अप्युत्तमां गतिमसौ भजते त्रिलोकीं
दाश्वानविक्लवमनाः कथमार्तिमिच्छेत् ॥ ८ ॥
(८।२२।२३ ब्रह्मा)

अत्र भगवत्पूजायां भावशुद्धिरेव परमा सामग्री, न तु दम्भादिदुष्ट बहुधनाद्यपीत्याह ब्रह्मवाक्येन—यत्पादयोरिति। यस्य तव पादयोः सलिलमात्रमपि प्रदाय सर्वोऽपि जनः उत्तमां गतिं प्राप्नोति तस्य तुभ्यमसौ बलिः त्रिलोकीं दाश्वान् दत्तवान्, आर्तिं कथं प्राप्नुयात्। तस्मात् शाठ्यं विहाय स्ववित्ताद्यनुसारेण भगवानर्चनीय इति भावः ॥ ८ ॥

राजा बलि के बाँधे जानेपर ब्रह्माजी भगवान् वामन से कह रहे हैं—लोग निष्कपट भाव से जिसके पादारविन्द में जल चढ़ाकर और दूब के नये अंकुरों से उत्तम पूजा कर उत्तम गति पाते हैं, तब इस बलि को दुर्गति कैसे होगी, जिसने बड़ी ही दृढता से आपको त्रैलोक्य का राज्य समर्पण कर दिया ॥ ८ ॥

—×—

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चयन्नुभयतः सिद्धिं मत्तो विदन्त्यभीप्सिताम् ॥ ९ ॥

( ११।२७।४९ श्रीकृष्णः )

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलितविवेक-
तैरभुक्तपरमहंसविष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्ध-
श्रीभगवद्भक्तिरत्नावल्याम् अष्टमं विरचनम् ॥

एवं भगवद्वाक्येन प्रकरणार्थमुपसंहरति—एवमिति । एवम् उक्तप्रकारेण माम् अर्चयन् उभयतः इहामुत्र च। वैदिकैरिति त्रैवर्णिकाभिप्रायेण तान्त्रिकैरिति सर्वाभिप्रायेणेति पूजाप्रकरणं स्वग्रन्थगौरवभयान्न लिख्यते ॥ ९ ॥

इति श्रीभक्तिरत्नावल्याः टीकायां कान्तिमालायाम् अष्टमं विरचनम् ।

भगवान् श्रीकृष्ण उद्धवजी से कह रहे हैं—इस प्रकार वैदिक और तान्त्रिक पूजन की विधि से मेरा पूजन करता हुआ जीव दोनों लोकों में अपनी अभीष्ट सिद्धि को पाता है ॥ ९ ॥



# अथ नवमं विरचनम्

ममाद्यामङ्गलं नष्टं फलवांश्चैव मे भवः।
यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥ १ ॥

( १०।३८।६ अक्रूरः )

अथ वन्दनं निरूपयितुं विरचनमारभते। तत्र तावद्भगवद्वन्दनप्रवृत्तिरपि सर्वतो मङ्गलमित्याह अक्रूरवाक्येन—ममेति। यत् यतः भगवतः अङ्घ्रिपङ्कजं नमस्ये नमस्करिष्यामि, अत इदानीमेव मम अमङ्गलं नष्टम्। भवश्च फलवान् भगवन्नमस्कारसामग्री प्राप्ता ॥ १ ॥

कंस के द्वारा भगवान् श्रीकृष्ण को वृन्दावन से मथुरा बुलाने के लिए जाते हुए रास्ते में अक्रूरजी अपने मन में सोच रहे है—आज मेरा अमंगल नष्ट हो गया और मेरा जन्म सफल हुआ, क्योंकि योगियों के ध्यानयोग्य भगवान् के पादारविन्द का नमस्कार करूँगा ॥ १ ॥

—×—

तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम्।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ॥ २ ॥

( १०।१४।८ ब्रह्मा )

प्रवृत्तिफलमुक्त्वा नमस्कारफलमाह ब्रह्मवाक्येन—तत्तेऽनुकम्पामिति। यस्मात्तव अनन्तो महिमा तत्तस्मात्तेऽनुकम्पां सुसमीक्षमाणः यदा भगवान् स्वयमेव कृपयिष्यति तदा मे श्रेयो भविष्यतीति चिन्तयन् स्वकर्मफलं भुञ्जान एव तपआदिना नातिक्लिश्यन् हृद्वाग्वपुर्भिर्मनोवाक्कायैः ते तुभ्यं नमः नमस्कारं विदधद् यो जीवेत स मुक्तिपदे मुक्तौ पदे वैकुण्ठे च दायभाक् भागभागी तत् प्राप्नोतीत्यर्थः ॥ २ ॥

ब्रह्माजी भगवान् श्रीकृष्ण से कह रहे हैं—इसलिए जो पुरुष अपने किये हुये फल का भोग करता हुआ और आपकी कृपा की प्रतीक्षा करता हुआ तन, मन, वचन से आपके चरणकमल का नमस्कार करता है वही मुक्ति पाने का अधिकारी है ॥ २ ॥

—×—

पतितः स्खलितो वार्तः क्षुधया विवशो गृणन्।
हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥ ३ ॥

( १२।१२।४६ सूतः )

अत्र असंभावनां निरस्यन् कैमुतिकन्यायेनाह—पतित इति । पतितः वृक्षात्, स्खलितो मार्गे, आर्तः ज्वरादिना क्षुधादिना वा विवशः अनिच्छन्नपि परैस्तथा वक्तुमास्कन्दितोऽपि हरये नम इति गृणन्नपि, न तु नमस्कारबुद्ध्या उच्चैर्महतोऽपि सर्वपातकान्मुच्यते मुक्तो भवति ॥ ३ ॥

सूतजी शौनक से कह रहे हैं—गिरता, फिसलता, कष्ट में पड़ा हुआ, छींककर विवश होकर भी जो उच्च स्वर से यदि 'हरये नमः' ऐसा कहे तो वह सब पापों से मुक्त हो जाता है ॥ ३ ॥

—×—

**खं वायुमग्निं सलिलं महीं च**
**ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ।**
**सरित्समुद्रांश्च हरेः शरीरं**
**यत्किञ्च भूतं प्रणमेदनन्यः ॥ ४ ॥**

**( ११।२।४१ कविः )**

**इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलितविवेक-**
**तैरभुक्तपरमहंसविष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्ध-**
**श्रीभगवद्भक्तिरत्नावल्यां नवमं विरचनम् ॥**

तस्मात् कृत्यमुपदिशन् प्रकरणार्थमुपसंहरति—खमिति । एवम् आकाशम्, ज्योतींषि नक्षत्राणि, सत्त्वानि प्राणिनः, सरित्समुद्रान् सरितश्च समुद्राश्च सरित्समुद्रान्, अलं विशेषितेन । यत्किञ्चिद् भूतं वस्तु । अनन्यः एतेषु भगवतोऽन्यत्वदर्शनशून्यो निष्कामो वा एतानि हरेः शरीरम् इति बुद्ध्या प्रणमेदित्यर्थः ॥ ४ ॥

**॥ इति भक्तिरत्नावल्याः टीकायां कान्तिमालायां नवमं विरचनम् ॥**

कवि विदेह से कह रहे हैं—आकाश, वायु, अग्नि, जल, पृथ्वी, सूर्य चन्द्र, ग्रह-नक्षत्रादि, जीवजन्तु, दिशायें, वृक्षादिक, नदी, समुद्र और जल जो कुछ चराचर पदार्थ हैं इन सबको भगवान् का रूप समझकर प्रणाम करना चाहिये ॥ ४ ॥

# अथ दशमं विरचनम्

यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः।
तस्य तीर्थपदः किं वा दासानामवशिष्यते॥ १॥

(९।५।१६ दुर्वासाः)

अथ दास्यं निरूपयितुं विरचनमारभते। तत्र तावद्भगवद्दासा एव सर्वतः कृतार्था इत्याह—यन्नामेति। यस्य भगवतो नामश्रवणमात्रेण पुमान् निमलः शुद्धो भवति, तस्य दासानां सर्वपुरुषार्थ-साधने फले वा किम् अवशिष्यते, अपि तु न किञ्चित्, दास्येनैव तस्य चरितार्थत्वादित्यर्थः॥१॥

दुर्वासा मुनि राजा अम्बरीष से कह रहे हैं—जिनका केवल नाममात्र सुनने से ही जीव निर्मल हो जाता है और जिनके पैर में सारे तीर्थ हैं ऐसे भगवान् के सेवकों को कोई भी पदार्थ दुर्लभ नहीं॥ १॥

—×—

तावद्रागादयस्तेनास्तावत्कारागृहं गृहम्।
तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण न ते जनाः॥ २॥

(१०।१४।३६ ब्रह्मा)

तत्र इह लोककृतार्थतामाह ब्रह्मवाक्येन—तावदिति। रागदयस्तेनाः धैर्यविवेकादि-सर्वार्थापहारकाः गृहं च कारागृहं बन्धनं स्थानं तावदेव, मोहः ममता तावदेव अङ्घ्रिनिगडः बन्धनम्। हे कृष्ण! यावत् जनाः ते तव न भवन्ति। त्वदीया दासा न भवन्ति। अयमर्थः—पूर्वं विषयेषु रागो धैर्यापहार्यासीत्, भगवद्दास्ये तु उत्पन्ने स एव रागो भक्तिसाधनेषु भवतीति गुण एव। एवं द्वेषोऽपि यः परेषु स्थितः सोऽपि पापद्वेषादिष्वेव जातः। एवं गृहं निरर्थककुटुम्ब-पोषणादिमहद्दुःखफलत्वात् कारागृहं स्थितम्। इदानीं भक्तिसाधनत्वेन तेष्वेव कृतो मोक्षाय भवतीति। तथा च विषयत्यागादिदुःखं विनापि दास्यं श्रेय इति इहोपकारकमिति भावः॥ २॥

ब्रह्मा जी भगवान् श्रीकृष्ण से कहते हैं—हे भगवन् श्रीकृष्ण! जब तक मनुष्य आपके भक्त नहीं बन जाते तब तक ही पुत्र कलत्रादि में रागादि उनके चोर के समान हैं, घर जेल-खाना के समान कष्टदायक है और मोह पैर की बेड़ी है॥ २॥

—×—

किं चित्रमच्युत तवैतदशेषबन्धो
दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ।
योऽरोचयत् सह मृगैः स्वयमीश्वराणां
श्रीमत्किरीटतटपीडितपादपीठः ॥ ३ ॥
( ११।२९।४ उद्धवः )

परत्र च भगवत्स्वरूपप्राप्तिफलमाह उद्धववाक्येन—किं चित्रमिति । हे अच्युत! अनन्यशरण्येषु दासेषु आत्मसात्त्वं त्वदधीनत्वं त्वन्मयत्वमिति यत् किं चित्रं नाश्चर्यमित्यर्थः । यतो यो भगवान् श्रीरामरूपेण मृगैः शाखामृगैः सह साहित्यं सख्यमिति यावत् प्रीत्या कृतवान्; कथंभूतः? ईश्वराणां ब्रह्मादीनां यानि श्रीमन्ति किरीटानि तेषां तटानि अग्राणि तैः पीडितं विलुठितं पादपीठं यस्य स्वयं तथाभूतोऽपि सन् अनुचरतामात्रतुष्टः मर्कटानपि सख्ये चकार, तस्य मनुष्याणां दासभूतानामुद्धरणे किमाश्चर्यमिति भावः ॥ ३ ॥

उद्धवजी भगवान् श्रीकृष्ण से कहते है—हे भगवन्! आप विश्वबन्धु हैं, आपने तो चक्रवर्ती राजाओं के मुकुट से अपने चरणों की पूजा पाकर भी वानरों से मित्रता की थी। जो लोग एकाग्रचित्त होकर आपकी सेवा में रत रहते हैं यदि आप उनके वश में हो जायँ तो इसमें आश्चर्य ही क्या है ? ॥ ३ ॥

—×—

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वानुसृतः स्वभावात् ।
करोति यद्यत्सकलं परस्मै
नारायणायेति समर्पयेत्तत् ॥ ४ ॥
( ११।२।३६ कविः )

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलितविवेकतैरभुक्तपरमहंसविष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्धश्रीभगवद्भक्तिरत्नावल्यां दशमं विरचनम् ॥

तदेवं सर्वकर्मार्पणरूपं दास्यस्वरूपं दर्शयन्नेव उपसंहरति—कायेनेति । आत्मना चित्तेन अहंकारेण वा अनुसृतो यः स्वभावः तस्मादपि यत्करोति । अयमर्थः—न केवलं विधितः कृतमेवेति नियमः, स्वभावानुसारिलौकिकमपि यदिति । तथा भगवद्गीतासु—यत्करोषीत्यादि ।

यद्वा कायादीनामेव कर्म नात्मन इत्याशङ्कयाह। अध्यासेनानुसृताद् ब्राह्मणत्वादिस्वभावात् यद् यत् करोषीत्यर्थः। तत् सकलं परस्मै परमेश्वराय नारायणायेति समर्पयेत्। तथा च सति सकलकर्मार्पणरूपं दास्यं निर्वहतीति भावः ॥ ४ ॥

**॥ इति भक्तिरत्नावल्याः टीकायां कान्तिमालायां दशमं विरचनम् ॥**

कवि विदेह से कहते हैं—मनुष्य को चाहिए कि शरीर, वचन, मन, इन्द्रिय, बुद्धि, चित्त या स्वभाव से प्रेरित होकर जो कुछ करे उसे नारायण को समर्पण कर दे ॥ ४ ॥

—:०:—

# अथैकादशं विरचनम्

अहो भाग्यमहोभाग्यं नन्दगोपव्रजौकसाम् ।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥ १ ॥
( १०।१४।३२ ब्रह्मा )

अथ सख्यं निरूपयितुं विरचनमारभते, तत्र भगवत्सखानां महिमा वक्तुं ज्ञातुं न शक्यते इत्याह—अहोभाग्यमिति । अहोभाग्यमहोभाग्यमिति पुनरुक्तयादरेण भाग्यस्य सर्वथा अपरिच्छेद्यत्वमुक्तम् । नन्दगोपव्रजौकसामिति सामान्यपदेन गवादीनामपि ग्रहण तेषामपि कृष्णे नन्दादिवद् विश्वासाद्यविशेषात् । यन्मित्रं येषां मित्रं स्वरूपं 'कृष्णस्तु भगवान् स्वयम्' इति वचनात् परमानन्दं निरतिशयसुखस्वरूपम् । तथा च प्राकृतमित्रस्य परस्परोपकारित्वापेक्षया कदाचिद्विषयविरोधान्मैत्रीभङ्गःस्यात् । कृष्णे तु परमानन्दे न तथा, किन्तु तेषामानन्द एवेति भावः । प्राकृतमित्रस्य देशान्तरगमनेन विश्लेषदुःखमपि भवति, कृष्णे मित्रे न तथेत्याह—पूर्णमिति । यथा च गतागतादिरहितमित्यर्थः । अत्र यद्यपि कृष्णस्यापि गोचारणादिना विश्लेषदुःखं भवति, तथापि तच्चिन्तयाप्यानन्दः प्राप्त्यानन्दनियमः प्राकृतमित्रेषु न तथेति भावः । यद्वा कृष्णस्यापि पूर्णत्वे सर्वव्यापकत्वे ज्ञाते मथुराद्वारकावासिन्यपि कृष्णे तेषां विश्लेषदुःखं नाभूदेव, प्राकृतमित्रे तु व्यापकतानिश्चय एव न भवतीति भावः । यतः पूर्णम् अत एव सनातनं नित्यम् । तथा च न प्राकृतमित्रवत् तद्व्यतिरेकदुःखशङ्कापीति भावः ॥ १ ॥

ब्रह्माजी ब्रजवासियों का सौभाग्य वर्णन कर रहे हैं—परमानन्दघन पूर्ण सनातन ब्रह्म जिनके मित्र हैं नन्दराजा के ब्रज में निवास करने वाले उन लोगों का महान् भाग्य है ॥ १ ॥

—×—

एवं मनः कर्मवशं प्रयुङ्क्ते, अविद्ययात्मन्युपधीयमाने ।
प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत् ॥ २ ॥
( ५।५।६ ऋषभः )

इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलितविवेकतैरभुक्तपरमहंसविष्णुपुरीग्रथितायां श्रीभागवतामृताब्धिलब्धश्रीभगवद्भक्तिरत्नावल्याम् एकादशं विरचनम् ॥११॥

अथ सख्यस्य फलं व्यतिरेकमुखेन दर्शयन् उपसंहरति ऋषभदेववाक्येन–एवमिति। एवं यथा पुनः संसार एव भवति तथा पूर्वकृतं कर्म कर्तृभूतम्। मनः कर्मभूतं वशं प्रयुङ्क्ते, पुनः धर्मनिष्ठ करोति।

जीवन्मुक्तकर्मव्यावृत्त्यर्थमाह––अविद्ययेति। अविद्ययोपहितस्य पुंसः पूर्वकर्मणा तथैव कर्मणि मनः प्रयते यथा संसारो न निवर्तत इत्यर्थः। तर्हि कथं निस्तारस्तत्राह—मयि मय्येव वासुदेवे सर्वाश्रये यावन्न प्रीतिः सख्यं तावत् देहयोगेन सम्बन्धेन सति चास्मिन् दुःखेन च न मुच्यते। अर्थात् मत्सख्येनैव सर्वानर्थनिवृत्तिरिति मया सख्यं कुर्यादेवेति भावः॥ २॥

**इति श्रीभक्तिरत्नावल्याः टीकायां कान्तिमालायामेकादशं विरचनम्॥ ७॥**

ऋषभदेवजी अपने पुत्रों से कह रहे है—जब तक आत्मा इस प्रकार अविद्या से ढँकी रहती है तब तक पूर्वजन्म के कर्म मन को वश मे रखते है। अतः जब तक मुझ वासुदेव में भक्ति नही होती तब तक संसार से मोक्ष नहीं मिलता॥ २॥



इच्छाद्या अभिहिताः । ईक्षा आत्मविद्या, त्रयी कर्मविद्या, नयदमौ तर्को दण्डनीतिश्च विविधा वार्ता जीविका तदेतत्सर्वं निगमस्याथजातमन्तर्यामिणः स्वसुहृदः परस्य पुंसः स्वात्मार्पणसाधनं चेत्तर्हि सत्यं मन्ये सत्यपरत्वात्, अन्यथा तदसत्यमेव। यद्वा तदेतदखिलं निगमस्य त्रैगुण्य-विषयस्य प्रतिपाद्यं मन्ये, सत्यं पुनस्त्रैगुण्यलक्षणं परस्य पुंसः स्वात्मार्पणमेवेत्यर्थः। तदुक्तं भगवता "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन" इति ॥ २ ॥

इति श्रीभक्तिरत्नावल्याः टीकायां कान्तिमालायां द्वादशं विरचनम् ।

प्रह्लाद असुर बालकों से कह रहे है—धर्म, अर्थ और काम को त्रिवर्ग कहते है । आत्म-विद्या, कर्मकाण्ड, तर्क, दण्डनीति और कृषि आदि विविध जीविकाएं कही गई है। यह त्रैगुण्य-विषय वेद का प्रतिपाद्य है। अतएव असत्य है। सत्य तो अपने परम हितैषी भगवान् को आत्मसमर्पण करना ही है। अन्य सब असत्य ही है ।। २ ।।



# अथ त्रयोदशं विरचनम्

देवर्षिभूताप्तनृणां पितृणां
न किङ्करो नायमृणी च राजन्!
सर्वात्मना यः शरणं शरण्यं
गतो मुकुन्दं परिहृत्य कर्त्तम्॥ १॥
(११।५।४१ करभाजनः)

अथेह यथोक्तवैदिकलौकिकस्वविहितसाधनहीनानां भगवच्चरणप्रवेश एव शरणम् इत्यभिप्रेत्य विरचनमारभते। तत्र भगवच्छरणप्रविष्टः देवादिसेवात्यागेऽपि न तेषामभियोज्य इत्याह—करभाजनवाक्येन देवर्षीति। आप्ताः पोष्णः कुटुम्बिनः इतरे देवादयः पञ्च यज्ञदेवताः। देवानां होमे, ऋषीणामध्ययने, भूतानां बलिदाने, पितृणां श्राद्धादौ एव देवादीनाम् आराधनादौ न किङ्करः न दासवन्नियोज्यः। तदकरणे च न ऋणी न पापीत्यर्थः। देवादीनां भगवदभक्तः ऋणी। अत एव तेषां किङ्करः तदर्थं नित्यं पञ्चयज्ञादिकर्ता। तथा च स्मृतिः—"हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्" इति। अयं तु न तथा। कोऽसौ? सर्वात्मना यः मुकुन्दं शरणं गतः। कर्तं भेदम्, कृत्यमिति पाठे होमादीत्यर्थः। यद्वा सर्वात्मना सर्वात्मकत्वेन तथा भगवच्चरणस्य जगदेव प्रीणातीति भावः॥ १॥

करभाजन विदेह से कहते हैं—हे राजन्! जिसने अन्य कर्तव्यों को त्यागकर सर्वात्मना रक्षा करनेवाले भगवान् श्रीकृष्ण की शरण ली है, उस मनुष्य पर देव, ऋषि, भूत, कुटुम्बी एवं पितरों का ऋण नहीं रहता। अर्थात् यज्ञ, श्राद्ध, बलि आदि न करने से उनको पाप नहीं होता, क्योंकि वे सर्वात्मना सर्वाश्रय भगवान् की शरण हैं॥ १॥

—×—

किं दुरापादनं तेषां पुंसामुद्दामचेतसाम्।
यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः॥ २॥
(३।२३।४२ मैत्रेयः)

न केवलं देवादीनामनभियोज्यः सर्वसुखभागी च भवतीत्याह—किं दुरापादनमिति। किं दुरापादनं सर्वं सुलभमित्यर्थः। उद्दामचेतसां धीराणां व्यसनम् इहामुत्र संसारदुःखं तस्यात्ययो यस्मात्॥ २॥

मैत्रेय विदुरजी से कह रहे हैं—जिन्होंने दुःख दूर करनेवाले भगवान् के चरणों का आश्रय लिया है ऐसे उदारचरित पुरुषों को कौन वस्तु दुर्लभ है ॥ २ ॥

—×—

शारीरा मानसा दिव्या वैयासे ये च मानुषाः ।
भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम् ॥ ३ ॥
( ३।२२।३७ मैत्रेयः )

तत् नेह व्यसनात्ययत्वं दर्शयति मैत्रेयवाक्येन—शारीरा इति । दिव्या आन्तरीक्षाः, मानुषाः शत्रुप्रभवाः, भौतिकाः शीतोष्णादिप्रभवाः क्लेशहेतवः कथं बाधन्ते न बाधन्त इत्यर्थः । वैयासे ! व्यासपुत्र ! हे विदुर ॥ ३ ॥

हे विदुर ! जिसने भगवान् की शरण ले ली है, उसको न शारीरिक क्लेश होता है, न मानसिक ही, न अन्तरिक्ष के उपद्रव उसे पीड़ित करते है । और न शत्रुओं द्वारा प्रयुक्त क्लेश ही उसे कभी हो सकते है ॥ ३ ॥

—×—

यत्र निर्विष्टमरणं कृतान्तो नाभिमन्यते ।
विश्वं विध्वंसयन् शौर्य्यवीर्य्यविस्फुरितभ्रुवा ॥ ४ ॥
( ४।२४।५६ रुद्रः )

परत्र व्यसनात्यत्वमाह—यत्रेति । यत्र भगवत्पादमूले अरणं शरणं प्रविष्टं जनं कृतान्तः कालो ममायं वश्य इति नाभिमन्यते । वीर्य्यं प्रभावः, शौर्यमुत्साहः ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवा विश्वं विध्वंसयन्नपि ॥ ४ ॥

रुद्र भगवान् से कहते हैं—अपने बल और शौर्य से अपनी भृकुटि चढ़ाकर सारे संसार का नाश करनेवाले यमराज भी आपके चरण के शरणागत भक्तपर हाथ नहीं लगा सकते हैं ॥ ४ ॥

—×—

अविस्मितं तं परिपूर्णकामं
स्वेनैव लाभेन समं प्रशान्तम् ।
विनोपसर्पत्यपरं हि बालिशः
श्वलाङ्गुलेनातितितर्ति सिन्धुम् ॥ ५ ॥
( ६।९।२२ देवाः )

नन्वेवमपि देवतान्तरशरणादस्य को विशेषस्तत्राह—अविस्मितं निरहङ्कारं कुतूहलशून्यं वा अप्रतारकमित्यर्थः। कुतः, प्रशान्तं रागादिशून्यं तच्च कुतः, स्वेनैव लाभेन परिपूर्णकामं तच्च कुतः समममुपाधिशून्यं परिच्छेदशून्यम् एवंभूतं परमेश्वरं विना अपरं यः शरणार्थमुपसर्पति स हि बालिशः अज्ञः, यतोऽसौ शुनो लाङ्गूलेन समुद्रमतितितर्ति अतितर्तुमिच्छतीत्यर्थः। यथा तेन समुद्रतरणं न भवति तथा निरीश्वराश्रयेण व्यसनार्णवतरणं न सम्भवतीत्यर्थः ॥ ५ ॥

देवता लोग आदि पुरुष भगवान् की स्तुति करते हैं—जो मनुष्य निरहङ्कार आत्मस्वरूप के लाभ से परिपूर्णकाम परमेश्वर को छोड़कर दूसरे की शरण लेता है वह वैसा ही मूर्ख है जैसा कि कोई पुरुष कुत्ते की पूँछ पकड़कर समुद्र पार होना चाहता हो। सारांश यह है कि जैसे कुत्ते की पूँछ से समुद्र का तैरना सम्भव नहीं है वैसे ही ईश्वर-शरणागति के बिना व्यसनरूपी समुद्र के पार जाना सर्वथा असम्भव है ॥ ५ ॥

—×—

बालस्य नेह शरणं पितरौ नृसिंहः
नार्त्तस्य चागदमुदन्वति मज्जतो नौः।
तप्तस्य तत्प्रतिविधिर्य इहाञ्जसेष्ट-
स्तावद्विभो तनुभृतां त्वदुपेक्षितानाम् ॥ ६ ॥
(७।९।१९ प्रह्लादः)

ननु दुःखैस्तप्तस्य तत्प्रतीकारो लोकेन प्रसिद्ध एव वेदेऽपि तत्तद्देवताभक्तिः प्रसिद्धा। अतः कथं भगवान् एव शरण तत्राह प्रह्लादवाक्येन—बालस्य नेति। भो नृसिंह! तप्तस्य तत्प्रतिविधिस्तत्प्रतीकार इह लोके योऽञ्जसा इष्टः स त्वयोपेक्षितानां तावदेव क्षणमात्रमेव, न त्वात्यन्तिकः तदेवाह—बालस्य पितरौ शरणं रक्षकाविह न भवतः ताभ्यां पाल्यमानस्यापि दुःखदर्शनात्। क्वचिदजीगर्तादिषु ताभ्यामेव तद्वधदर्शनाच्च। आर्तस्य रोगिणः अगदमौषधं शरणं कृतेऽप्यौषधे मृत्युदर्शनात्। उदन्वति समुद्रे मज्जतः पुंसो नौः शरणं तया सह मज्जनदर्शनात्, अतस्त्वमेव शरणमित्यर्थः। अथवैवं याख्येम्—तप्तस्य प्रतिविधिर्य इह तावत्प्रसिद्धः स त्वदुपेक्षितानां किम् अञ्जसेष्टः, अपि तु नेष्ट एव। यद्वा यस्तावदिह प्रतिविधिरिष्टः स किम् अञ्जसा? नैवाञ्जसेति योज्यम्। बालस्येत्यादि पूर्ववदेव ॥ ६ ॥

प्रह्लादजी भगवान् नृसिंह से कह रहे हैं—हे प्रभो! दुःखी लोगों के दुःख को दूर करने के लिए जितने साधन इस संसार में कहे गये हैं, वे उनके काम नहीं आते, जिनकी आपने

उपेक्षा कर दी है। माता-पिता अपने बालकों की रक्षा नहीं कर सकते, दवा रोगी को बीमारी से बचा नहीं सकती और समुद्र में डूबते हुए मनुष्य को जहाज भी नहीं बचा सकता ॥ ६ ॥

—×—

कः पण्डितस्त्वदपरं शरणं समीयाद्
भक्तप्रियादृतगिरः सुहृदः कृतज्ञात्।
सर्वान् ददाति सुहृदो भजतोऽभिकामा-
नात्मानमप्युपचयापचयौ न यस्य ॥ ७ ॥
( १०।४८।२६ अक्रूरः )

तस्माद् भगवन्तं विहाय यः परमाश्रयेत् स मूर्ख इत्याह अक्रूरवाक्येन—कः पण्डित इति। त्वदपरं त्वत्तोऽन्यं कः पण्डितः सन् अपण्डित इत्यर्थः। ऋतगिरः सत्यवाचस्त्वत्तोऽपरं शरणं कः समीयाद् गच्छेत्। कथंभूतात् त्वत्तः? सुहृदः निरपेक्षोपकारकाद् यो भवान् भजतः सुहृदः सर्वानभिमतान् कामान् ददाति। किं च आत्मानमपि। यस्य तव उपचयापचयौ न स्तः ॥ ७ ॥

अक्रूरजी भगवान् श्रीकृष्ण से कह रहे हैं—वह कौन विद्वान् है जो आप जैसे भक्त-वत्सल, यथार्थ सत्यवादी, सुहृद् और थोड़े में कृतज्ञ होनेवाले परमेश्वर को छोड़कर दूसरे किसी की शरण लेगा। आप न केवल अपने भक्तों की कामनाओं को पूर्ण करते हैं, किन्तु अपने स्वरूप को भी अर्पण कर देते है ॥ ७ ॥

—×—

अहो बकीयं स्तनकालकूटं
जिघांसयापाययदप्यसाध्वी।
लेभे गतिं धात्र्युचितां ततोऽन्यं
कं वा दयालुं शरणं व्रजेम ॥ ८ ॥
( ३।२।२३ उद्धवः )

ननु परमेश्वरशरणमात्रेण कथमेतावन्निःश्रेयांसि दयालुत्वात् समर्थत्वाच्च भगवत इत्याह उद्धववाक्येन—अहो इति। अहो आश्चर्यं दयालुतायाः, हन्तुमिच्छयापि स्तनयोः संभृतं कालकूटं विषं यमपाययत् बकी पूतना असाध्वी दुष्टचित्ता धात्र्या यशोदाया उचितां गतिं लेभे भक्तवेषमात्रेण यः सद्गतिं दत्तवान् इत्यर्थः। ततोऽन्यं कं वा भजेम स एव शरणमित्यर्थः ॥ ८ ॥

उद्धवजी विदुर से कह रहे हैं—अहो ? पूतना बड़ी भाग्यवती है। इस दुष्टा ने तो भगवान् कृष्ण को मारने की इच्छा से अपने स्तनों में मिला हुआ विष पिलाया। पर उस दुष्टा की भी वही गति हुई जो माता यशोदाजी को मिलनी चाहिए थी। दयालुता की हद हो गई। भला इनसे बढ़कर कौन दयालु है जिसकी शरण ली जाए ?

—×—

**तापत्रयेणाभिहतस्य घोरे**
**सन्तप्यमानस्य भवाध्वनीश।**
**पश्यामि नान्यच्छरणं तवाङ्घ्रि-**
**द्वन्द्वातपत्रादमृताभिवर्षात् ॥ ९ ॥**

(११।१९।९ उद्धवः)

**तदेव स्पष्टयति उद्धववाक्येन—तापत्रयेणेति। तापत्रयेणाभिहतस्य अत एव सन्तप्तमानस्य पुंसः तवाङ्घ्रिद्वन्द्वातपत्रादन्यच्छरणं न पश्यामि नास्तीत्यर्थः। न केवलम् आतपत्रात् किं च अमृतमभितो वर्षति यत् तस्मात् ॥ ९ ॥**

उद्धवजी भगवान् श्रीकृष्ण से कहते है—हे भगवन् ! इस भयंकर संसार मार्ग में त्रिविध (आधिभौतिक, आधिदैविक और आध्यात्मिक) दुःखों से सन्तप्त मुझको अमृतवर्षण करनेवाले आपके चरणकमलरूपी छत्र के अतिरिक्त दूसरी शरण नहीं दीख पड़ती है ॥ ९ ॥

—×—

**चिरमिह वृजिनार्तस्तप्यमानोऽनुतापै-**
**रवितृषषडमित्रोऽलब्धशान्तिः कथञ्चित्।**
**शरणद समुपेतस्त्वत्पदाब्जं परात्म-**
**न्नभयमृतमशोकं पाहि मापन्नमीश ॥ १० ॥**

(१०।५१।५८ मुचुकुन्दः)

**तदेव मुचुकुन्दवाक्येन शरणं प्रविशन् ग्रन्थमुपसंहरति—चिरमिति। हे ईश ! आपन्नम् आपद्ग्रस्तं मा मां पाहि, यतस्ते पदाब्जम् अहं शरणं समुपेतः। हे परमात्मन् हे शरणद इति प्राकृतोपयोगि कथंभूतोऽहं संसारे चिरं वृजिनैः कर्मफलैः आर्तः पीडितः अनुतापैः वासनाभिः तप्यमानः। अत एव अवितृषाः अवितृप्ताः षट्चक्षुरादयोऽमित्रा यस्य अत एव क्वाप्यलब्धशान्तिः कथंभूतं त्वत्पदाब्जम् अभयं सर्वतोभयशून्यम्। ऋतम् अविनाशि। अत एव अशोकम् ॥१०॥**

राजा मुचुकुन्द भगवान् श्रीकृष्ण से कहते हैं—हे शरण देनेवाले भगवन् ! मैं अधिक दिनों से इस संसार में पापों से पीडित हूँ, पश्चात्तापों से व्यथित हूँ और मेरे छः चक्षुरादि इन्द्रियाँ अभी तक तृप्त नहीं हुई हैं, इस कारण अपने आप शान्ति नहीं मिलती है। अतः मैं अभय, अमृत एवं शोकरहित आपके चरणकमलों की शरण में आया हूँ। अब आप मेरी विपदाओं से रक्षा कीजिए[1] ॥ १० ॥

—×—

**एवं श्रीश्रीरमण भवता यत्समुत्तेजितोऽहं**
**चाञ्चल्ये वा सकलविषये सारनिर्द्धारणे वा ।**
**आत्मप्रज्ञाविभवसदृशैस्तत्र यत्नैर्ममैतैः**
**साकं भक्तैरगतिसुगते तुष्टिमेहि त्वमेव ॥ ११ ॥**

तदेवं स्वकर्मग्रथनफलं भगवति समर्पयति—एवमिति। चाञ्चल्ये इदं बाल्यकृतं परमार्थनिरूपणं वा तत्तु त्वत्प्रेरणेनैव, अतस्त्वदाज्ञा परिपालिता। तथा च त्वमेव भक्तसहितः प्रीतो भवेत्यर्पयामीत्यर्थः ॥ ११ ॥

यहाँ से समाप्ति तक विष्णुपुरीजी इस ग्रन्थ के सम्बन्ध में अपना अभिप्राय व्यक्त कर रहे है—हे लक्ष्मीकान्त ! आपसे उत्साहित होकर चाहे अपने लड़कपन की चञ्चलता से चाहे तत्त्वनिरूपण के उद्देश्य से मैंने यत्नपूर्वक इस भक्तिमाला को गूँथा है। हे अशरणशरण ! अपनी बुद्धि के वैभव के अनुसार मेरे इस प्रयत्न से भक्तों के साथ आप प्रसन्न हों। तात्पर्य यह है कि आपकी प्रेरणा होनेपर मैंने आपकी आज्ञा का पालन किया। अब आप प्रसन्न होकर इसे स्वीकार करें ॥ ११ ॥

—×—

**साधूनां स्वत एव सम्मतिरिह स्यादेवभक्त्यर्थिना-**
**मालोक्य ग्रथनश्रमं च विदुषामस्मिन् भवेदादरः ।**
**ये केचित् परकृत्युपश्रुतिपरास्तानर्थये मत्कृतिं**
**भूयो वीक्ष्य वदन्त्ववद्यमिह चेत् सा वासना स्थास्यति ॥ १२ ॥**

---

१. इस तेरहवें विरचन में इस श्लोक तक श्रीमद्भागवत के भक्तिविषयक श्लोकों का संग्रह है। आगे ग्यारहवें श्लोक से सोलहवें श्लोक तक (११–१६) विष्णुपुरीजी के रचित ६ श्लोक हैं।

स्वग्रन्थे सर्वसम्मतियोग्यतामाह—साधूनामिति। इह भक्तिरत्नावल्यां साधूनां भक्तानां सम्मतिः पाठचिन्तनादिपरिग्रहाय स्वीकारः स्यादेव, यतः भक्त्यर्थिनां यथा विषयिणां तत्प्रशंसायां विदुषां युक्तिपरिशीलनशीलानां तादृशभक्तिहीनानामपि अस्मिन् ग्रन्थे आदरो भवेदेव। कथङ्कारम्? मम ग्रन्थे नानाप्रकरणश्लोकानाम्, परम्पराकाङ्क्षया लिखने श्रमम् आलोच्य विचार्य क्वचित्प्रमादशङ्कायामपि आदरो भवेदेव। ये तु केचिद् विरलाः परकृतीनाम् उपश्रुतिपराः निन्दापरास्तानहम् अर्थये याचे। किं तत्? इमां मत्कृतिं भूयो वारंवारं वीक्ष्य भवन्तः इह मत्कृतौ अवद्यं दूषणं तदा वदन्तु चेत् यदि एतावत् सुभक्तिमहिमसु ज्ञातेषु सा वासना परनिन्देच्छा स्थास्यति। अयमर्थः—बहुधैतद् ग्रन्थपरिशीलने भगवद्भक्तिरेव उदेष्यति, ततश्च कुतः परनिन्दादुर्वासना इति भावः॥ १२॥

इस भक्तिरत्नावली में भक्ति के अभिलाषी साधुओं की सम्मति तो अपने आपही होगी और विद्वान् लोग भी इसके संकलन करने में मेरे परिश्रम का ख्यालकर इसका आदर करेंगे। जो लोग दूसरे की निन्दा करने का अभ्यास रखते है उनसे मेरी यही प्रार्थना है कि इसे अच्छी तरह बार-बार पढ़कर मेरी रचना में दोष बतावें, यदि इतनी बड़ी भक्ति की महिमा जानने पर भी कुछ संस्कार रह जाए॥ १२॥

—×—

एष स्यामहमल्पबुद्धिविभवोऽप्येकोऽपि कोऽपि ध्रुवं
मध्ये भक्तजनस्य मत्कृतिरियं न स्यादवज्ञास्पदम्।
किंविद्याः शरघाः किमुज्ज्वलकुलाः किं पौरुषं किं गुणा-
स्तत्किं सुन्दरमादरेण रसिकैर्नोपीयते तन्मधु॥ १३॥

**इति श्रीमत्पुरुषोत्तमचरणारविन्दकृपामकरन्दबिन्दुप्रोन्मीलितविवेक-**
**तैरभुक्तपरमहंसविष्णुपुरीप्रथितायां श्रीभागवतामृताब्धिलब्ध-**
**श्रीभगवद्भक्तिरत्नावल्यां त्रयोदशं विरचनम्॥**

इदानीं स्वदोषमङ्गीकृत्यैव ग्रन्थमहिम्नैव सर्वोपादेयत्वं ग्रन्थस्याह—एष स्यामहमिति। एषोऽहम् अल्पो बुद्धिविभवो यस्य सोऽपि एकोऽपि शिष्यगुर्वादिगोष्ठीप्रतिष्ठात्याज्यत्वमपि परदेशाप्रसिद्धकुलशीलादिरपि स्यामेव। तथापि इयं भगवद्भक्तिविषया मत्कृतिः भक्तजनसभासु अवज्ञास्पदम् उपेक्षाविषयो न स्यात्, आदृतैव स्यात्, स्वमाहात्म्यात्। अत्र दृष्टान्तः—शरघाः मधुमक्षिकाः, किंविद्याः का विद्या यासाम्, किं वा उज्ज्वलं कुलम्, किं वा पौरुषं पराक्रमः परोपकारादिः, को वा गुणः शमदमादिर्यासां न किमपीत्यर्थः। तथापि तन्मधु ताभिः सञ्चितं

मधु स्वभावतः सुन्दरं यतः अत एव आदरेण श्रद्धादिना रसिकैर्विज्ञैर्नापीयते ? अपि तु पीयते एवेत्यर्थः। तदेवमौद्धत्यपरीहारोऽपि द्रष्टव्य इति सर्वरमणीयमिति ॥ १३ ॥

इति श्रीभक्तिरत्नावल्याः टीकायां कान्तिमालायां त्रयोदशं विरचनम् समाप्तम् ॥
आदर्शपुस्तकलेखसमयः संवत् १६९९ ॥

मुझे पूर्ण आशा है कि मुझ अल्पबुद्धि, असहाय एवं परदेशी की इस रचना का भक्तजनों की गोष्ठी में अनादर नहीं होगा। क्या मधुमक्षिका द्वारा सञ्चित मधु का रसिक लोग आदर से पान नहीं करते ? यद्यपि मधुमक्षिओं में न विद्या है, न उनका कुल ही समुज्वल है, न उनमें पौरुष है और न गुण ही है। तात्पर्य यह है कि जैसे स्वभाव से ही मधुर मधु का सब लोग बड़े चाव से स्वाद लेते हैं वैसे ही इस ग्रन्थ की स्वाभाविक मधुरिमा के कारण इसके निर्माता में विद्या, कुलीनता, पौरुष और गुण न होनेपर भी लोग इसका अवश्य समादर करेंगे ॥१३॥

—×—

इत्येषा बहुयत्नतः खलु कृता श्रीभक्तिरत्नावली
तत्प्रीत्यैव तथैव सत्प्रकटिता तत्कान्तिमाला मया।
अत्र श्रीधरसत्तमोक्तिलिखने न्यूनाधिकं यत्त्वभूत्
तत्क्षन्तुं सुधियोऽर्हत स्वरचनालुब्धस्य मे चापलम् ॥ १४ ॥

मैंने भगवान् की प्रसन्नता के लिए बड़े प्रयत्न से इस भक्तिरत्नावली का संग्रह किया है और उसकी टीका कान्तिमाला भी लिखी है। इस टीका में श्रीधरजी[1] की कही हुई बातों को लिखने में यदि कुछ न्यूनाधिक्य हो गया हो तो विद्वज्जन मेरी रचना के लोभ से वशवर्तिता जानकर मेरी चपलता को क्षमा करेंगे ॥ १४ ॥

वाराणस्यां महेशस्य सान्निध्ये हरिमन्दिरे।
भक्तिरत्नावली सिद्धा सहिता कान्तिमालया ॥ १५ ॥

महायज्ञ - शर-प्राण-शशाङ्कगणिते शके।
फाल्गुने शुक्लपक्षस्य द्वितीयायां सुमङ्गले ॥ १६ ॥

---

१. यहाँ 'श्रीधर' शब्द के दो अर्थ हैं—एक भगवान् नारायण और दूसरा श्रीमद्भागवत के प्रसिद्ध टीकाकार श्रीधरस्वामी जी।

वाराणसी में भगवान् विश्वनाथ जी के समीप विष्णुमन्दिर में शक १५५५ फाल्गुन-शुक्ल द्वितीया तिथि शुभद मंगलवार को भक्तिरत्नावली और उसकी टीका कान्तिमाला समाप्त हुई[1] ॥ १५–१६ ॥

इति त्रयोदश विरचन

श्रीकृष्णार्पणमस्तु

—:※:—

१. अन्त के तीन श्लोक ( १४. १५. १६ ) विष्णुपुरीजी के हैं या अन्य किसी लेखक के—इस विषय को लेकर विद्वानों में बड़ा मतभेद है, क्योंकि इन तीन श्लोकों पर विष्णुपुरीजी की टीका नही हैं। कुछ वङ्गीय वैष्णव विद्वानों की राय है कि ये अन्तिम तीन श्लोक विष्णुपुरीजी के लिखे नही है। मालूम पड़ता है किसी ने पीछें मिला दिया है। प्राचीन हस्तलेखों के देखने से जान पड़ता है कि लेखक लोग कहीं कहीं पर अपने लिखने का समय डाल दिया करते थे। यदि ये तीनों श्लोक पुरी जी के मान लिये जाएँ तो श्री चैतन्य महाप्रभु के साथ उनके साक्षात्कार की बात संगत नही होती, क्योंकि १५५५ शक के पूर्व ही महाप्रभु का तिरोभाव हो चुका था।

अन्य विद्वानों का मत है कि दूसरे को क्या आवश्यकता है कि वह किसी ग्रन्थ में उसकी रचना के समय का उल्लेख कर दे। जब १५५५ शक में ग्रन्थनिर्माण का स्पष्ट उल्लेख है तो इसका अपलाप कैसे किया जा सकता है? इन श्लोकों में केवल ग्रन्थनिर्माण का समय ही नही दिया गया है किन्तु स्थान का भी स्पष्ट उल्लेख है कि काशी में विश्वनाथ जी के समीप विष्णुमन्दिर में पुरी जी ने इस ग्रन्थ को लिखा था। श्लोक में सिद्धा पद दिया गया है, सिद्धा से रचिता अर्थ सुसंगत प्रतीत होता है। अतः किसी अन्य लेखक के ये तीन पद्य है यह कहना असंगत मालूम पड़ता है।

प्रत्येक विरचन के अन्त में श्लोक एवं टीका की पुष्पिकाएँ भिन्न-भिन्न है। अतः प्रतीत होता है कि दोनों दो समय में लिखित हैं। सम्भव है महाप्रभु के समय मूलमात्र लिखा गया हो, बाद में उसपर टीका की गयी हो और टीका के अंग होने के कारण इन तीनों श्लोकों पर टीका नही है।

# अकारादिक्रमेण भक्तिरत्नावलीश्लोकानां

## प्रथमपादसूची

# सटीकभक्तिरत्नावल्याः शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १० | समस्तमस्तकमणि | समस्तमस्तकमणि |
| १ | ११ | नां | तां |
| १ | १६ | ( हस्तामलकस्सोत्र ८ ) | ( हस्तामलकस्तोत्रम्–८ ) |
| ३ | ६ | बृहद्दूखं | बृहद्दुःखं |
| ५ | २ | दूरान्निशम्य महिमानमुपेत्य पार्श्वमन्तः | दूरान्निशम्य महिमानमुपेत्य पार्श्व- |
| ५ | ३ | प्रविश्य भागवतामृताब्धेः । | मन्तः प्रविश्य शुभभागवतामृताब्धेः । |
| ६ | १ | कण्ठेति | कण्ठ इति |
| ८ | ६ | सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः | सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै— |
| ८ | ७ | परः पुरुष | र्युक्तः परः पुरुष |
| १२ | ६ | भुक्तपरिणामवत | भुक्तपरिणामवतो |
| १२ | १ | निप्कामा | निष्कामा |
| १२ | १६ | नैकात्मतां मे स्पृहयन्ति | नैकात्मतां मे स्पृहयन्ति केचिन् |
| १२ | १७ | केचिन् महत्पादसेवाभिरता मदीहाः | मत्पादसेवाभिरता मदीहाः |
| १३ | ८ | रूपाणि दिव्यानि वरप्रदानि सार्कं | रूपाणि दिव्यानि वरप्रदानि |
| १३ | ६ | वाचां स्पृहणीयां वदन्ति | साकं वाचं स्पृहणीयां वदन्ति |
| १३ | २० | अण्वी ॰ | अण्वीं |
| १४ | ५ | अथो विभूतिं मम | अथो विभूतिं मम मायिनस्ता- |
| १४ | ६ | मायिनस्तामैश्वर्यमष्टाङ्गमनुप्रवृत्तम् । | मैश्वर्यमष्टाङ्गमनुप्रवृत्तम् । |
| १७ | ८ | दुःखछिदं | दुःखच्छिद |
| १७ | ११ | ( ४।८।२२ सुनीतिः ) | ( ४।८।२२–२३ सुनीतिः ) |
| १८ | १२ | फल्ग्वप्युरुदीनवत्सलः | फल्ग्वप्युरु दीनवत्सलः |
| २७ | २० | वारुणीदिगन्तं | वारुणीदिग्गतं |
| २८ | २२ | ( ७।७।३८ ) | ( ७।७।३८ प्रह्लादः ) |
| २९ | ७ | ( ७।७।३९ ) | ( ७।७।३९ प्रह्लादः ) |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २६ | १६ | ( ७।७।४० ) | ( ७।७।४० प्रह्लादः ) |
| ३७ | २५ | ( १०।४७।५६।६१ उद्धवः ) | ( १०।४७।६१ उद्धवः ) |
| ३८ | १६ | भजनां | भजतां |
| ४० | २० | यत परस्मै निवेदनम् | यत् परस्मै निवेदनम् ॥ ७७ ॥ |
| ४६ | २ | मद्भक्त्या पेतमात्मानं | मद्भक्त्यापेतमात्मानं |
| ४६ | १८ | ( ११।१४।२३–२४ श्रीकृष्णः ) | ( ११।१४।२४ श्रीकृष्णः ) |
| ५१ | ६ | तादृशभक्ते दुर्ल्लभत्वं | तादृशभक्तेर्दुर्ल्लभत्वं |
| ५३ | ११ | तनुजन्म यत्कृते ॥ | तरुजन्म यत्कृतम् ॥ |
| ६७ | १८ | ( ५।५।२३.२४ ऋषभः ) | ( ५।५।२–३ ऋषभः ) |
| ६६ | २५ | ( ५।१३।२१–२२ रहूगणः ) | ( ५।५।२२ रहूगणः ) |
| ७० | ६ | स्पृशत्य नर्थापगमो | स्पृशत्यनर्थापगमो |
| ७८ | १० | ( ११।२।५ वासुदेवः ) | ( ११।२।५ वसुदेवः ) |
| ७८ | १६ | ( ११।२।५–६ वसुदेवः ) | ( ११।२।६ वसुदेवः ) |
| ८१ | १५ | ( ३।३१।३२–३४ ) | ( ३।३१।३२–३४ कपिलः ) |
| ८२ | ५ | ( ११।२६।३१ ) | ( ११।२६।३१ श्रीकृष्णः ) |
| ८२ | १४ | ( ११।२६।३२ ) | ( ११।२६।३२ श्रीकृष्णः ) |
| ८२ | २२ | ( ११।२६।३३ ) | ( ११।२६।३४ श्रीकृष्णः ) |
| ८३ | ८ | ( ११।२६।३४ ) | ( ११।२६।३४ श्रीकृष्णः ) |
| ८४ | १७ | प्रह्लाद | प्रह्लाद |
| ८५ | ११ | ( ६।४।१८।२० शुकः ) | ( ६।४।१८–२० शुकः ) |
| १०८ | २६ | ब्रह्मादीनाभीश्वराद् | ब्रह्मादीनामीश्वराद् |
| ११२ | ११ | ( शुकः ) | (            शुकः ) |
| ११३ | ६ | कारणन्तराभावादिति | कारणान्तराभावादिति |
| ११७ | १३ | ( १०।३१।६ ) गोघः | ( १०।३१।६ गोप्यः ) |
| १२२ | ५ | ( १२।१२।४६–५० सूतः ) | ( १२।१२।४८–४६ सूतः ) |
| १२३ | १६ | ( १।५।१०–११ नारदः ) | १।५।१०–११ नारदः<br>१२।१२।५०–५१ सूतः |